इति पितृपादप्रावण्यस्यापि प्रदर्शनादयं तत एवाधीतवेदान्तादिविद्यः स्यादिति संभाव्यमानं तथात्वेन सुनिश्चितं भवति नयप्रकाशिकाप्रथमश्लोकेन । स हि

"श्रीमदात्रेयनाथार्यान गुरून्नः परमान् गुरून् ।
श्रीरामप्रमुखान् सर्वान् श्रीमद्रामानुजं मुनिम् ॥"

इत्येवम । तस्य नाथ इति नाम नूनं रङ्गनाथ इति नामैकदेश इति सुवचम्, यथा विशिष्टाद्वैतसिद्धान्तकूटस्थस्योभयवेदान्तप्रवर्तकाचार्यस्य भगवन्नाथमुनेर्नाथ इति नामधेयं रङ्गनाथ इति नाम्न एवैकदेश इति । स्तोत्रभाष्ये हि श्रीमन्निगमान्तदेशिकैरेवमिदमभाष्यत । एवं हि नामैकदेशनिर्देशादविशेषादात्मानं प्रत्यपि तस्य नाथत्वमाविष्क्रियत इव । तस्य श्रीभगवन्नाथमुने र्नामधेयमिति वा तावदेवास्य नामधेयमकारि प्रथमत एवेत्यपि न भवति न साम्प्रतम् । एवमात्रेयनाथसूरिस्सन्नयमात्रेय इत्यपि विदितमासीत् । अन्यदुपरिष्टात् ।

## परमगुरवः

सोऽयं श्रीराममिश्रान् परमगुरुत्वेन निर्दिशन् तत्प्रशिष्यतां स्वस्मिन् प्रकटयतीव ।

श्रीराममिश्राश्च षडर्थसंक्षेपादिग्रन्थनिर्मातार इति न्यायसिद्धाञ्जनादितोऽपि (बुद्धिपरिच्छेदे)निश्चितमेतत् । षडर्थसंक्षेपः, षडर्थसंग्रह इत्यपि तत्रैव व्यवहृतः । श्रीमति च रहस्यत्रयसारे सिद्धोपायशोधनाधिकारे "उभयाधिष्ठानञ्चैकं शेषित्वम्" इति षडर्थसंक्षेपवाक्यमुदाहृत्य श्रीश्रीशयोरुभयोर्जगान्निरूपितं शेषित्वमेकमिति स्थापितम् । तत्रैषां श्रीराममिश्राणां सोमासियाण्डान् इति द्रमिडनामधेयं निरदेशि । नूनमत्र नयद्युमणौ सिद्धान्ते स्वाभिसंहितार्थसंवादितयोदाहृताः कारिका अपि तदीयाः स्युः । भगवद्यामुनमुनीनामाचार्याः 'मणक्काल्नम्बि' इति प्रख्याताः,

"अनुज्झितक्षमायोगमपुण्यजनबाधकम् ।
अस्पृष्टमदरागं तं रामं तुर्यमुपास्महे ॥"

इति श्रीदेशिकस्तुताः श्रीराममिश्रास्त्वन्ये । प्रकृतास्तु भगवद्रामानुजस्वामिपादान्तेवासिनः ।

## संप्रदायतात्कालिकस्थितिः

अस्य च महाप्रज्ञस्य मेघनादारिसूरेः काले भगवद्भाष्यकाराभिमत-प्रमाणप्रमेयपरिगणनप्रकारे सयूथ्यकलहः स्थित इति एतद्ग्रन्थ एव दर्शयति । प्रायशो मतप्रवर्तकाचार्यैर्ये न कण्ठोक्ताः केचनांशाः, केवलं व्यञ्जनयोत्प्रेक्ष्याः सन्ति, तत्रार्वाचीनानामभिप्रायभेदाः प्रादुष्षन्तीति सर्वमतसाधारणोऽयमर्थः । पश्यत सिद्धान्तलेशसंग्रहं सर्वशास्त्रपारावारपारीण - अद्वैतपरमाचार्य - श्रीमदप्पय्यदीक्षितविरचितम् ; यत्र हि श्रीशङ्करभगवत्पादभाष्यादिग्रन्थप्रवचन-पराणां प्राचीननवीनप्रस्थानभेदभिदुराणां बहूनामाचार्याणाम् ईश्वरलक्षण-जीवलक्षण - जीवैक्यनानात्व - मायाविद्याद्यनेकप्रमेयनिरूपणविषये पारस्परिकं विरोधं प्रत्यक्षं पश्यामः । एवमनन्तभेददर्शनेऽपि ब्रह्मैकमेव सत्यमिति सिद्धान्तस्तत्र साधारणो भवतीति प्रधानार्थाविरोधे अन्येंऽशाः बहुलं भिद्यमाना अपि मतैक्यं न घ्नन्ति । तथैव चिदचिद्विशिष्टं ब्रह्मतत्त्वं परमार्थ इति भगवद्रामानुजस्वामि-पादसिद्धान्तानुयायिषु प्रमाणप्रमेयपरिगणनविषयविविधविमतिसमुन्मेषेऽपि न विवेकिनां केशाकेशिप्रसक्तिः कियत्यपि । दर्शयति चायं नयप्रकाशिकायां (१३४२ पु.) प्रमाणपरिगणनमादौ कुर्वाणः, "प्रत्यक्षादिप्रमाणपञ्चकस्वीकारे भाष्यकारकालसमीपकालवर्तिविष्णुचार्यविरचितग्रन्थे प्रमाणपञ्चकस्यैव भाष्य-काराभिमतत्वेन लक्षितत्वदर्शनाच्च । न च तद्ग्रन्थे भाष्यविरुद्धस्य जीवविभुत्वादिप्रसाधनस्य दर्शनात् तत्र नाऽऽप्तिरिति वाच्यम् - कण्ठोक्तार्थ-विरुद्धस्य त्यागेऽप्यविरुद्धांशत्यागायोगात् । न हि प्रत्यक्षश्रुतिविरुद्ध सर्ववेष्टनस्मृतेः त्यागे सर्वस्मृतीनां त्यागः । अतः प्रमाणपञ्चकाङ्गीकारो भगवतो भाष्यकारस्य" इति ।

## तत्कृतप्रमेयगणनभङ्गी

अथ तानि प्रमाणानि लक्षयित्वा सिद्धान्तेऽस्मिन् प्रमेयपरिस्थितिमप्या-वेदयति, "अस्माकं प्रमेयसंग्रहस्तु" इत्यादिना । "द्रव्यगुणकर्माणि त्रीण्येव पदार्थाः" इत्युपक्रम्यावान्तरभिदा अपि विवृण्वन् कालादिविषये वैमत्यमप्युद्भाव्य स्वसंमतप्रक्रियां साधयति च । तत्र तत्र स्वोक्तार्थे बहूनां विमतिं संभावयन्नेव पण्डितान् प्रार्थयते—

> "चिरकालप्रयत्नेन बहुशास्त्रनिरीक्षणात्
> महता चावधानेन कृतस्यास्य निरीक्षणम् "

आदावेव नयप्रकाशिकायाम् ।

अथ तत्र "द्रव्यं द्विविधं चेतनमचेतनञ्च" इति पूर्वं विभज्य, "अचिच्च पुनर्द्विविधं प्राकृतमप्राकृतञ्च" इत्युक्त्वा तदुपपादनानन्तरम्, "चिद्द्रव्यञ्च त्रिविधं परजीवज्ञानभेदात्" इत्याह । अत्र च चेतनाचेतनरूपेण स्वदर्शितद्वैविध्यवर्त् ज्ञानपर्यायचिद्ग्रहणेन चिदचिद्भेदेनापि द्वैविध्यं मनसिकृत्यायं विभाग इति ज्ञायते । न चेत्, चेतनमेव चेत् चित्पदविवक्षितं स्यात्, अचेतनद्वैविध्यं चेतनत्रैविध्यञ्चोक्तरूपं न संगच्छेत । अथ स्वावसरे दिक्कालयोः कथं परित्याग इति प्रश्नं समाधाय महता संरम्भेण कालपार्थक्यं परास्यति । एतदर्थे चात्र नयद्युमणावपि किञ्चित् प्रकरणं प्रावर्ति । उपरि, "वायुव्यतिरिक्तमहाभूतानि चाक्षुषाणि । आकाशस्यापि चाक्षुषत्वं भाष्य एव साधितम्" इति कञ्चिद् विशेषमुपक्षिप्य गुणनिरूपणघट्टे, "रागद्वेषादयस्तु मनोवस्थाभेदा एव; न गुणाः । रागाद्युपादानेन, 'सर्वं मन एव इति श्रवणात् । सुखदुःखे च ज्ञानविशेषावेव । बुद्धिरपि महत्तत्त्वावस्थैव । धर्माधर्मावपि कर्मविशेषावेव, नात्मनो गुणौ । भावनाख्यसंस्कारोऽप्यचिद्गुण एव ।" इत्यादिकमुक्त्वा, "एतत् सर्वं भाष्यकारोक्तावेव प्रतीयते । विस्तर-भयान्निवृत्तम् । प्रासङ्गिकोऽयं घोषः । प्रकृतमनुसरामः" इत्युपसंहरति । एवं तत्र रागद्वेषादेर्मनोवस्थात्वं वर्णितवानपि अत्र नयद्युमणौ प्रमेयनिरूपणे (२५९. पु.) धर्मभूतज्ञानावस्थाविशेषत्वम् 'इच्छा द्वेषः सुखं दुःखम्' इति गीताभाष्यानुगुणमेवाह ।

## श्रीदेशिकग्रन्थेषु निष्कर्षः

नूनमेवंविधविविधक्षोभशमनविधित्सयैव सर्वतन्त्रस्वतन्त्रैः कवितार्किक-सिंहैः श्रीमन्निगमान्तमहादेशिकैः न्यायसिद्धाञ्जनम्, न्यायपरिशुद्धिः, सर्वार्थसिद्धि-सहितस्तत्त्वमुक्ताकलापश्चेति सिद्धान्तनिर्धारणार्था निबन्धा न्यबध्यन्त । यत्र सर्वं साकल्येण समैक्षि, सम्यगुपादेशि चान्ते,

"निष्कष्टुं कश्चिदन्यः प्रभवति भगवल्लक्ष्मणाचार्यमुद्राम्
अक्षुद्राचार्यशिक्षाशतगुणितमतेरप्रमत्तान्न मत्तः ॥"

इति । पदार्थानां द्रव्यगुणकर्मरूपेण त्रैविध्यमेतदिष्टं मानयाथात्म्यनिर्णये वरदविष्णुमिश्रैरप्युक्तमिति अद्रव्यपरिच्छेदे (न्यायसिद्धाञ्जने) श्रीदेशिकैरदर्शि । भट्टपराशरपादैः पुनः, 'द्रव्यं जातिर्गुणः कर्मेत्यसावर्थश्चतुर्विधः' इति

चातुर्विध्यं वर्णितमित्यप्युक्तम् । परं तु तत्र न निर्भर इत्यपि तत्रैव विमृष्टम् । एवं न्यायसिद्धाञ्जने प्राच्यग्रन्था इव श्रीभगवद्भाष्यकारानुयायिनां पूर्वाचार्याणां ग्रन्था अपि बहवः सितासितरूपास्तत्र तत्र निर्दिष्टाः; य इमे—

१. नीतिमाला—(ज. प.) नारायणार्याणाम्
२. न्यायकुलिशम्—(बु. प.) वादिहंसाम्बुदाचार्याणाम्
३. न्यायसुदर्शनम्—(ज. प.) वरदनारायणभट्टारकाणाम्
४. प्रज्ञापरित्राणम्—(जी. प ) ,,
५. प्रमेयसंग्रहः—(ज प.) श्रीविष्णुचित्ताचार्याणाम्
६. उपनिषद्व्याख्यानम्—(अद्र. प.) ,,
७. श्रीभाष्यविवरणम् ,, श्रीराममिश्राणां वा
८. संगतिमाला—(जी. प.) ,,
९. षडर्थसंक्षेपः—(ज. प.) श्रीराममिश्राणाम् (सोमाशियाण्डान्)
१०. तत्त्वरत्नाकरः ,, भट्टपराशरपादानाम्
११. तत्त्वसारः—(ज. प.) वरदगुरूणाम्
१२. मानयाथात्म्यनिर्णयः—वरनविष्णुमिश्राणाम्

श्रीभाष्यविवरणवत् वेदार्थसंग्रहविवरणमप्यासीत् तदेककर्तृकमित्यपि तत एवावसीयते । श्रीराममिश्रविरचितं वेदार्थसंग्रहव्याख्यानमपि परिमाणनिरूपणप्रकरणेऽत्रोदाहारि । अधिकरणसारावल्याम्, "विष्णुचित्तैर्विवत्रे" इत्युक्तत्वात् विवरणं श्रीविष्णुचित्तार्यविरचितमिति केचित् । प्रमेयसंग्रहस्तु विवरणादन्य एवेत्यपि आकाशनिरूपणप्रकरणे "प्रमेयसंग्रहश्चे"ति पृथग्ग्रहणाद् ज्ञायते । श्रीराममिश्रा विवरणकारा इति अस्मादेव ग्रन्थादवगम्यते । अत्र हि जडद्रव्यपरिच्छेदान्ते, "द्वितीयस्तु पक्षो विवरणकाराङ्गीकृतः । षडर्थसंक्षेपे हि अचितो जीवेश्वरयोः" इत्यादि, "विवरणेऽपि अयमेवार्थः प्रपञ्चितः" इति च । अधिकरणचिन्तामणितः पूर्वाचार्यादिविषयो ज्ञायमानस्तावत्—'एके मेघनादारिसूरिप्रभृतयः । सेनेश्वरार्याः श्रीरङ्गराजान्तरङ्ग-परिकरतल्लजाः शारीरकाधिकरणार्थसंग्रहपद्यनिर्मातारः । वकुलभृत्किङ्कराः-वरदनारायणभट्टारकाः न्यायसुदर्शनकर्तारः । श्रीविष्णुचित्ताः शठमर्षणगोत्र-प्रभवाः प्रमेयसंग्रहकर्तारः' इति । अत्र विवरणं श्रीविष्णुचित्तकृतत्वेन नोक्तम् । अस्तु वा विवरणं विभिन्नं तत्तत्कर्तृकमिति ।

## एतद्ग्रन्थतादात्विकपरिचयः

एवं बहून् ग्रन्थानादाय युक्तायुक्तविमर्शव्यग्राणां श्रीमन्निगमान्तमहादेशिकानां ग्रन्थेऽस्मिन् एतन्मेघनादारिसूरीणां वा तद्ग्रन्थानां वा निर्देशस्यादर्शनात् एतदीयग्रन्थास्तदा चक्षुर्गोचरतामध्यगुर्न वेति विमृश्यम । तावता एतदभिप्रायस्तैः कथमप्यवधृत इत्यत्र न विशयः । यदेवमाहुरधिकरणसारावलौ—

"द्वाभ्यामादौ प्रतीतिप्रजननमुदितं सिद्धरूपे परस्मिन्
द्वाभ्यां वैफल्यशङ्का तदनु परिहृता शास्त्रतज्जन्यबुद्धयोः ।
औचित्यानेकभाष्यस्वरसगतिमती प्राक्तनी वर्तनीयम्
शास्त्रारम्भार्थमेकं त्रितयमिह परं शास्त्रमित्याहुरेके ॥" २४

"यत् तत् सेनेश्वरार्यैरगणि वकुलभृत्किङ्करैरङ्ग्यकारि
व्यासार्यैर्न्यासि च द्विः श्रुतमिति विशदं विष्णुचित्तैर्विवव्रे ।
अश्रौषं शेषकल्पादहमपि विदुषो वादिहंसाम्बुवाहात्
अद्धा निर्धार्यतेऽनश्वतुरधिकरणी ब्रह्मचिन्तोपयुक्ता ॥" २५

इति प्रथमसूत्रमुपोद्घातः, सर्वमन्यत् शास्त्रमित्येतदीयं मतमनूद्य तद्बहूनामसंमतमिति, असांप्रदायिकमिति च । एवमिच्छाद्वेषादीनां मनोवस्थात्वमेभिर्दर्शितमात्मसिद्धिश्रीभाष्यादिदत्तहस्तावलम्बमिव प्रणीतमधिकृत्य सुबहु विचारेऽवतीर्य, "बुद्धिरेवोपाधिभेदात् सुखदुःखेच्छाद्वेषप्रयत्नरूपे"ति स्वाभिमतमर्थम, "अश्रुतसिद्धान्तस्य पुस्तकनिरीक्षणादयं दोषः" इत्याद्युपक्षेपपूर्वम्, विमृश्य, "यद्यपि इच्छाद्वेषसुखदुःखान्यात्मधर्मभूतानि, तथाप्यात्मनः क्षेत्रसंबन्धप्रयुक्तानीति क्षेत्रकार्यतया क्षेत्रविकारा उच्यन्ते" इति गीताभाष्यानुवादेन स्थापयद्भिरर्थादेतदाशयो निराकृतः । अथवा स्यादनेन नयप्रकाशिकायामन्यथोक्तेऽप्यत्र नयद्युमणौ इच्छाद्वेषादेर्ज्ञानावस्थारूपत्वस्यैवोक्तेः प्रागेव दर्शितत्वात् अन्यग्रन्थकारमतनिरास एवायमिति । कालद्रव्यस्यातिरिक्ततामुपपादयन्तोऽपि यत एतदाशयं न विशिष्योद्भाव्य तत्र तत्र वक्तव्ये परिहारे श्रीदेशिकचरणाः स्वग्रन्थेषु व्याप्रियन्त, परमतिरिक्ततां समगृह्णन्, तेन ज्ञायते साक्षादेषां ग्रन्थस्तेषां दृष्टिगोचरो नाभूदिति । एते खल्वत्र कालतत्त्वशोधनप्रकरणे जैननिराकरणभाष्यसूक्तिमधिकृत्य सुदूरपरिशीलनेन विष्णुपुराणादिवचनानामाशयान्तरोपवर्णनेन च कालपार्थक्यं परिहरन्तः, "यदि यत्र

क्वापि भाष्यकारीयग्रन्थेष्वपि द्रव्यत्वाद्युक्तिः स्यात्, सा प्रदर्शनीया तस्य पृथग्द्रव्यत्ववादिभिः । सा च शिरसोह्यते प्रमाणपूर्वकम् । तदात्वे द्रव्यत्वमङ्गीक्रियतेऽस्माभिः" इति, "भाष्यकारेभ्योऽर्वाचीनोक्तिषु तदुक्तिविरुद्धासु तासु नास्माकं विश्वासः । वयं हि भाष्यकारमतानुसारिणः" इति च स्वाभिमतार्थस्थापने संरम्भमधिकं प्रदर्शयन्ति । न खल्वीदशांशविशेषशोधनवैयग्री श्रीदेशिकग्रन्थेषु विस्तरेण लक्ष्यते । यद्वा सर्वार्थसिद्ध्यादौ किंचिद्विशदमुक्ततया दृष्टस्यापि ग्रन्थस्योपेक्षैवोद्दिष्टेति । एवं प्रमाणसंख्याविषयेऽप्येषामन्येषाञ्च संप्रदायनिष्णातानामाशयो विभिन्न इति च व्यक्तम् । एवमनेकेष्वंशेषु अभिप्रायभेदो भगवद्भाष्यकारसिद्धान्तानुयायिषु तदात्वे नूनमासीत् । परं तु यदा श्रीमन्निगमान्तमहादेशिकैः प्रायः सर्वं परिशोध्य प्रागुक्तरीत्या अनन्यसामान्यया प्रमाणतर्कोपन्यासवैखर्या निष्कम्पनिर्धारितम्, तदनन्तरं सर्वेऽपि प्रायेणैकरस्यं बिभ्रतः प्राक्तनान् ग्रन्थानपि परितत्यजुरित्यप्यालोचनमवसरमश्नुते । पण्डितभूयिष्ठे प्राक्तनेपि काले यदीदृशी परिस्थितिः, का कथा साम्प्रतमिति सर्वे विदाङ्कुर्वन्तु । उपरि च क्रमेणैतदाशयं यथावसरं संगृह्य विमृक्ष्यामः । अनेनास्मिन् ग्रन्थे विचारिता विषयास्तावत्—

| | | | |
|---|---|---|---|
| १. | शरीरलक्षणम, | ७. | श्रुतिलिङ्गादि, |
| २. | अध्ययनविधिः, | ८. | यथार्थख्यातिः, |
| ३. | स्वतः प्रामाण्यम्, | ९. | उपोद्घातांशः, |
| ४. | वाक्यार्थः, | १०. | कालतत्त्वम, |
| ५. | अन्विताभिधानम्, | ११. | प्रमाणम्, |
| ६. | शब्दः, | १२. | प्रमेयम् |

इत्येते । अत्र लक्ष्मीः, कैवल्यमित्यादिविषयगोचर एतदाशयोऽपि प्रसङ्गादाविष्कृतोऽस्ति । सर्वमिदं पश्चात् प्रदर्शयिष्यते ।

## ग्रन्थगरिमा

'ब्रह्मविद्यां सर्वविद्याप्रतिष्ठाम्' इति मुण्डकोपनिषदाह । एकविज्ञानेन सर्वविज्ञानं भवतीति प्रतिज्ञैवानेनापि वचनेनानूद्यत इति सर्वे संमन्यन्ते । अर्थान्तरमप्युपनिषदियमाकलयतीव । सर्वाण्यपि विद्यास्थानानि प्रतिष्ठां लभन्ते ब्रह्मविद्यया । वेदस्याङ्गभूतानि विद्यास्थानानि । वेदे कृत्स्ने वेदान्तः प्रधानभूतः । सा ब्रह्मविद्या । तदधिगमार्थत्वाभावे सर्वाणि

विद्यास्थानानि सम्यगभ्यस्तान्यपि नार्थाय कल्पन्ते । एवं सर्वविद्याधिगमाभावे ब्रह्मविद्याऽपि यथावद्दुरधिगमा । भगवान् बादरायणश्च शारीरके सर्वाणि तत्त्वदर्शनानि विमृश्य निरस्य वेदान्तप्रमेयं प्रतिष्ठापयन् स्वशास्त्रस्य सर्वशास्त्रविद्वदेकसुज्ञानत्वं गमयति । पूर्वोत्तरमीमांसयोरैकशास्त्र्यमाकलयन्तो विशिष्टाद्वैतिनः तदनिच्छन्तोऽद्वैतिनश्चाविशेषेण पूर्वमीमांसोपजीवनं विना यथा वेदान्तशास्त्रं दुरधिगममध्यवसीयेत, तथैव व्याख्याग्रन्थान् विहितवन्तः सन्ति । नूनं सूत्रकृदेव क्रियासमभिहारेण, "तदुक्त"मिति पूर्वमीमांसां स्वशिष्यकृतां सादरमुपनिबध्नन् अनुयायिनामीदृशीं शैलीं शिक्षयामासेव । एवं बहुसापेक्षस्यास्य वेदान्तशास्त्रस्य प्रमेयं किञ्चिद् विचारयितुं प्रवृत्त एवायं श्रीमेघनादारिसूरिः परमतविलक्षणस्य वेदान्तमतस्य व्युत्पादनानुकूलं निखिलशास्त्रविज्ञानं नितरामधिगतवानिति एतद्ग्रन्थ-शोधनमुद्रणादिकं नैवानायासेन कर्तुं शक्यम् । एवम्भूतस्य यदि मातृका अपि परिमिताः, उपलब्धा अपि विशिष्टज्ञानविधुरलेखकप्रमादविपरीतग्रहादि-भावितविविधविपर्ययाश्च, तर्हि कथं निर्दुष्टमेव निःशेषं मुद्रयितुं निपुणा भवेम । एवमपि यथाशक्ति प्रयत्य यत् कृतम्, तत्र गुणमात्रग्राहिभिः विद्वद्भिः प्रसन्नैः संतोष्टव्यमिति प्रार्थ्यते । अत्र निपुणेन विदुषा नितान्ताव-धानेन लेखकेन लिखितः श्लोकोऽपि ग्रन्थान्ते संयोजितो दर्शनमर्हति । वृत्त एवं सामान्यतो भूमिकाविषयः । अथ विशेषरूपेण ग्रन्थप्रमेयं विमष्टुमुपक्रम्यते ।

## प्रमेयविमर्शः

प्रणम्य श्रीहयग्रीवं परमार्थो विमृश्यते ।
मेघनादारिसूरीन्द्रनयद्युमणिवर्णितः ॥

श्रियःपतेर्भगवतः सर्वेश्वरस्य सार्वभौमं सौहार्दमेव प्राधान्येनोपजीव्य सनातनो वेदघण्टापथस्तदातदा संभूतैः संप्रदायलब्धसारार्थैः सात्त्विक-प्राज्ञसंमान्यैः सर्वतोमुखवैदुष्यविख्यातैर्विशिष्टाचार्यैः तत्तत्समयसंप्रस्थवस्थित बाह्यजनक्षोभभावितविपरीतभावपरीतलोकविकीर्णकण्टककश्मलाद्यपनयनेन विज्ञा-नज्योतिषा विशोध्यमानः साधूनामशेषाणामनपायप्रचारानुकूलो वरीवर्तीति विश्वतो निश्चप्रचमेतत् । यदि वेदाङ्गभूतानि व्याकरणादीन्यपि, स्वयं यमंशमुपपाद्याङ्गभावमनुभवितुमात्मानमलभन्त, तस्मिन्नंशे परमस्थित्वा अन्यस्मिन्न-न्यंशे पदं निक्षिपन्ति अयथायथं व्याप्रियमाणानि तावत्यंशे अविश्वसनीयान्याप-

द्यन्ते, तन्न चित्रमेतत् यत् सांख्ययोगादीनि तन्त्राणि प्रतिनियतार्थप्रतिपादन-मात्रेऽनुपरम्य अप्रस्तोतव्यार्थप्रस्तावे प्रगल्भमानानि कालक्रमेण कात्स्न्र्येनोपेक्ष्याणि संवृत्तानीति। मुख्यतया प्रतिपिपादयिषितोऽप्यर्थः प्रमाणमूर्धन्यं वेदं दूरतो विनिक्षिप्य परप्रीणनमनोरथैः पुरुषैस्तर्केण केवलेन प्रतिपाद्यमानः, यथा सोऽर्थः तथा तदुपपादनपाटवपौष्कल्यहान्या विकलं प्रतिपाद्यमानः प्रामाणिकाग्रेसरैः परिह्रियमाणो भवतीति न किञ्चिदवशिष्यते तादृशस्तन्त्रतोऽधिगन्तव्यम्। तदधुना तत्त्वसरणौ वेदान्त एव नः शरणम्।

सोऽयं वेदान्तोऽपि सर्वशाखासमाहारपरामर्शनीयप्रमेयः,

"इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति॥"

इति स्मरणानुसरणेन सर्वशाखासाक्षात्कारिपरमर्षिप्रणीतेतिहासपुराणालोडन-पूर्वमेव निर्धारणीयतत्त्वः तथैव निर्धारणप्रवृत्तैः प्राच्यैर्बहुभिराचार्यैर्विचारपथ-मानीतो विविधमतरूपेण विवृत्तो बहुश्रुतानामपि बुद्धिस्थैर्यसंपत्तिनिरोधके वर्त्मनि विहितप्रचार एव लक्ष्यते। एवमपि ततोऽन्यस्योत्तारणोपायस्य विरहात् तत्रान्यतममाद्रियमाणोऽपि जनः अनतिविप्रकर्षात् अव्याजानुग्रहमूर्तिना भगवता अनतिचिरेणोद्ध्रियमाणः सर्वज्ञविज्ञाते सत्ये पथि प्रेरितः तेनैव पथा सचरमाणः समधिगन्तव्यं निःश्रेयसमधिगमिष्यतीति प्रतिपत्तव्यम्। स्थावरतिर्यगादिदशासु स्थितानपि जीवान् आदेशवश्यतानुकूलं द्विपाज्जन्म लम्भयन् शनैःशनैर्बाह्यादिमतेभ्यो निवर्तयन् स भगवान् सगोत्रकलहक्षुब्धहृदयान् परं सर्वथा संत्यक्ष्यतीति न खलु कश्चिन्निरङ्कुशं निरूपयितुं पारयेत्। तस्माद् विविधवेदान्तमतविवादविसंष्ठुलमानसैरपि विस्रम्भवद्भिरेव भाव्यम्, यदस्ति विनैव विशेषतो विलम्बं समीहितसिद्धिः। अत एव मिथो वादप्रतिवादविवृद्धात्यन्तरङ्गत्वबुद्ध्या प्रेमतरङ्गितान्तरङ्गैरेव परस्परसंसक्तैर्भाव्यं प्राज्ञप्रकाण्डैः सौभ्रात्रं वहद्भिरिति च नापूर्वं निवेद्यमस्ति। तत्र विशिष्टाद्वैत-सिद्धान्तमनुरुध्य साम्प्रतं भूमिकां लेखितुं लब्धावसरोऽहमेवमुपक्षिपामि—

## प्राच्यनव्यविभागः

वेदान्तवास्तवार्थवर्णनेदम्परेषु मतेषु प्राच्येषु नव्येषु च कतमत् परिग्राह्यमित्यत्र केचिदेवमाशेरते, यत्—किमनेन पुराणनवीनभावपर्यालोडनेन?

"तदात्वे नूतनं सर्वमायत्यां च पुरातनम् ।
न दोषायैतदुभयं न गुणाय च कल्पते ॥"

इति विमृश्योपपन्नमूरीकार्यमिति । तदिदमन्वारुह्यवादेनाऽऽविरकारि श्रीदेशिकचरणैः,

"यतिक्ष्माभृद्दृष्टं मतमिह नवीनं तदपि किम् ?
ततः प्रागेवान्यत् वद तदपि किं वर्णनिकषे ।"

इति । परे पुनरित्थं परिशीलयितुमीहन्ते, तर्कमात्राधीनसिद्धिषु मतेषु प्राच्यनव्यताविवादस्य स्यान्नामावसरः । यदा पुनः शास्त्रप्रामाण्येनोपपत्तिभिरेकमवस्थाप्यते, तदा वेदस्येतिहासस्य पुराणस्य भगवद्गीताया अन्यस्याप्येवम्भूतस्य स्वाभिमतैदमर्थ्ये साधु समर्थ्यमाने कथङ्कारं नवीनताशङ्कातङ्काङ्कुरसमुन्मेषः ? परमर्षिपरिक्षुण्णे पथि स्वसंचारं प्रकटयन्तः पश्चात्तनकतिपयलोकापरिग्रहमात्रेण स्वमतस्य नवीनत्ववादं न खलु संमन्तुमर्हन्ति । अतस्तत्तन्मतमुपपाद्यमानं तत्तदाशये प्राक्तनत्वेनैव स्थास्यतीति । अथार्वाचीनेष्वपि प्राज्ञजनेषु स्वमतानुरोधी जनः स्वकालात् प्रागासीन्न वेति मतप्रवर्तकाः विमृशन्तो यथायथं तत्सद्भावं निरूपयितुं प्रयतन्त एव । फलेग्रहिश्च भवति तत्र केषाञ्चित् प्रयत्नः । तदिदमपि स्पष्टमुद्धुष्टम्,

"निशाम्यन्तां यद्वा निजमतितिरस्कारविगमात्
निरातङ्काः टङ्कद्रमिडगुहदेवप्रभृतयः ॥"

इति । पद्यश्चेदं श्रीमन्निगमान्तमहादेशिकानां नूनं भगवद्रामानुजाचार्यपादसूक्तिं वेदार्थसंग्रहगताम्, "भगवद्बोधायनटङ्कद्रमिडगुहदेवकपर्दिभारुचिप्रभृत्यविगीतशिष्टपरिगृहीतपुरातनवेदवेदान्तव्याख्यानसुव्यक्तार्थश्रुतिनिकरनिदर्शितोऽयं पन्थाः" इतीमां मूलमाकलयतीति, सा च सूक्तिः, भगवद्यामुनमुनिमुखोद्गतमात्मसिद्धिवचनमवलम्ब्य समुन्मिषितेति च सुज्ञानमेव । परंतु न केवलमन्योक्तानुवादमात्रम् ; अपि तु यथाशक्ति तेषां ग्रन्थान् स्वयमप्यालोड्यैव तथा तैरुद्घोषितमिति साधु संभाव्यते, यतस्तत्रतत्र कतिपयान् ग्रन्थशकलान् उद्धरन्तः स्वोक्तमर्थं संवादयन्ति ।

## पूर्वग्रन्थपरिग्रहातिशयः

यद्यपि श्रीशाङ्करभाष्यादिष्वपि तत्रतत्र बहुलमेषु केषाञ्चित् प्रमाणतयोदाहरणं लक्ष्यत एव । यथा छान्दोग्ये मधुविद्यायां स्वयमर्थभाषणावसरे आचार्यपदेन द्रमिडाचार्यः साक्षीक्रियते—एवमपि तत्रतत्र तेषामाशयो निराक्रियतेऽपि । यथा, "न दृष्टेर्द्रष्टारं पश्ये., न मतेर्मन्तारं मन्वीथाः" इत्यादि-श्रुत्यर्थभाषणे भर्तृप्रपञ्चस्य । एवं सूत्रभाष्येऽपि वृत्तिकाराद्युपवर्णितार्थनिराकरणम् आनन्दमयाधिकरणादौ भाव्यम् । भगवद्रामानुजाचार्यपादग्रन्थेषु पुनः प्राक्तनग्रन्थानामुदाहरणं स्वप्रदर्शितपरमार्थसाक्षितयैव ; न पुनस्तदुक्तनि-रसनायेति विशेषः । तेषां वचनानि तत्रतत्र, नार्थतः, किंतु शब्दतोऽप्य-नूद्यन्ते । आत्मसिद्धौ सितासितनिबन्धकर्तॄणां सर्वेषामुपक्षेपात् सर्वे न सामग्र्येण विश्वसनीयाः, किंतु पूर्वग्रन्थेषु हेयोपादेयविभागविधानमावश्यकमित्याविष्कृत-मासीत् । वेदार्थसंग्रहस्तु परिग्राह्यग्रन्थकारमात्रपरिगणनेन तद्विरोधप्रदर्शनेनान्ये ष्वनादरं दर्शयति । यद्यपि मुख्यभाक्तरूपेण व्यवहारद्वैधं सर्वलोकसंदृष्टमिति प्रामाणिकग्रन्थेषु क्वचित्क्वचिदापातार्थपरित्यागो भवति, अथाप्याप्तानां ग्रन्थेषु वक्तृतात्पर्यविरोधो नैव क्वचिदपि पदं धत्त इति सर्वसंमन्त-व्यमेतत् ।

तत्रापि परमर्षिणा पाराशर्येण बादरायणेन उपनिषद्दुग्धा-ब्धिमथनेनोद्धृतां ब्रह्मसूत्रसुधां बोधायनेन परमर्षिणा सादरं सुमनस्सु आयत्तीकृतां स्वयं विक्रम्य समालक्ष्य संगृहीतसारार्थाः श्रीभगवद्रा-मानुजाचार्यपादाः द्रमिडभाष्यादिग्रन्थानां बोधायनवृत्तिसंक्षेपरूपतामप्यनुदृश्य स्वसमधिगतसंप्रदायसामरस्यदर्शनसंहृष्टाः स्वसिद्धान्तस्य साधिष्ठतां सर्वप्रकारेण प्रख्यापयामासुः । तथैव तैस्तत्रतत्र स्वसिद्धान्तसाक्षितया वृत्तिः, द्रमिडभाष्यम्, छान्दोग्यब्रह्मनन्दिवाक्यमित्यादीन् प्राच्यग्रन्थान् अनूद्य अद्वैतमतस्थापनाचार्यग्रन्थे तद्विरोधो व्यक्तीक्रियते । श्रीभाष्यव्याख्यातारः श्रुतप्रकाशिकाचार्याश्च वाक्यं तद्विषयद्रमिडभाष्यं तद्व्याख्याश्च वामनटीकामुपनिषच्छब्दार्थवर्णनावसरे प्रथम मुपनिबबन्धुः ।

## श्रीभाष्यकारपूर्वाचार्यप्रभावः

संप्रदायप्रतिष्ठैषां श्रीमतो महापूर्णोपाह्वयात् श्रीपराङ्कुशनामधेयतया च श्लोक्यमानात् आचार्यतल्लजात्; यस्य खलु सर्वपरमतनिरसननिष्णाताः

सिद्धित्रयागमप्रामाण्यगीतार्थसंग्रहादिग्रन्थनिर्मातार: आलवन्दार् इति प्रशस्तिभाजः श्रीभगवद्यामुनमुनय आचार्याः; यैः किल सर्वमतजयेनाधिगच्छद्भिरर्धचोलराज्य-वैभवमेव घोषितः श्लोकः—

"आशैलाददिकन्याचरणकिसलयन्यासधन्योपकण्ठात्
आरक्षोनीतसीतामुखकमलसमुल्लासहेतोश्च सेतोः ।
आ च प्राच्यप्रतीच्यक्षितिधरयुगलाच्चन्द्रसूर्यावतंसात्
मीमांसाशास्त्रयुग्मश्रमविमलमना मृग्यतां मादृशोऽन्यः ॥"

इति । एते च आगमप्रामाण्ये पाञ्चरात्राधिकरणविषयाणि ब्रह्मसूत्राण्युपादाय तद्वास्तवार्थविचारप्रवृत्ताः श्रीभगवद्रामानुजाचार्यपादानवरतास्वाद्यमानात्यद्भुत-शास्त्रार्थप्रमाणतर्कपरिष्कृतकविकुलहृदयावर्जकगद्यपद्यमयग्रन्थरत्नाः स्वयमेव गीता-सूत्रादिभाष्यप्रणयनप्रवीणा अपि प्राच्यग्रन्थसंवाददर्शनाय प्रयस्यन्तः स्वायुरवसानसमयमालक्ष्य स्वप्रशिष्यमुखेन तत्प्रणयनं प्रतीक्षाञ्चक्रिरे । येषां खलु पितामहचरणाः श्रीभगवन्नाथमुनयो न्यायतत्त्वनाम्ना शास्त्रेण स्वकृतेन परमतनिरसनं वेदान्तिसंमन्तव्यप्रमेयनिष्कर्षञ्च निरूपितवन्तः अचिन्त्याद्भुताक्लिष्टज्ञानवैराग्यराशयः अगाधभगवद्भक्तिसिन्धवो योगरहस्यग्रन्थप्रबन्धारो दिव्यप्रबन्धावतारणेन दक्षिणदेशं श्रीवैष्णवमयं विधाय अर्चावतारेणाशेषजनरक्षणदीक्षितस्य श्रियःपतेर्मुखोल्लासमाधाय वाङ्मनसातीतां विख्यातिमध्यगुः । एते हि श्रीभगवन्नाथमुनयः बहोः कालात् प्रागेवाविर्भूयान्तर्हितं श्रीवकुलभूषणं श्रीपराङ्कुशनामधेयं श्रीकुरुकापुरज्योतिः परमं स्वयोगमहिम्ना प्रत्यक्षीकृत्य तन्मुखेन लब्धसर्वार्थोपदेशाः श्रीबादरायण-बोधायनद्रमिडाचार्यादिक्षुण्णं प्राचीनं पन्थानं तस्यैव ज्योतिषो दिव्यसूरे-र्मुखादधिगम्य तदनुकूलतत्त्वार्थव्युत्पादनचणं प्रागेव प्राप्तप्रचारं परंतु कियता कालेन पुनस्तिरोभूतं बहुदिव्यसूरिगीतगाथात्मकं दिव्यप्रबन्धजातमपि स्वीकृत्य आवर्त्य अध्याप्य स्वोपज्ञां भगवद्भक्तिवल्लीं प्रसूनवतीं फलिताञ्च विधाय प्रख्यातिं परामिह समधिजग्मुः ।

## उपदिष्टोपलब्धसामरस्येन ग्रन्थानां निर्माणम्

एवं श्रीवकुलभूषणनाथयामुनाद्याचार्यपारम्परीप्राप्तस्य परमार्थस्य बोधायनद्रमिडाचार्यादिप्राच्यग्रन्थैः सामरस्यमुपदेशाधिगतं साधु साक्षात्कृत्य तदनुगुणैस्तर्कप्रमाणैस्तमेवार्थं प्रमाणतः प्रतिष्ठाप्य तदनुसारेण ग्रन्थानामर्थ-

परिज्ञानाय भाष्यग्रन्थविधानेनापि विशेषत उपकृत्य आसेतुहिमाचलं प्रचारमादधिरे इति श्रीभगवद्रामानुजाचार्यसिद्धान्तत्वेन संप्रत्ययं विशिष्टाद्वैतसिद्धान्तो विश्वतः प्रसिद्धिमधिगतो विजयते ।

## संप्रदायपरिशुद्धिप्रभृतिग्रन्थगतिः

एवं बोधायनब्रह्मनन्दिद्रमिडाचार्यादिप्रहत एवाध्वा तथात्वेन निरूपितः श्रीभगवन्नाथमुनिभिः प्रचारित इति प्रतिबोधयितुमेव श्रीमन्निगमान्तमहादेशिकैः संप्रदायपरिशुद्धौ, 'ब्रह्मनन्देः पश्चात् श्रीवकुलभूषणसूरिः संप्रदायाचार्यः समभूत्' इति निरटङ्कि । वेदार्थसंग्रहे च वाक्यद्रमिडभाष्यसूक्तीः समुदाहृत्य अन्तर्गुणाया एव देवतायाः सद्विद्यादिष्वपि समधिगम्यत्वम्, अन्तः-करणैकग्राह्यस्यातीन्द्रियस्याप्राकृतस्य स्वरूपगुणविशेषं सद्भावश्चोपपाद्य निःश्रेयसोपायभूतं वेदनमुपासनमेव ध्रुवानुस्मृतिरूपं दर्शनसमानाकारं प्रीतिरूपापन्नमिति च श्रीभाष्ये वाक्यादिग्रन्थोदाहरणेन विशदय्य तत्क्रतुन्याय-सिद्धं तदनुरूपं निःश्रेयसमिति च समाकलय्य विशिष्टतत्त्वहितपुरुषार्थान् प्राक्तनसंमतान् प्रकटीकृत्य स्वमतपारम्यं प्रत्यपादि भगवद्भाष्यकारैः ।

## अद्वैतसिद्धान्तेषु विशेषः

अद्वैतसिद्धान्तेषु श्रीशङ्करभगवत्पादोपज्ञमद्वैतम्,

"सूत्राभिप्रायसंवृत्त्या स्वाभिप्रायप्रकाशनात् ।
व्याख्यातं यैरिदं शास्त्रं व्याख्या तन्निवृत्तये ॥"

इति प्रतिज्ञाय भास्कराचार्यप्रचारितमद्वैतम्, स्वसमसामयिकयादव-प्रकाशाचार्यप्रकाशितं ततो विलक्षणञ्चाद्वैतमनादृत्य परमार्थः स्वसंप्रदायार्थ एवेति च व्युदपादि । 'जगन्मिथ्या; ब्रह्म निर्गुणमेकं सत्यम्' इति श्रीशङ्करभगव त्पादसिद्धान्तः । न केवलं श्रीभगद्रामानुजस्वामिपादाः, अपि तु भास्कराचार्या-दयोऽद्वैतिनोऽपि, सर्वेऽपि अन्ये तीर्थकरा इव जगत्सत्यत्वादावेकवाक्यतां प्रतिपद्यन्ते ।

## एतत्सिद्धान्तनाम किमिति

एतावता विशिष्टाद्वैतसिद्धान्तस्थापनप्रवृत्ता ग्रन्थाः भगवद्भाष्य-कारकालात् प्रागेव चिरात् प्राप्तप्रचाराः; परिशील्यमाने सिद्धान्तोऽयं परमादिरिति समग्राहि । अथ विशिष्टाद्वैतमिति नामास्य यद्यप्यर्वाचीनम्, तथापि

सिद्धान्तः तदर्थः प्राक्तन एवेति च किञ्चित् कथ्यते । भगवद्भाष्यकारैरपीदं नाम न निरदेशि; नापि प्रमेयनिष्कर्षेदम्परैस्तैर्नाम्नि क्वचित् नैर्भर्यमपि प्रादर्शि, यदेवमाहुस्त्रिविधाद्वैतनिरासेन वेदार्थसंग्रहे, "ऐक्यवादाश्च शरीरात्मभावेन सामानाधिकरण्यमुख्यार्थतोपपादनादेव सुस्थिताः" इति निगमयन्तः, "एवञ्च सति अभेदो वा भेदो वा द्व्यात्मकता वा वेदान्तवेद्यः कोऽयमर्थः समर्थितो भवती"ति प्रश्नमुपक्षिप्तवन्तः, "सर्वस्य वेदवेद्यत्वात् सर्वं समर्थितम् । सर्वशरीरतया सर्वप्रकारं ब्रह्मैवावस्थितमित्यभेदः समर्थितः । एकमेव ब्रह्म नानाभूतचिदचिद्वस्तुप्रकारं नानात्वेनावस्थितमिति भेदाभेदौ; अचिद्वस्तुनश्चिद्वस्तुनश्चेश्वरस्य च....भेदः समर्थितः" इति । एतद्व्याख्यायां तु तात्पर्यदीपिकायामेतदाशय एवं प्राकाशि, "परैरुक्तोऽभेदो भेदाभेदौ च भेदश्रुतिविरोधादमुख्यत्वाच्च न प्रामाणिकाः । भेदश्रुत्यविरुद्धौ भेदाभेदौ अभेदश्चास्मदभिमता इत्यस्माकं भेदपक्ष एवेत्यभिप्रायः" इति । एतद्व्याख्यादर्शने, 'द्वैतमेवास्मन्मतम्; अद्वैतस्य श्रुत्यादिसिद्धस्य द्वैताविरोधेन निर्वाहमात्रम्' इति स्पष्टमेव बुध्यते । परं तु द्वैतित्वेन प्रसिद्धानां माध्वतार्किकादीनां जगद्ब्रह्मैक्यश्रुतिनिर्वाहप्रकारस्य, एतत्सैद्धान्तिकसमीहित प्रकारस्य च महदन्तरमस्तीति इदं मतं विशिष्टाद्वैतमिति व्यवह्रियते ।

## अद्वैतमतत्रयपद्धतिः

त्रिषु पुनरद्वैतदर्शनेषु ब्रह्मणः चिद्भिरिवाचिद्भिरप्यभेदः स्वाभाविकः सर्वरूपेण तदुत्पत्तेरिति यादवप्रकाशदर्शनम् । ततः प्राक्तनं भास्करदर्शनं तु, अचिदंशः परब्रह्मणः परिणामः; जीवास्तु न परिणामभूताः, किंतु ब्रह्मण एव प्रदेशभेदाः घटकरकाद्याकाशप्रदेशा इवाकाशात् ब्रह्मणो नैव व्यतिरिच्यन्त इति । अत्र चिदचिदात्मकस्य प्रपञ्चस्य परस्य ब्रह्मणश्च कार्यकारणभावनिबन्धनमैक्यं यादवप्रकाशपक्षे सर्वस्याविशेषेण कल्पते; न तु भास्करपक्षे । चिदंशस्य कार्यता हि न तदिषिता । परं तु द्रव्यैक्यनिबन्धनमद्वैतमुभयत्राव्याहतम् । "ब्रह्मपरिणतेरिति भास्करगोत्रे युज्यते" इति न्यायाचार्योदयनवचनमपि अचिदंशपरिणाममात्रेणैव निर्वहणीयम् । शाङ्करपक्षे तु न ब्रह्मणः परिणामो जगद्रूपेण । जगदात्मना प्रतीयते इति ब्रह्म सत्यम्, जगन्मिथ्या । यस्येदं जगत् परिणामभूतम्, सा त्वविद्या । सापि तत एव मिथ्या । सत्यमिथ्याभूतयोश्चैक्यं न जाघटीति । अतो ब्रह्मणो जगतश्चैक्यरूपमद्वैतं यद्यपि नाञ्जस्येन वक्तुं पार्यते—अथापि

जगदन्ततो बाध्यत इति, सत्यमेव विवेचनेऽवतिष्ठत इत्येवम्भूतमद्वैतमभिमतं स्थास्यति । एवमचिदंशस्य ब्रह्मणश्च परास्परिकैक्यनिरूपणासंभवेऽपि अन्तःकरणाद्यविधिकार्थपरिच्छिन्नस्य ब्रह्मण एव जीवत्वेनेष्टेः जीवब्रह्मैक्यं सूपपादम् । यदा तु जीवा अपि ब्रह्मणः प्रतिबिम्बभूता इति पक्षः प्रामाणिकः, तदा जीवब्रह्माद्वैतमपि अचिद्ब्रह्माद्वैतवदेव काममौपचारिकं भवतु । सर्वथा ब्रह्मैकमेव सत्यमित्येतावदेव विवक्षितमिति स्थितिः ।

## तदौचित्यपरिशीलनम्

अत्र, 'सर्वं खल्विदं ब्रह्म' इत्यादीनां जगद्ब्रह्मप्रतिपादकानां वाक्यानाम्—शाङ्करपक्षे अचिदंशे चिदंशे चैकरूपैक्याभावात् क्वचिद् बाधार्थं सामानाधिकरण्यम्, क्वचिदन्यथेति वैरूप्यम्; बाधार्थसामानाधिकरण्यानिर्वाहश्च वस्तुतः सत्यमिथ्याभूतार्थभेदप्रतिपादनेदम्परत्वात् स्वरसप्रतीतपदार्थद्वयैक्यरूपपरमार्थप्रतिकूल इति तन्निर्वाहस्यानाञ्जस्यमन्ये मन्यन्ते । भास्करयादवाभिमतं द्रव्यैक्यभादायेदृशवाक्यनिर्वाहे आञ्जस्यं नूनं लक्ष्यते, परं तु ब्रह्मण एव सर्वहेयास्पदत्वस्यावर्जनीयतया, "इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः" इति सूत्रदर्शितो दोषो दुरुद्धर इति, अत एव "अधिकं तु भेदनिर्देशात्" इति भगवता बादरायणेन भेद एव ब्रह्मणो निर्णीत इति च द्वैतवादिनिर्विशेषं विशिष्टाद्वैतिनोऽपि व्याहरन्ति । तर्हि का गतिरीदृशानां वाक्यानामिति चेत्—किमत्र चिन्तनीयमपूर्वमस्ति, यतः श्रुतिरेव 'तज्जलानिति' इति तस्य ब्रह्मणः सृष्टिस्थितिसंहारकारणत्वात् तादधीन्याज्जगति तदैक्यवाचोयुक्तिरिति द्वैतिन आस्थिषत ।

## विशिष्टाद्वैतिनिर्वाहः

कार्यकारणभावमात्रनिबन्धनश्चेदैक्यमिष्यते, प्रकृतिपुरुषकालादिरूपनित्यपदार्थनिर्देशैनैक्यवर्णनं ब्रह्मणि न समञ्जसं स्यादिति विमृशन्तो विशिष्टाद्वैतिनः पुनरासामभेदश्रुतीनामपि भेदश्रुतिवदेवाञ्जस्यमन्यथा व्युत्पादयन्ति । कथम्? इत्थम् ।

लोके अयं गौः, शङ्खः शुक्लः इत्यादिर्व्यवहारः सर्वसंप्रतिपन्नः प्रसिद्धः । तत्र प्रथमो द्रव्यं जातिश्चाभिधत्ते; द्वितीयो द्रव्यं गुणञ्च । द्रव्यस्य जातिगुणादीनाञ्च मिथो भेदः प्रत्यक्षादिप्रसिद्धः । तत्र कथं सामानाधिकरण्यम्?

तत्रेदं वक्तव्यम्—न हि वाक्यमिदं जात्यादिना सह द्रव्यस्यैक्यं बोधयति, येनासंगतं स्यात्। गवादिपदस्य जातिविशिष्टद्रव्यवचनत्वात् शुक्लादिपदस्य गुणविशिष्टद्रव्यवचनत्वाच्च धर्म्यैक्यमेवात्रावसीयते। धर्मधर्मिणोर्भेदस्तु शाश्वतो न कथञ्चिदपोह्यत इति। आकृत्यधिकरणादिकं च मीमांसादिगतं पदानां विशिष्टे शक्तिमेव व्युत्पादयति। मीमांसाव्याख्यातारस्तु बहवो महर्षेर्जैमिनेराशयं यथावदनवबुध्यमानाः स्वकपोलकल्पितान् अर्थाभासान् सूत्रेषु प्रवेशयन्तः अकृतमतीनामान्ध्यमेवापादयन्ति, यथा देवतानामपलापेन निरीश्वरवादेन चेति नेदं तिरोहितं वेदान्तवास्तवार्थवेदिनाम्। एवञ्च जातिगुणादिस्थले धर्मधर्मिभेदेऽपि सामानाधिकरण्यस्य न काचित् क्षतिः।

यथैवम्, तथैव शरीरात्मनोर्भेदस्य सर्वतीर्थकरसंमतस्याप्रतिक्षेप्यत्वेऽपि सामानाधिकरण्यं समञ्जसं लोके लक्ष्यत एव। यथा जीवाः यथाकर्म देवमनुष्यतिर्यक्स्थावराः, एक आत्मा ब्राह्मणः, एकः क्षत्रिय इत्यादिव्यवहारे। देवमनुष्यादिशब्दानां तत्तज्जात्यादिविशिष्टं यत् शरीरम्, तद्विशिष्टात्मविशेषवचनत्वात् जीवादिपदेन सामानाधिकरण्यं सुखोपपन्नम्।

एवं लोकव्यवहारेषु सम्यग्विमृश्यमानेषु कश्चिदनुगतो न्यायो निष्कृष्यमाणो भवति, अपृथक्सिद्धाधेयवाचिनां शब्दानां तदाधारपर्यन्तवाचित्वमिति। अस्ति च जातिगुणादेरिव शरीरस्याप्यात्मापृथक्सिद्धिः।

एवञ्च ब्रह्मणश्चिदचिदात्मकप्रपञ्चस्य च श्रुतिषु सामानाधिकरण्यव्यवहारः प्रपञ्चस्य तत् प्रति शरीरत्वात् शरीरवाचिनां तत्तच्छरीरविशिष्टब्रह्मपर्यन्तत्वात् विशिष्टैक्यविषय एव। न हि जातिगुणशरीरवाचिपदैः सह धर्मिवाचिपदानां समानाधिकरणप्रयोगमात्रेण जातिगुणशरीराणां धर्मिणश्चाभेदस्य मात्रयाऽपि लोके प्रसक्तिरस्ति। न खलु देहात्मवादश्चार्वाकातिरिक्तेन केनापि कथञ्चिदपि स्वीकर्तुमलम्। अतः कथमीदृशाभेदव्यवहारेण ब्रह्मणि चिदचिद्भेदसंभावनागन्धोऽपि।

अतश्च 'सर्वं खल्विदं ब्रह्म' इत्यत्र सर्वपदगृहीतस्य चेतनस्याचेतनस्य च सर्वस्यैकरूपमेवैक्यप्रतिपादनमिति न वैरूप्यम्; न वा ब्रह्मणि दोषलेशः अद्वैतिमतेष्विव; नाप्यमुख्यं सामानाधिकरण्यं द्वैतिनामन्येषां मत इवेति।

## रामानुजदर्शनमिति प्रसिद्धिहेतुः

सोऽयं जगद्ब्रह्मणोः शरीरात्मभावः, शरीरवाचिनां शब्दानां मुख्ययैव वृत्त्या शरीरिभूतात्मपर्यन्तवचनत्वञ्च पूर्वग्रन्थेषु परिस्फुटमप्रतीतं श्रीभगवद्भाष्यकारैरेव प्राधान्येन निराबाधं नानाश्रुतितर्कलोकानुभवप्रदर्शनेन निरूप्य स्थापितमिति, न केवलं भाष्यादिग्रन्थरत्ननिर्माणमात्रात्, किं नाम एतत्प्रतितन्त्रार्थप्रतिबोधनादपि दर्शनमिदं भगवद्रामानुजदर्शनमिति प्रकामं प्रथते ।

## विशिष्टाद्वैतशब्दार्थः

तथाच चिदचिदीश्वराणां मिथो भेद एवैतस्मिन् सिद्धान्त इष्टः; न तु स्वरूपाभेद इति द्वैतस्यैव संमतत्वेऽपि द्वैतिमत इव अभेदपरसमानाधिकरणपदसमुदायात्मनां वाक्यानामौपचारिकार्थस्वीकाराभावात् भेदाविरोधेन विशिष्टैक्यविवक्षयैव निर्वहणात् विशेषमेतं व्यक्तीकर्तुं विशिष्टाद्वैतमिति नाम सिद्धान्तस्यास्य कालक्रमेण संपादितमासीत् । एतस्मिन्नर्थे विशिष्टञ्च विशिष्टञ्च विशिष्टे; विशिष्टयोरद्वैतं विशिष्टाद्वैतमिति विग्रहः । 'तत् त्वमसि' इत्यत्र तत्पदं जगत्कारणत्वादिविशिष्टब्रह्मपरम्; त्वम्पदञ्च अभिमुखजीवविशेषविशिष्टब्रह्मपरम् । सर्वं खल्विदं ब्रह्मेत्यत्र सर्वपदं चेतनाचेतनविशिष्टब्रह्मपरम् । तस्य च ब्रह्मणा सहाभेद इति । वस्तुतो निर्विशेषं ब्रह्मैकमेवेति प्रसिद्धमतप्रत्यनीकभावव्यक्तये सर्वविशिष्टं ब्रह्मैकमेवेति वाद एषामिति विशिष्टाद्वैतमिति पदं विशिष्टस्याद्वैतं विशिष्टाद्वैतमित्येव विगृह्यते । तेन च सर्वस्यापि चिदचिदात्मकप्रपञ्चस्य सर्वास्वप्यवस्थासु ब्रह्मशरीरतया ब्रह्मप्रकारत्वात् विशिष्टमेकमेवास्ति, न द्वितीयमिति स्वसजातीयद्वितीयराहित्यं ब्रह्मण्युक्तं भवति । निदर्शयन्ति च श्रीभगवद्यामुनमुनय एव तत्र—

> "यथा चोलनृपः सम्राडद्वितीयोऽस्ति भूतले ।
> इति तत्तुल्यनृपतिनिवारणपरं वचः ।
> न तु तद्भृत्यतत्पुत्रकलत्रादिनिवारणम् ॥"

इति । विशिष्टाद्वैतपदार्थस्य चास्य परिष्कारो विस्तरेण न्यायसिद्धाञ्जनव्याख्यायां रत्नपेटिकायामादौ द्रष्टव्यः । तत्र मूले विशिष्टाद्वैतपदाप्रयोगेऽपि तत्सूचकवाक्यशैलीदर्शनात् स परिष्कारः प्रसक्त आसीत् । "अशेषचिदचित्प्रकारं ब्रह्मैकमेव तत्त्वम्" इति हि तत्रोपक्रमः । नाम्नोऽर्वाचीनत्वेऽप्यर्थः

प्राचीन एव । अयमेव विशिष्टाद्वैतशब्दार्थः अस्मिन् नयद्युमणावप्यादौ अदर्शि मात्रया, "स्थूलचिदचित्प्रकारं ब्रह्मैवे"त्युपक्रमात् । प्रमेयनिरूपणारम्भे चात्र, "सर्वार्थविशिष्टत्वाकारेण परमात्मैवैकः प्रमेयम्" इत्युक्तम् । इदमपि मनसिकृत्यैव न्यायसिद्धाञ्जने, "इदमेव चेत्थम्भूतं सामान्यतः प्रमाविषयतया, विशेषतः प्रकर्षेण मेयतया च प्रमेयमुक्तम्" इति विवृतम् । एतेन 'एकमेवाद्वितीयम्', 'नान्योऽतोऽस्ति द्रष्टा', 'यत्र हि द्वैतमिव भवति' इत्यादिश्रुतिषु ब्रह्मवत् स्वतन्त्रस्य वस्त्वन्तरस्यैव निषेधः क्रियते; न तु प्रत्यक्षागमप्रमितानां परब्रह्मप्रकारभूतानां बहुविधानां चेतनानामचेतनानाञ्चेति निरूपितं भवति ।

## ऐक्यवादस्य बहुप्रकारता

एतदुक्तं भवति—भेदाभेदवादः पापीयानिति प्रतिपादयतां भगवद्भाष्यकृतां मते ययोर्वस्तुनोर्भेदः, तयोरेवाभेदोऽपि न कथमपि घटत इति जगत्पदेन जगन्मात्रग्रहणे ब्रह्मपदेन च परमात्ममात्रग्रहणे ऐक्यमसंभावितमेव । अत एव तात्पर्यदीपिकायां द्वैतमेवास्मन्मतमित्यास्थितम् । एवमपि श्रुतिष्वैक्यव्यवहारो द्वैताविरोधेन सूपपादः । तत्रैक्यवादो बहुप्रकारः, ब्रह्मैकमेवेति; ब्रह्मैवास्ति, नान्यदिति; जीवानामैक्यमिति; जगद्ब्रह्मैक्यमिति; जीवब्रह्मैक्यमिति च । तत्राऽऽदिमे अनेकब्रह्मव्यक्तिनिषेधमात्रम् । जन्माद्यधिकरणे ब्रह्मबहुत्वप्रसङ्गमुद्भाव्य तदैक्यं स्थापितमत्र स्मर्तव्यम् । द्वितीये सर्वस्यापि वस्तुनो ब्रह्मान्तर्गततया, चैत्र एक एवात्रेति वाक्ये चैत्रवस्त्रयज्ञोपवीताद्यनिषेधेन मनुष्यान्तरनिषेधवत् ब्रह्मातिरिक्तस्वतन्त्रवस्तुनिषेधमात्रमिति न प्रामाणिकजगदपह्नवः प्रसजति । अन्यादिशब्दानां सदृशान्यपरत्वं लोकव्याकरणमीमांसादिसुप्रसिद्धम् ।

तृतीयश्च प्रकारैक्यस्वीकारात्,

> "विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ।
> शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥"

इत्युक्तसाम्यविषय इति नैष जीवभेदविरोधी भविष्यति । तुरीयश्च ब्रह्मणि चेतनाचेतनैक्यप्रतिपादकेषु समानाधिकरणवाक्येषु जगद्वाचिनां शब्दानां तद्विशिष्टब्रह्माभिधायित्वात् विशिष्टैक्यविषयः । एतेन पञ्चमोऽपि निर्व्यूढः । क्वचित्तु जीवब्रह्मैक्यं साम्यरूपमपि प्रथते, 'सर्वभूतस्थितं यो मां भजत्ये-

कत्वमास्थितः' इत्यादाविस्थलं विस्तरेण । तत् सिद्धं विशिष्टाद्वैतमिति परिभाषायाः पश्चात्तनत्वेऽपि तदर्थः परं प्राच्यबहुग्रन्थारूढ एवैतन्मता-साधारण्येनेति ।

## काणादसंवादः

अथैतन्मत उपपादितस्य शरीरवाचिनां शब्दानां शरीरि-पर्यन्ताभिधायित्वस्य, जगद्ब्रह्मणोः शरीरात्मभावस्य च शास्त्रान्तरसंवादोऽपि संप्रदर्श्यते—तत्रभवान् **कणादो महर्षिः** स्वोपज्ञे वैशेषिकदर्शने तृतीयेऽध्याये देहातिरिक्तमात्मानं साधयन्, 'अहमिति प्रत्यक्षेण आत्मनो गृह्यमाणत्वान्नात्मन आगमैकवेद्यता; अहं देवदत्तः, अहं यज्ञदत्तः इति प्रत्यात्मवेदनात्; अहंशब्दस्य चात्मातिरिक्तेऽनन्वयादिति, "यद्दृष्टमन्वक्षमहं देवदत्तोऽहं यज्ञदत्त इति" (२-१०) इति सूत्रेण सिद्धान्तोपपादकेन वर्णयन् तदुपरि, कथमिदमध्य-क्षमात्मविषयकम्, यावता देवदत्तपदस्य आ शैशवात् आ च वार्धकादनुस्यूत-देवदत्तत्वादिजातिविशेषविशिष्टशरीरपरतया अहंशब्दोऽपि तत्समानाधिकरण-स्तत्पर एवावसीयते । देवदत्तादिपदानां शरीरवचनत्वञ्चानुभविकम्; देवदत्तो गच्छतीत्यादिप्रयोगसिद्धश्च; विभुनि आत्मस्वरूपे गमनक्रियाश्रयत्वायोगेन गमिसामानाधिकरण्यस्य तच्छरीरपरत्वसाधकत्वादित्याशङ्कायाम्, "देवदत्तो गच्छति यज्ञदत्तो गच्छतीत्युपचाराच्छरीरे प्रत्ययः" (२-१२) इत्येकान्तरितेन सूत्रेण देवदत्तादिपदानां शरीरपरत्वमौपचारिकमिति समाधत्त । देवदत्तादि-पदानि, 'एकादशेऽहनि पिता नाम कुर्यात्' इत्यादिप्रमाणानुसारेण नामकरणसंस्काराविर्भावितानि न पिण्डमात्रवचनानि, किं नाम पिण्डावच्छि-न्नतत्तदात्मवचनानि । जातकरणादीनि ह्यात्मसंस्कारकाणि । जन्म हि आत्मनो देहेन्द्रियादिसंघातसंबन्धः इति न्यायसूत्रभाष्यादिषु निष्टङ्कितमेतत् । अतो देवदत्तादिपदानां शरीरविशिष्टात्मवाचित्वात् अहमिति तत्समानाधि-करणमात्मपरमेवेति नानुपपत्तिलेशोऽपि ।

## गच्छतीत्यस्यार्थे गदाधरादिसंवादः

अथ स्यात्—देवदत्तो गच्छतीति देहपरं वाक्यमौपचारिकमिति कणादः कस्मादाह, देवदत्तपदस्यात्रापि विशिष्टात्मपरत्वस्याक्षतत्वात् । गच्छतीत्यस्य गमनानुकूलकृतिमानित्यर्थः । कृञः प्रयत्नवाचित्वञ्च कुसुमाञ्ज-ल्यादिग्रन्थारूढम्, वहुतान्त्रिकनवीनप्राज्ञनिर्धारितञ्चेति । अत्र ब्रूमः

यन्निष्ठव्यापारविशेषो धातुना विवक्ष्यते, स एव कर्तेत्यनुभवसिद्धमेतत् । अत एव स्थाली पचतीत्यादौ स्थालीगतव्यापारस्यैव धातुना विवक्षा । किञ्च चेतनमात्रे प्रयुज्यमानधातुसमभिव्याहृतस्यैवाख्यातस्य यत्नवचनत्वं प्रामाणिकम्, यथा• भुङ्क्ते, पठतीत्यादौ । धातोश्चेतनाचेतनसाधारण्ये तु उभयानुरोधादाश्रयत्वमाख्यातार्थः । अतो रथो गच्छतीति प्रयोगबलादिहाश्रयत्वमेवाख्यातगम्यम् । अत एव व्युत्पत्तिवादे गदाधरभट्टाचार्येण द्वितीयायां गतिबुद्धिसूत्रव्याख्यानावसरे गतिकर्तृत्वमाश्रयत्वरूपमुक्तम् । तत्रैव, रथं गच्छतीति प्रयोगाभावनिर्वाहावसरेऽप्येवमाश्रयत्वार्थकत्वमदर्शि । तृतीयायामपि आश्रयत्वार्थाभिप्रायेणैव, चैत्रेण गम्यत इत्युदाहारि । एवमाख्यातविचारे, गच्छति जानाति करोतीत्यादौ आश्रयत्वे निरूढलक्षणेति तार्किकशिरोमणिर्महाप्राज्ञो दीधितिकारोऽपि तत्र प्रमाणीकृतः ।

तस्मात् गच्छतीत्यस्य गमनक्रियाश्रयत्वमेवार्थ इति तस्य च गमनाश्रयत्वस्य आत्मविभुत्वमास्थितवतः स्वस्य मते आत्मनि बाधात् देवदत्तादिपदमत्र शरीरमात्रपरमिति सुष्ठु स्वीकृतं कणादमहर्षिणेति । तथा च तेन महर्षिणा देवदत्तादिपदानामात्मनि मुख्यत्वं शरीर औपचारिकत्वञ्च कण्ठोक्तं कथं संगंस्यते, यदि शरीरवाचिनां शब्दानां शरीरिपर्यन्ते प्रयोग एव मुख्य इत्येष नाभ्युपेयात् । तत्प्रकरणार्थश्चास्मदीयव्याख्याने वैशेषिकरसायने विशेषतो द्रष्टव्यः ।

एवमेव भगवता बादरायणेनापि, "चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्" इति विशिष्टवचनत्वमभाक्तम्, विशेषणमात्रे प्रयोगश्च भाक्त इति भणितम् । एवम्, "तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्" इति सूत्रान्तरेणापीति साधिष्ठमेतत् । आकृतिमात्रवाचित्वञ्च शब्दानामर्वाचीनमीमांसकाभिहितं तार्किका इव वेदान्तिनोऽपि नाभ्युपयन्ति । 'गुणे शुक्लादयः पुंसि गुणलिङ्गास्तु तद्वति' इति गुणवाचिनामपि गुणिपर्यन्तप्रयोगो मुख्य एव । एवञ्च जातिगुणशरीराणां साधारणं यत् अपृथक्सिद्धत्वम्, तदेव विशेषणवाचिनां शब्दानां विशिष्टवचनत्वे नियामकमिति सर्वानुगतव्यवस्थासंभवो भगवद्भाष्यकारैः सम्यगुपपादित इति विदांकुर्वन्तु ।

## आचार्योदयनसंवादः

न्यायाचार्येणोदयनेन च न्यायकुसुमाञ्जलौ पञ्चमे स्तबके धृतिरूपहेतूपपादनावसरे इन्द्राग्नियमादिलोकपालवाचिनां शब्दानां तदाविष्टपरमात्मपरत्व-

मभिसंधाय, "सर्वावेशानिबन्धनश्च सर्वतादात्म्यव्यवहारः, 'आत्मैवेदं सर्वम्' इति। यथैक एव मायावी, अश्वो वराहो व्याघ्रो वानरः किन्नरो भिक्षुस्तापसो विप्र इत्यादि" इति, उत्तरत्र, "आवेशो ज्ञानचिकीर्षाप्रयत्नवतः संयोगः" इति च जीवपदानां परमात्मपर्यन्तत्वम्, तथैव वेदे समानाधिकरणवाक्यानां निर्वाह इति च व्युदपादि। विवेचितश्चायमुदयनाचार्याशयोऽस्मद्व्याख्यान-न्यायकुसुमाञ्जलिविस्तरभूमिकायाम्। एवमर्थकश्चायं प्रयोगो मुख्य एवेति भगवद्भाष्यकारैरुपापादि।

## कौमारिलसंवादः

जगतः कृत्स्नस्य परमात्मनश्च शरीरात्मभावः संबन्ध इत्ययमर्थश्च मीमांसाचार्यैर्भट्टकुमारिलैरपि प्रसङ्गाद् ग्रहैकत्वाधिकरणे(३. १.)प्रत्यबोधि। यतः—"शरीरत्वस्य न पार्थिवत्वेन व्याप्तिः; आप्यवायव्यतैजसशरीराणामपि दर्शनात्, 'ये हि जनाः स्वर्गं लोकं यन्ति, तेषामेतानि ज्योतींषि यन्नक्षत्राणी'ति श्रुतेः। नापि भौतिकत्वेन व्याप्तिः—

तथा व्योमशरीरोऽपि परमात्मा श्रुतौ श्रुतः।
इज्यते वारिणा नित्यं यः खं ब्रह्मेति चोदितः॥
रूपस्पर्शादयो येऽपि महाभूतगुणाः स्थिताः।
प्रत्येकमात्मनां तेऽपि देहाः संभोगहेतवः॥
शब्दब्रह्मेति यच्चेदं शास्त्रं वेदाख्यमुच्यते।
तदप्यधिष्ठितं सर्वमेकेन परमात्मना॥
तथर्ग्वेदादयो वेदाः प्रोक्तास्तेऽपि पृथक् पृथक्।
भोग्यत्वेनात्मनां तेऽपि चैतन्यानुगताः सदा॥"

इत्युपन्यस्य, लोकप्रतीतं करचरणादिमत्त्वम्, इन्द्रियाश्रयत्वमित्यादि च न लक्षण-मित्यभिप्रायेण सर्वस्यापि पदार्थस्य परमात्मशरीरत्वम्, वेदे श्रुतानाम्, 'खं ब्रह्म' इत्यादीनां समानाधिकरणवाक्यानामुक्तशरीरशरीरिभावनिबन्धनत्वञ्च विस्पष्टमेवोद्घुष्टम्।

## भट्टसोमेश्वरविवरणम्

न्यायसुधाकृता च तद्व्याख्यात्रा भट्टसोमेश्वरेण अन्तर्यामिब्राह्मणा-द्युपन्यासेन वेदस्य सिद्धेऽर्थे प्रामाण्यादि सर्वमप्रतिषेध्यमिति निरूपणपूर्वकं "शरीरञ्चेत् अनित्यमिति न व्याप्तिः, नित्यव्योमवेदादेरपि शरीरत्वस्य शास्त्रीय-त्वात्। तेषां देहत्वञ्च वार्तिकोक्तं संभोगहेतुत्वम्। तच्च नियमनलक्षणभोगाधि-

ष्ठानत्वम् । 'द्वा सुपर्णा सयुजा सखाया' इति श्रुतिबलाच्च सर्वस्यापि वस्तुनश्चेतनद्वयाधिष्ठितत्वमप्यस्ती''ति विशेषतो विवृतम् । अत्र जीवशरीरस्यैव सतः परमात्मशरीरत्वमप्यविशेषादेष्टव्यम् ; प्रागूर्ध्वावस्थयोरिव तदात्वेऽपि नियमनाविशेषादिति॰ श्रीमद्रहस्यत्रयसारनिष्कृष्टोऽप्यर्थो व्याख्यात्रैवमावेदि । नियमनं भोगशब्दार्थ इति वदन्नयम्, अनुकूलं ज्ञानमनुकूलमेव वा आनन्दः, न तु सुखं नाम कश्चिदतिरिक्तो गुण'इति वेदान्तिमतमपि व्यनक्तीव । रूपस्पर्शवेदादीनां गुणानाम्, द्रव्यमात्रानुवृत्तं शरीरत्वं न भवतीति विमृशन्तोऽपि विशिष्टाद्वैतिनः तेषां रूपादिपदानामपि रूपाद्यपृथक्सिद्धिबलात् परमात्मपर्यन्ततां स्वीकुर्वन्तीति वक्ष्यते ।

अतोऽन्यादृशशरीरलक्षणनिर्वचनं शास्त्रीयशरीरात्मभावत्यागेनान्यथा समानाधिकरणवाक्यनिर्वहणञ्च प्राचीनसंप्रदायपरिज्ञानेनोपेक्ष्यमिति भगवद्भाष्यकाराशयः । 'व्यवहारे भाट्टनयः' इति व्यावहारिकदशायां सर्वं भाट्टप्रक्रिययैव निर्वोढुं प्रवृत्तैरद्वैतिभिरत्र भट्टकुमारिलप्रदर्शितस्यापि स्वीकार्यतया, 'तत्त्वमसि', 'सर्वं खल्विदं ब्रह्म'त्यादीनामपि वाक्यानां साधिष्ठे निर्वाहे समधिगते न समानाधिकरणवाक्यनिर्वाहान्यथानुपपत्त्या सर्वमिथ्यात्वैकवस्तुमात्रपरिशेषादिकल्पनावकाशः । भेदश्रुतिषु जाग्रतीष्वपि अभेदश्रुतीनां गत्यन्तराभावादेव अद्वैतस्वीकार इति हि ते प्रतिपद्यन्ते । न्यायसुधाकारादयो घटकश्रुतीः प्रदर्श्य भट्टकुमारिलाशयमित्थं पोषयन्तः स्वरसमेव निर्वाहं भेदश्रुत्यनुपमर्देन यदाविष्कुर्वन्ति ; तन्न नाम सहसोपेक्ष्यं भवतीति ।

## वेदान्त्यन्तरसंवादः

नयप्रकाशिकायाञ्चानेन नयद्युमणिकारेणैव अन्यवेदान्तिभिरप्यङ्गीकृतोऽयं शरीरात्मभाव इति (देवनागरीमुद्रितश्रीभाष्य. १३३६. पु.) न्यवेदि । यथा—"किञ्च अतिचिरन्तन यज्ञेश्वरसूनुशङ्करकृते वेदान्तसूत्रोपन्यासे तादात्म्यनिर्देशः शरीरात्मभावनिबन्धन इत्युक्तत्वाच्चास्मदीयमार्गस्यैव सांप्रदायिकत्वम् । तथोक्तम्, आकाशस्तल्लिङ्गादित्यत्र आकाशशरीरत्वाच्च आकाशशब्देन ब्रह्माभिधीयते । तथा शरीरशरीरिणोश्चाभेदेन व्यपदेशो दृश्यते, यथा देवदत्तो बुद्धिमानिति'' इति ।

## शरीरात्मभावे स्मृतिप्रमाणानि

एष च शरीरात्मभावो विष्णुपुराणे पदेपदे, मनुस्मृतौ च, 'सोऽभिध्याय शरीरात् स्वात्' इति प्रक्रम एव, रामायणे च, 'जगत् सर्वं शरीरं ते' इति अन्यत्र च, सर्वत्र चैवं व्यक्तमेवोक्तम् ।

गीतायामपि सप्तमे, 'भूमिराप' इत्यादिना अपरां प्रकृतिं ततः परां जीवभूतां प्रकृतिञ्च भगवच्छेषभूतां विभूतिभूताञ्च निर्दिश्य, 'रसोऽहमप्सु' इत्यादिना, नवमे च 'अहं क्रतुः' इत्यादिना, दशमे च, 'आदित्यानामहं विष्णुः' इत्यादिना विश्वभगवतोर्विद्यमानः संबन्धो विशदं प्रकाशितः । न ह्यत्र सर्वत्र जगतो बाधनेन ब्रह्मैकपरिशेषणार्थमिदं सर्वमुपपादनमिति शक्यं वक्तुम् । सर्वनियन्तृत्वसर्वाधारत्वसर्वशेषित्वा-नन्तकल्याणगुणगणप्रतिपादनार्थत्वात् सर्वस्य । 'एतां विभूतिं योगञ्च मम यो वेत्ति तत्त्वतः । सोऽविकम्प्येन योगेन युज्यते नात्र संशयः' इति चाह । पुनर्विभूतिविस्तरं बुभुत्सुः पृच्छति पार्थः । भगवांश्चोपदिशति प्रदर्शयति च । पुनश्च प्रत्यक्षदृष्टपरमार्थः पार्थ आह, "सर्वं समाप्नोषि ततोऽसि सर्वः" इति । अलमत्र सर्वप्रमाणगणपरिगणनेन ; कणादकुमारिलादि-ग्रन्थसंवादमात्रप्रदर्शनमत्र नश्चिकीर्षितम् ।

एवं परमात्मनस्तदितरपदार्थैः सह शरीरात्मभावसंबन्धस्य प्रधानप्रति-तन्त्रार्थत्वादेव अत्रभवान् नयद्युमणिकारो मेघनादारिसूरिरपि स्वविचिचारयिषितेषु बहुष्वर्थेषु शरीरलक्षणनिरूपणस्यैव प्राथम्यमाद्रियत ।

## गौतमाशयः

वेदार्थवर्णनैदम्पर्यवैधुर्यात्, लोके यत्रयत्र शरीरशब्दो व्यवहारपदमध्यास्ते, तत्तत्स्थलमात्रानुगतलक्षणपरामर्शप्रावण्याच्च शरीराति-रिक्तात्मस्वरूपप्रतिबोधनप्रवृत्तः परमर्षिर्गौतमः प्रसिद्धशरीरमात्रसंभवि लक्षणम्, "चेष्टेन्द्रियार्थाश्रयः शरीरम्' इति त्रेधा व्युदपादयत् । अन्यादृशं शरीरत्वं निरुच्य तद् यदि जगति परमात्मानं प्रति विवक्ष्यते, नेदमपोह्यते । अत एव न्यायकुसुमाञ्जलौ (५) परमाण्वादीनां परमात्मानं प्रति शरीरत्वप्रसङ्गे पूर्वपक्षिकृते, "साक्षादधिष्ठातरि साध्ये परमाण्वादीनां शरीरत्वप्रसङ्ग इति किमिदं शरीरत्वम्, यत् प्रसज्यते? यदि साक्षात्प्रयत्नवदधिष्ठेयत्वम्, तदिष्यत एव" इति प्रत्यधायि ।

## भगवद्भाष्यकाराभिमतशरीरलक्षणम्

तदिदं शरीरत्वं सर्वानुगतं श्रीभाष्ये नविलक्षणत्वाधिकरणे न्यरूपि । तदत्रोपवर्ण्यते । चेष्टेन्द्रियार्थाश्रय इति गौतमस्येव गम्भीरं भाषमाणस्य भगवतो भाष्यकारस्यात्र किमेकं लक्षणमिदं कृत्स्नमितीष्टम्, उतानेकमिति

विमर्शे, समुदितमेव लक्षणमिति सूक्ष्मेक्षणे स्वयमप्रवृत्तेः कथितमासीत्। न्यायकुलिशग्रन्थेऽपि नातीवैतन्निरूपणे वैयग्र्यमभ्यूढमिति ज्ञायते। अथ तु सूक्ष्मेक्षणेन न्यायसूत्र इव तद्भाष्येऽपि लक्षणत्रयनिश्चयो दर्शितः।

## न्यायसिद्धाञ्जननिष्कर्षः

तथा हि न्यायसिद्धाञ्जने श्रीमन्निगमान्तमहादेशिकैरित्थं निरकर्षि, "इह प्रसङ्गात् सामान्यतः शरीरलक्षणमुच्यते। यस्य चेतनस्य यद् द्रव्यं सर्वात्मना स्वार्थे नियन्तुं धारयितुञ्च शक्यम्, तच्छेषतैकस्वरूपञ्च, तत् तस्य शरीरमिति भाष्यम्........तत्रैवं लक्षणत्रयनिष्कर्षः—यस्य चेतनस्य यदवस्थं द्रव्यं यावत्सत्तमसंबन्धानर्हं स्वशक्ये नियन्तव्यस्वभावम्, तदवस्थं तस्य शरीरमित्येकं लक्षणम्। यस्य चेतनस्य यदवस्थं द्रव्यं यावत्सत्तं धार्यम्, तदवस्थं तस्य शरीरमिति द्वितीयं लक्षणम्। यस्य चेतनस्य यदवस्थं द्रव्यं यावत्सत्तमशेषतानर्हम्, तदवस्थं तस्य शरीरमिति तृतीयं लक्षणमिति। परस्ताच्च भगवद्भाष्यकारहृदयगतं तुरीयमपि किञ्चिल्लक्षणमदर्शि। श्रीमद्रहस्यत्रयसारव्याख्यायां सारप्रकाशिकायाम्, न्यायसिद्धाञ्जनव्याख्यायां रत्नपेटिकायाञ्च किञ्चिद्दूरं विचारितमस्ति।

## तदर्थविचारः

तदिदं प्रधानप्रतितन्त्रत्वादवश्यमेवानुपपत्तिपरिहारेण निष्कृष्य वेद्यमिति विशिष्यात्र विमृश्य निर्णीयते। शरीरत्वं प्रतिसंबन्धिसापेक्षमिति प्रदर्शनाय, यस्य यदिति च निर्देशः। यद् द्रव्यमित्येवोक्तौ, एकस्यैव शरीरादिसर्वरूपेण परिणामात्, प्रकृतिपृथिव्यादिरूपेण तस्यानियाम्यत्वात् 'सर्वात्मने'ति दलघटितं लक्षणं न जाघटीति। सर्वस्यापि जीवं प्रति शरीरत्वेन व्यवहारापत्तिश्चेति यदवस्थमिति परिष्कृतम्। स्वार्थे इत्यस्य स्वविषये इत्यर्थः; स्वशक्य इति पर्यवसानम्। स्वपदं लक्ष्यशरीरपरम्। इदञ्च विहगादिशरीरकार्यविहायोगमनादेर्मनुष्यशरीराद्यशक्यतया सर्वात्मना नियन्तुं शक्यत्वं न भवतीत्यसंभवशङ्कापरिहाराय सर्वात्मनेत्यस्य सर्वप्रकारेणेत्यर्थपरत्वाभावात् सर्वदेत्यर्थे तात्पर्यात् स्वशक्यविषयमेवादाय लक्षणसमन्वयसंभवात्। स्वार्थे इति स्वरूपकीर्तनमात्रम्; न तु लक्षणप्रविष्टम्, प्रयोजनविरहात्।

सर्वात्मनेत्यस्य यावद्द्रव्यभावीत्यर्थ इति श्रुतप्रकाशिका। अस्य च क्रियाविशेषणस्य नियन्तुं धारयितुञ्चेत्यत्रान्वयः। तस्य यावद्द्रव्यं

लक्ष्यभूतशरीरात्मकद्रव्यसत्तापर्यन्तं भावीत्यर्थः । तथा च यावत्स्वसत्त्वं वर्तमानं यत् नियमनम्, यच्च धारणम्, तद्विषयीकर्तुं शक्यमिति वाक्यार्थः । स्वसत्ताव्यापकनियन्तव्यताकं स्वसत्ताव्यापकधार्यताकञ्चेति पर्यवसितम् । यदा यदा स्वसत्ता, तदा तदा नियन्तव्यता धार्यता चेति कालिकसंबन्धेन व्याप्यव्यापकभावः । अथवा यावद्द्रव्यभावीत्यस्य यावत्सत्त्वं संबन्धीत्यर्थः । अस्य च न क्रियाविशेषणत्वम्; किं तु द्रव्यविशेषणत्वमेव ।

## रहस्यत्रयसारोक्तसंग्रहः

किमिदं नियन्तव्यत्वम्? किञ्चेदं धार्यत्वमिति चेत्—तदुपवर्णितं श्रीमति रहस्यत्रयसारे मणिप्रवालात्मनि, "धारकनुमाय् नियन्तावुमायिरुक्कैयावदु स्वरूपत्तालुं संकल्पत्तालुं यथार्हं सत्तास्थितिप्रवृत्तिप्रयोजकनायिरुक्कै" इति । अत्र यथार्हमित्युक्त्या धारकत्वं सत्तास्थितिप्रयोजकत्वम्, नियन्तृत्वं त्रितयप्रयोजकत्वमिति यथासंभवं ग्राह्यमिति बोध्यते । न हि चेतनस्वरूपमात्रस्य शरीरप्रवृत्तिप्रयोजकता,—संकल्पद्वारैव तस्य व्यापारहेतुत्वात् । अत्र सत्ता प्रथमक्षणसंबन्धः; स्थितिः उत्तरोत्तरक्षणसंबन्धः । एवमत्रेश्वरसंकल्पस्य सत्तास्थितिप्रवृत्तित्रितयेहेतुत्वेऽपि जीवस्य स्वशरीरसबन्धस्य स्वसंकल्पायत्तत्वाभावान्न संकल्पद्वारा स्थितिहेतुत्वम् । यदि तु स्थितिशब्देन पतनाभावरूपस्थितिर्विवक्ष्यते, तर्हि जागरदशायां पतनाभावरूपस्थिति-र्जीवसंकल्पायत्तेति सुवचम् । उक्तञ्च तत्रैव ।

परं तु विभुद्रव्ये कालादौ पतनाप्रसक्त्या एतादृशस्थितेस्तेनेश्वरसंकल्पायत्तत्ववर्णनस्य नातीवौचित्यमिति उत्तरक्षणसंबन्धरूपस्थितिरेव विवक्ष्यते । तत्र तर्हि तदुपपादनं तु पतनाभावरूपदेशसंबन्धात्मकस्थितेर्जीवसंकल्पाधीनत्वेऽपि क्षणसंबन्धरूपस्थितेस्तत्संकल्पाधीनत्वं नास्तीति सूचनेन यथार्हमिति पूर्वप्रयुक्तस्य दलस्यौचित्यसूचनाय । तथा च सत्तास्थितीति पदद्वयेन सद्भावमात्रं विवक्षितम् । तेन सत्ताप्रयोजकत्वं धारकत्वम्, प्रवृत्तिरूपव्यापारप्रयोजकसंकल्पाश्रयत्वं नियन्तृत्वमिति निष्पन्नम् । एवञ्च प्रकृते स्वरूपप्रयोज्यसत्ताकत्वं धार्यत्वम्, संकल्पप्रयोज्यव्यापारस्वरूपयोग्यत्वं नियन्तव्यत्वमिति सिद्धम् ।

## प्रथमलक्षणविचारः

अत्र च तच्चेतनसंकल्पप्रयोज्यव्यापारस्वरूपयोग्यत्वं तदवस्थनिष्ठं तच्चेतनं प्रति शरीरत्वमित्येव प्रथमलक्षणमित्युक्तौ सजीवपरकायप्राणेन्द्रिय-

कुठारादिषु कदाचित् तत्सद्भावात् तेषां शरीरत्वापत्तिरिति सर्वात्मनेत्युक्तम् । यद्यपीदं लक्षणान्तर इव प्रकृतेऽपि यावत्सत्तमित्यर्थकमेव भवितुमर्हति; परकायादिषु एतच्चेतनसंकल्पाधीनव्यापारस्वरूपयोग्यतायाः स्वसत्ताकालव्याप्तित्वाभावेनैवातिव्याप्तिवारणसंभवात्—अथापि यद्वस्तु लोष्टकन्दुकादिकं केनचित् पुरुषेण स्वहस्तेन क्रियमाणं तदधीनव्यापारविशिष्टमेव नष्टम्, तत्र सर्वदा तद्व्यापारसत्त्वेन स्वरूपयोग्यताया अप्यावश्यकत्वेनातिव्याप्तिः स्यादिति सर्वात्मनेति पदस्य प्रथमलक्षणे यावत्सत्तमसंबन्धानर्हमिति तात्पर्यं वर्णितम् । तस्य तु वस्तुनो वस्तुगत्या यावत्सत्तमेव संबन्धित्वेऽप्यसंबन्धित्वार्हत्वानपायात् असंबन्धानर्हत्वं नास्तीति न दोषः ।

अत्र यस्य चेतनस्य यद्द्रव्यं सर्वात्मना नियन्तुं शक्यमित्यस्य, यद् द्रव्यं सर्वात्मना यस्य चेतनस्य भवति, नियन्तुं शक्यञ्च भवति; सर्वात्मना यच्चेतनसंबन्धि सत् यद् द्रव्यं तस्य नियन्तुं शक्यमित्यर्थः । सर्वात्मना-सर्वरूपेण, सर्वप्रकारेण, सर्वकालेपि; यावत्सत्तमिति यावत् । चेतनस्येति षष्ठ्या यावत्सत्तं संबन्धलाभः । इदमेव निष्कृष्य, 'यावद्द्रव्यभावीत्यर्थ' इति प्रमेयमालायां श्रीवरदगुरुभिः, श्रीव्यासार्यैश्च श्रुतप्रकाशिकायां विवृतम् । तस्य, 'यावत्सत्तं चेतनसंबन्धी'त्येव ह्यर्थः । तदेवं मूलादेतल्लाभप्रकारः ।

## यावत्सत्तमित्यस्यान्वयार्थशोधनम्

ननु शरीरस्य हृद्देशावच्छेदेनात्मसंबन्धित्वेऽपि तदन्यदेशावच्छेदेनासंबन्धस्यापि विद्यमानत्वादसंबन्धानर्हत्वं न भवति । नतराञ्चानेकशरीरपरिग्राहिसौभर्यादिशरीरेषु । अतः तच्चेतनासंबन्धानर्हत्वं तदीयचैतन्यासंबन्धानर्हत्वरूपमेष्टव्यम् । अत एव चैतन्यविशिष्टवाचिचेतनशब्दनिर्देशः । शरीरे च, 'एकां शाखां जीवो जहाति, अथ सा शुष्यति' इत्यादिप्रमाणेन, सर्वाङ्गीणसुखाद्युपलब्ध्या च कार्त्स्न्येन चैतन्यप्रसराङ्गीकारान्न दोषः । एवञ्च नित्यमुक्तात्मचैतन्यस्य विभुत्वेन तच्चैतन्यासंबन्धानर्हे तत्संकल्पाधीनकादाचित्कव्यापारशालिनि वस्तुन्यातिव्याप्तिः ।

न च यावत्सत्तमित्यस्य नियन्तव्यस्वभावमित्यत्राप्यन्वयात् स्वसत्ताव्यापकनियन्तव्यत्वस्वरूपयोग्यताकत्वलाभात् तस्य न तच्छरीरत्वापत्तिः, तत्र व्यापारस्य कादाचित्कत्वादिति वाच्यम्—एवमपि नित्यमुक्तनिर्मिततन्नियमनाधीनव्यापारविशिष्टविनष्टकन्दुकादेः तच्छरीरत्वापत्तेर्दुर्वारत्वात् ।

न च—यावत्सत्तमसंबन्धानर्हमित्यस्य स्वसत्ताव्यापकसंबन्धवत्त्वमित्यर्थात् शरीरतयाऽभिमतवस्तुनिष्ठे एकस्मिन्नेव चेतनसंबन्धव्यक्तिविशेषे तत्सत्ताकालव्यापितया उपपादनीयत्वान्न दोषः । कन्दुकादिषु नित्यमुक्तचैतन्यसंबन्धो वर्तमानो न यावत्सत्तमेकः । उत्पद्यमानस्य वस्तुन उत्पत्तिप्रभृति विनाशपर्यन्तं क्रियारहितत्वासंभवेन क्रियापूर्वकालस्थितचैतन्यसंयोगापेक्षया क्रियानन्तरभाविचैतन्यप्रदेशान्तरसंयोगस्य भिन्नत्वेन यावत्सत्तमेकसंबन्धाभावात् । वास्तवशरीरेषु तु तत्तदात्मचैतन्यस्यान्यूनानधिकदेशभाविपरिणामरूपविलक्षणप्रसरणावस्थस्य शरीरसहस्थायिनः आतत्सद्भावमेकत्वेन संकोचाद्यभावेन तत्संयोग एक एव शरीरसत्ताव्यापक इति नासंभवः । शरीराभिवृद्धौ चैतन्यस्याधिकः प्रसरः, तदपचये च तत्संकोच इति स्थितेऽपि तत्तत्प्रदेशोत्पत्तिसहभुवस्तत्रतत्र संयोगस्य तत्प्रदेशसद्भावपर्यन्तमेकस्यैव स्वीकारसंभवादिति--वाच्यम्—नित्यानां नित्यविभूतौ प्रकृतौ च संकल्पाधीनव्यापारसंभवेन तयोश्चाक्रियत्वेन तत्र नित्यचैतन्यसंयोगभेदे प्रमाणाभावेन स्वसत्ताव्यापकतच्चैतन्यसंयोगतदधीनव्यापारस्वरूपयोग्यताकत्वसत्त्वेन तच्छरीरत्वापत्तेरशक्यवारणत्वात् ।

न च—यावत्सत्तमसंबन्धानर्हत्वं नाम अपृथक्सिद्धत्वमेव । अपृथक्सिद्धत्वञ्चात्मैकाश्रयत्वं यत्र, तत्रैव स्वीक्रियते । तदेकाश्रयत्वं नाम साक्षाद्वा चैतन्यद्वारा वा तत्संबन्धाभावे प्रसजति विनाशित्वप्रसक्तिमत्त्वम् । तत्र नित्यमुक्तसंबन्धाभावे सति प्रकृत्यादिकं न स्यादित्येवं प्रयोज्यप्रयोजकभावे प्रमाणाभावेन तदेकाश्रयत्वस्य तत्राभावादपृथक्सिद्धत्वमपि नास्ति । ततश्च तदपृथक्सिद्धत्वे सति तत्संकल्पाधीनव्यापारस्वरूपयोग्यतावत्त्वं तच्छरीरत्वमिति—वाच्यम्—असंबन्धानर्हत्वस्यापृथक्सिद्धत्वरूपेण निष्कर्षे तदपृथक्सिद्धद्रव्यत्वरूपदलस्यैव पर्याप्ततया विशेष्यदलवैयर्थ्यात् । न च स्वधर्मभूतज्ञानस्य स्वशरीरत्वापत्तिः; सौभर्यादिशरीरान्तरे तदपृथक्सिद्धत्वाभावेनाव्याप्त्यापत्त्या तच्चैतन्यद्वारा तदपृथक्सिद्धत्वमिति प्रथमदलनिष्कर्षस्य कर्तव्यत्वेन धर्मभूतज्ञाने चैतन्यद्वारकापृथक्सिद्धत्वाभावेनैवाव्याप्तिवारणेन शेष (विशेष्यदल) वैयर्थ्यध्रौव्यात् । वस्तुतस्तु यावत्सत्तमसंबन्धानर्हत्वमात्रनिवेशे पितापुत्रभावसंबन्धाभावानर्हत्वस्य पुत्रे सत्त्वेन पितरं प्रति पुत्रस्य शरीरत्वापत्तिवारणाय नियन्तव्यस्वभावत्वनिवेशावश्यकताया उपरि ग्रन्थ एवोक्तत्वेन अपृथक्सिद्धत्वे पर्यवसाने तद्विरोधापत्तिश्च ।

अत एव यावत्सत्त्वं तदीयचैतन्यसंबन्धित्वमेव तादृशासंबन्धानर्हत्वमिति पूर्वोक्तप्रकारोऽपि न युक्तः। पुत्रशरीरादौ तत्सद्भावप्रदर्शकग्रन्थविरोधात्।

अतः किमिदं यावत्सत्त्वमसंबन्धानर्हत्वमिति चेत्—

अत्रोच्यते—अस्येदमिति प्रतीतिसिद्धः संसर्गविशेष एवात्र संबन्धः। चेतननिरूपिततादृशसंबन्धविशेषार्हत्वमिति विशिष्टार्थः। इदञ्च सर्वेष्वपि सौभरिशरीरेष्वस्ति। तत्रैकस्मिन्नेव शरीरे सौभरिसत्त्वेऽपि सर्वेषामपि तदीयत्वानपायात्। तदिदं तदीयत्वं चैतन्यद्वारा तदाधेयत्वाद्वा, तद्भोगायतनत्वाद्वा, तत्स्वामिकत्वाद्वा यथाकथञ्चिद्भवतु। न तद् विशिष्य लक्षणघटकम्। किंतु अस्येदमित्यनुभवसिद्धसंबन्धत्वेन। तस्येदमित्यपलेऽपि प्रयोगात् पितापुत्रभावोऽपि तादृशः संबन्ध इति पुत्रशरीरादावतिव्याप्तिरिति विशेष्यदलम्। अत उत्तरग्रन्थसामञ्जस्यम्। प्रकृतिनित्यविभूत्यादिषु नित्यमुक्तनियमनाधीनव्यापारसद्भावेऽपि तत्र तस्येदमिति व्यवहाराभावात्, तच्चैतन्यप्रसरस्य तत्र सत्त्वेऽपि तादृशस्य संबन्धत्वे प्रमाणाभावाच्चासंबन्धानर्हत्वोपपत्तिः। यत्तु किञ्चित् कन्दुकादिकं तन्निर्मितं यावत्सत्त्वं तन्निरूपितस्वत्वादिसंबन्धवदेव नष्टम्। तत्राप्यसंबन्धार्हत्वसद्भावान्नासंबन्धानर्हत्वघटितं लक्षणम्। न च तन्निर्मिते तत्र जन्यजनकभावरूपसंबन्धस्य वर्तमानत्वात् तदभावार्हत्वस्य तत्र दुर्वचत्वेन लक्षणमक्षतमिति वाच्यम्—चेतनसंबन्धेत्यनेन चेतनैकान्तसंबन्धस्य विवक्षिततया जन्यजनकभावस्याचेतनसाधारणतया तद्ग्रहणायोगात्। न च तत्कृतिजन्यत्वरूपसंबन्धस्य कन्दुकादिगततया तस्य चेतनैकनिरूप्यतया स एव दोष इति वाच्यम्—कृतिजन्यत्वरूपपरम्परायाः संबन्धत्वे प्रमाणाभावात्। पितापुत्रभावजन्यजनकभावादेरनुभवसिद्धत्वेन ग्रहणेऽपि, अस्य विशिष्य ग्रहणासंभवात्। यद्वा वक्ष्यमाणरीत्या द्वितीयदलेनैव तद्वारणमिति,

नन्वेवमपृथक्सिद्धत्वस्य तत्त्वेन रूपेणाप्रवेशे, "यावत्सत्त्वमसंबन्धानर्हत्वमपृथक्सिद्धत्व"मिति उपरि वक्ष्यमाणं विरुध्येतेति शङ्क्यम्—तत्सूक्तेर्विशिष्य तथानिवेशतात्पर्यकत्वे प्रथमलक्षणप्रकरण एव तल्लेखनस्यावश्यकत्वप्रसंगात्। चतुर्थलक्षणानन्तरं लेखनात्तु तस्यान्याभिप्रायकत्वमेव। तच्च वक्ष्यामः।

इदमत्र बोध्यम्—तृतीयलक्षणे अशेषतानर्हत्वनिवेशवत् अत्राप्यनियाम्यतानर्हत्वनिवेशनेन कदाचिन्नियम्ये परकायादावतिव्याप्तिवारणं

न युक्तम्; तथा सति स्वशरीरस्यापि रोगादिवशेन नियाम्यत्वाभावसत्त्वेन तदनर्हत्वाभावेनाव्याप्तेः। शेषत्वं तु अतिशयाधायकत्वरूपं सर्वदाऽस्त्येवेति तत्र न दोषः। न च पुत्रशरीरस्य कदाचिन्नियाम्यत्वात् कथं नातिव्याप्तिरिति शङ्क्यम्—नियन्तव्यस्वभावत्वमित्यस्य प्रतिबन्धकाभाव-विशिष्टनियमननियतोत्तरभाविव्यापारकत्वरूपत्वेनादोषात्। यदा यदा पितुर्नियमनम्, तत्तदुत्तरकाले नियमेन तत्र व्यापार इत्यत्र प्रमाणाभावात्। ईदृशव्यापारवत्त्वस्य निर्व्यापारतादशायामभावादतिव्याप्तिरिति स्वभावेति। तथा च प्रतिबन्धकाभावविशिष्टनियमनोत्तरकालवृत्त्यभावप्रतियोगिव्यापारकत्वा-भाववत्त्वं तादृशनियमनोत्तरकालावच्छिन्नव्यापाराभाववत्त्वानर्हत्वं वा नियन्तव्य स्वभावत्वम्। स्वशरीरकुठारादौ अनितरापृथक्सिद्धे तथाविधव्या-पारयोग्यता स्वीक्रियते। पुत्रशरीरादौ पराधीनतया तथा नियन्तुं शक्यता न स्वीक्रियत इति। न चैवं परकाये तदभावेन तदर्थं प्रथमदलकीर्तन-मुक्तं न घटत इति मन्तव्यम्—नियमनविषयत्वमात्रार्थकत्वे परकायेऽतिव्याप्तिः, निरुक्तरीत्या पुत्रशरीरादावतिव्याप्तिवारणाय परिष्कारे प्राणेन्द्रियकुठारादावति-व्याप्तिरिति तात्पर्यात्।

तत्र च चेतनसंबन्धित्वमात्रोक्तौ कुठारादौ स्वस्वामिभावादेरक्षतत्वाद-संबन्धानर्हमिति। दानादिना तत्रासंबन्धस्यापि संभावितत्वान्न तदनर्हत्वम्। न खलु पितापुत्रभावादेरिव संपन्नस्य स्वत्वस्याभावो दुष्कर इति न दोषः। एवं सति शरीरस्य भस्मत्वाद्यवस्थान्तरेऽसंबन्धसत्त्वेनासंभव इति शङ्कायां यावत्सत्त-भावित्वार्थकेन सर्वात्मनेति पदेन यदवस्थमितीदञ्च अनर्हत्वघटनञ्च सूचितमिति ज्ञापयितुं यावत्सत्तमित्युक्तम्। तदवस्थसत्ताकालिकतच्चेतनैकान्तसंबन्धाभावार्ह-त्वाभाववत्त्वमिति प्रथमदलार्थः। तदवस्थसत्ताव्यापकतच्चेतनैकान्तसंबन्धकत्व-निवेशेऽपि यावत्सत्त्वं तत्स्वभूते कुठारादावतिव्याप्तिरिति तदभावानर्हत्वोक्तिः। एवञ्च व्यापकत्वं नापेक्षितम्। धर्मभूतज्ञानस्यापि मुक्तिमार्गग्रहणादिषु सद्विषयेषु अध्यवसायरूपसंकल्पतो नियमनसंभवात् तन्नियाम्यत्वमक्षतम्, अपृथक्सिद्धतया संबद्धत्वाच्च प्रथमदलमपीति तद्वारणार्थं चेतनपदस्य चैतन्यविशिष्टार्थकत्वकथनम्। तस्य न तेन चैतन्यविशिष्टत्वरूपेण नियमनेऽन्वयः; नियमनस्य संकल्पस्य चैतन्यविशिष्टवृत्तित्वे प्रमाणाभावात्। तथा सति शरीरनियमने धर्मभूतज्ञाननियमने च वैलक्षण्यस्य दुरुपपादत्वात्। किंतु प्रथमदले संबन्धेऽन्वयः। तथाच स्वसत्ताकालिकचैतन्यावच्छिन्नानुयोगि-ताकसंबन्धाभावानर्हत्वमिति निष्कृष्टम्। चैतन्ये च चैतन्यावच्छिन्नानुयोगि-

ताकसंबन्धाभावान्न दोषः । न च पितापुत्रभावरूपसंबन्धे चैतन्यावच्छिन्नानुयोगिताकत्वं कथमिति शङ्क्यम्—शरीरविशिष्टात्मन एव पितृत्वेन, आत्मत्वस्य नियन्तृत्वरूपत्वेन नियमनरूपचैतन्यावच्छिन्नानुयोगिताकत्वस्य संबन्धे अक्षतत्वात् । स्वस्य स्वधर्मितावच्छेदकत्वाभावेन चैतन्यसंबन्धे चैतन्यावच्छिन्नानुयोगिताकत्वाभावेऽपि अन्यसंबन्धे तस्य तत्त्वस्य संभवाच्च ।

## नियन्तव्यत्वदलस्य निर्वचनान्तरम्

इदं तु वक्तुं शक्यम्—नियन्तव्यत्वं संकल्पसाक्षाज्जन्यव्यापाराश्रयत्वम् । पुत्रशरीरस्य पुत्रात्मनश्च पितृसंकल्पसमनन्तरमेव व्यापारविशिष्टत्वाभावात् । संकल्पानन्तरभाविवाक्योच्चारणादिस्वशरीरव्यापाराद्युत्तरभावित्वेन विलम्बितत्वात् । शरीरतयाऽभिमतेषु च साक्षादेव व्यापारभावादक्षतं लक्षणम् । अत्र स्वभावशब्देनाव्याप्तिपरिहार इत्युक्तत्वात् कदाचित् निर्व्यापारतादशायामपि शरीरत्वसंपत्तये तादृशव्यापारस्वरूपयोग्यत्वं निवेशनीयम् । न चैवं यस्य पुत्रकायात्मकपरकायप्रवेशः कदाचित्, तं प्रति तस्य शरीरत्वापत्तिः, पितापुत्रभावरूपसंबन्धसत्त्वात् उत्तरदलसत्त्वाच्चेति वाच्यम्—तत्रापि तत्संकल्पसमनन्तरव्यापारकत्वानङ्गीकारात् । तत्संकल्पाधीनपुत्रसंकल्पायत्तत्वात् तन्निष्ठव्यापारस्य । न चैवमपि तस्मिन् पुत्रात्मनि शरीरलक्षणातिव्याप्तिः; पितरं प्रति पुत्रत्वरूपसंबन्धसत्त्वात् उत्तरदलसत्त्वाच्चेति वाच्यम्—पुत्रगतसंकल्पादिव्यापारस्यापि पितृगतसंकल्पानन्तरभाविपुत्रमनःकृततद्ग्रहण-सत्त्वादिगुणोन्मेषाद्यनन्तरभावित्वेन व्यवहितत्वात् । न च—परकाय एव पुत्रसंकल्पमद्वारीकृत्य कृतं व्यापारमादायातिव्याप्तिः । किं बहुना । अप्रविश्य परकायमात्मसंकल्पमात्रेण तत्र व्यापारविधानं न खलु महिमशालिनां न शक्यमिति वाच्यम्—तादृशस्थले शक्तिविशेषस्यापि संकल्पसहकारिकारणत्वात् । तद्रहितसंकल्पतः कार्यादर्शनात् । प्रकृते च शक्तिविशेषासहकृतसंकल्पसाक्षाज्जन्यव्यापारस्वरूपयोग्यत्वविवक्षणेनादोषात् । न चावतारदशायां नित्यमुक्तपुत्रशरीरस्य तच्छरीरत्वापत्तिः । तत्रापि भगवदाहितशक्तिविशेषसहकारेणैव संकल्पस्य हेतुत्वाङ्गीकारात् । स्वशरीरविषये तस्य तस्य संकल्प एव कारणम् । कदाचित् संकल्पेऽपि कार्यानुत्पत्तिः प्रतिबन्धकसद्भावादिति ।

तथा च शक्तिविशेषासहकृततत्संकल्पसाक्षाज्जन्यव्यापारस्वरूपयोग्यत्वमिति विशेष्यदलम् । एतावदुक्तावपि यद्यपि कुठारादौ नातिव्याप्तिः;

तद्व्यापारस्य शरीरव्यापारद्वारकत्वात् । तथापि प्राणे इन्द्रियेषु चातिप्रसक्तिः । तद्वारणार्थं प्रथमदलम् । न च यावत्सत्तमित्येतावदेवालमिति शङ्क्यम्—प्राणादावपि स्वरूपयोग्यतया यावत्सत्तभावित्वेनापरिहारात् । न च नियमन-प्रयुक्तस्वव्यापारसामान्यकत्वनिवेशान्न प्राणादिष्वतिव्याप्तिरिति वाच्यम्—स्वशरीरे स्वसंकल्पं विनैव व्याधि-वात्या-प्रवाह-परपुरुषादिनाऽपि सहस्रशो व्यापारसंभवेनाव्याप्त्यापत्तेः । अतो यावत्सत्तं संबन्धीति निवेश्यम् । एवञ्च धर्मभूतज्ञानेऽतिव्याप्तिवारणाय पृथक् चैतन्यवत्त्वे सतीति न निवेश्यम्; किंतु अस्यैव संबन्धस्य चैतन्यावच्छिन्नानुयोगिताकत्वं विवक्षणीयम् । एवमपि मनुष्यादिशरीरे प्राणस्य पञ्चधावस्थानस्य भाषितत्वेन तादृशाविलक्षणा-वस्थाविशिष्टप्राणस्य स्वसत्तापर्यन्तचेतनसंबन्धशालितया तच्छरीरत्वापत्तिरिति तद्वारणायासंबन्धानर्हेत्युक्तम् । अपृथक्सिद्धत्वाभावेन आप्रलयं मुक्तप्राण-पृथक्स्थित्यङ्गीकाराच्च भगवत्संकल्पवशेन मनुष्यशरीरादौ पञ्चधावस्थानसमय इव तादृशविलक्षणावस्थाविशिष्टस्यैव तस्य चेतनासंबन्धसंभवेन अमुक्ते-तत्कल्पीयजीवप्राणस्याप्यसंबन्धानर्हत्वाभावान्न दोषः ।

तथा च तदवस्थापन्नसत्ताकालिकं यत् तन्निष्ठचैतन्यावच्छिन्नानु-योगिताकसंबन्धाभावार्हत्वम्, तदभाववत्त्वमिति प्रथमदलम् । द्वितीयदलं तु शक्तिविशेषासहकृततत्संकल्पसाक्षाज्जन्यव्यापारस्वरूपयोग्यत्वं वा पूर्वोक्तरीत्या प्रतिबन्धकाभावविशिष्टतत्संकल्पनियतोत्तरभाविव्यापारकत्वं वा भवतु । न चैतत्कल्पेऽवतीर्णमुक्तपुत्रशरीरस्य तच्छरीरत्वप्रसङ्गः, पितापुत्रभावसंबन्धस्या-क्षतत्वात्, मुक्तस्य चाप्रतिहतसंकल्पत्वेन तन्नियतोत्तरभावित्वस्य व्यापारे अक्षतत्वाच्चेति वाच्यम्—तत्र भगवदाहितशक्तिविशेषसहकृतसंकल्पस्यैव हेतुतया पूर्ववदत्रापि शक्तिविशेषासहकृतत्वनिवेशेनापत्तिवारणात् । तत्र च साक्षात्परम्परासाधारणनियाम्यत्वनिवेशेऽपि सामञ्जस्ये साक्षात्पदघटितं लक्षणं नापेक्षितमिति 'प्राणेन्द्रियकुठारादिषु' इति कुठारपदप्रयोगात् ज्ञायते । अत्र चेतनसंबन्धिक्रियासंयोगादौ यावत्सत्तं संबन्धिनि तन्नियमनाधीनकार्यवति अतिप्रसङ्गवारणाय 'द्रव्य' मित्युक्तम् ।

## गुणादेः शरीरत्वायोगः

न च तस्यापि शरीरत्वे को दोषः ? अन्तर्यामिब्राह्मणादौ पृथिव्यादीना-मिवाविशेषेण, 'यस्य वेदाः शरीरम्', 'यस्य यज्ञाः शरीरम्' इति गुणे क्रियायाञ्च भगवच्छरीरत्वव्यवहारदर्शनात् । लोकवेदावगतसर्वव्यवहारानु-

यायिशरीरलक्षणस्यैव नैयायिकमतनिरसनेन संप्रति वर्णनादिति वाच्यम्—असंभवात् । न तावत् द्रव्यान्तरगतशब्दक्रियादेरपृथक्सिद्धत्वं संभवति, साक्षात्संबन्धस्यैवाभावात् । द्रव्ययोरेव साक्षात्संबन्धात् । तत्राप्यपृथक्सिद्धत्वाङ्गीकारे साक्षादेव ब्रह्मणो जडत्वदुःखित्वादिप्रसङ्गेन, 'इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः' इत्यादिसूत्राणां भेदनिर्विकारत्वादिश्रुतीनाञ्चात्यन्तविरोधेन बहुवैयाकुली स्यात् । परम्परया अपृथक्सिद्धत्वमात्रेणापि न शरीरत्वम्; भगवच्छरीरभूतचेतनाचेतनगतगुणक्रियादेर्भगवच्छरीरत्वाङ्गीकारे तुल्यन्यायेन चेतनशरीरगतानां रूपरसगतागतादीनामपि चेतनशरीरत्वस्यैष्टव्यत्वप्रसङ्गात् । न चैवं लोकव्यवहारः; एवं प्रलयादिदशायामपि चेतने किञ्चित्संयोगादेरवश्यम्भावेन तदानीमपि तस्य सशरीरत्वापत्त्या तस्य कदाचिदशरीरत्वमाम्नायोक्तमपि बाध्येत; क्लिष्टगत्या वा नीयेत । अतोऽनुभवव्यवहारविरोधेन तादृशश्रुतेः, 'आदित्यो यूपः' इत्यादिवदन्यथानयनमेव युक्तम् । न चैतदविशेषेण सर्वत्र पृथिव्यादावशरीरत्वस्वीकारः साम्प्रतम् । यावत्संभवमनुगमविधानेनानेकप्रमाणासंक्षोभस्यैव श्लाघ्यत्वात् ।

## गुणादिशरीरत्वश्रुतिनिर्वाहः

तर्हि तच्छ्रुतेः कथं निर्वाह इति चेत्—वेदयज्ञाभिमानिदेवतापरत्वेन ।

नन्वेवमत्रैवान्तर्यामिब्राह्मणे, 'यः पृथिव्यां तिष्ठन्' इति पृथिव्यादि समस्तमचिद्वस्तु, 'यो विज्ञाने तिष्ठन्' इति चेतनञ्च पृथक् पृथक् निर्दिश्य तस्य तस्य परमात्मशरीरत्वमभिधीयत इति भाष्येणात्मपर्यायमात्रे आत्मग्रहणवचनात् तद्विरोधः । न; तस्योपलक्षणत्वात् । 'समस्तमचिद्वस्तु' इत्यस्याचिद्द्रव्यमात्रपरत्वात् । अथवा वेदयज्ञादिशब्दानां तत्तन्मात्रपरत्वमेव । तर्हि कथं तेषां शरीरत्वकथनमिति चेत्—वस्तुतश्शरीरत्वरहिततत्तदर्थवाचकपदानामपि पृथिव्यादिशब्दानामिव, 'रूपं गन्धः पृथिव्याश्च' इत्युक्तरीत्या परमात्मपर्यन्तवाचकता स्वीकर्तव्येति व्युत्पादनाय तेषु शरीरत्ववाचोयुक्तिः । सामानाधिकरण्यनिर्वाहार्थमेव हि घटकश्रुतयः प्रवर्तन्त इति ।

अतश्च तत्रातिप्रसङ्गवारणाय द्रव्यमिति निवेशः । एवम् उक्तावस्थान्तरे शरीरे लक्षणाभावादव्याप्तिरिति यदवस्थं द्रव्यमित्युक्तिः । न च—असंभव एव; सर्वस्यापि शरीरस्यावस्थान्तरे असंबन्धार्हत्वादिति वाच्यम्—ईश्वरं प्रति सर्वावस्थस्यापि द्रव्यस्य संबन्धित्वेन लक्षणसंगमनात् ।

## अवस्थालक्षणम्

अवस्था नाम आगन्तुकापृथक्सिद्धधर्मः । सत्यत्वज्ञानत्वकालत्वजीवत्व-धर्मभूतज्ञानादीनामवस्थात्ववारणायागन्तुकेति । आगन्तुकत्वं स्वाश्रय-प्रतिबन्धकाभावातिरिक्तकारणसापेक्षत्वम् । रूपरसशब्दादौ सहजशक्तिस्वीकारेऽपि तस्याः प्रतिबन्धकाभावस्वाश्रयमात्रसापेक्षत्वात् तस्या अवस्थात्वाभावेन न तामादाय रूपादेर्द्रव्यत्वापत्तिः । शक्तिभिन्नत्वस्य पृथङ्निवेशे तु आगन्तुकत्वं जन्यत्वमात्रं प्रागभावप्रतियोगित्वरूपम् । घटादेर्भूतलादिकं प्रति, औपाधिकस्य गन्धादेर्जलादिकं प्रति, बाल्यादेश्चेतनं प्रति चावस्थात्ववारणाया-पृथक्सिद्धेति । अपृथक्सिद्धत्वं नाम स्वप्रतियोग्यवच्छेदकयावत्कालावच्छिन्न-संबन्धवत्त्वम् । स्वं संबन्धः । तत्प्रतियोगि चाऽऽधेयवस्तु । तत् यदा यदा, तदा यः संबन्धो ययोरस्ति, तत्संबन्धवत्त्वमेव तयोरपृथक्सिद्धत्वम् । काले यावत्त्वविशेषणात् न घटभूतलसंयोगस्यापृथक्सिद्धत्वम् । धर्मत्वनिवेशे घटत्वादिकं प्रति घटादेरवस्थात्वापत्तिः । घटस्यागन्तुकत्वात् घटत्वापृथक्सिद्धत्वाच्च । तथा च तदवस्थात्वं नाम जन्यत्वशक्तिभिन्नत्वविशिष्टं तन्निरूपितापृथक्सिद्धिसंबन्धावच्छिन्नाधेयतावत्त्वम् । नन्वेवं शरीरस्य जीवावस्थात्वापत्तिः; इष्टत्वात् । जीवादीनामपि येन येन रूपेण जन्यत्वम्, तेन तेन रूपेणेश्वरावस्थात्वं स्वीक्रियत एव । अन्यरूपेणावस्थात्वं तु नेष्यते ।

ननु तत्तज्ज्ञानव्यक्तिविषयत्वादेरूपस्य रूपरसादिधर्मस्यावस्थात्वापत्त्या रूपादेरपि द्रव्यत्वापत्तिरिति चेन्न—विषयत्वादीनामतिरिक्तपदार्थत्वाभावेन मुख्य-धर्मत्वाभावेनादोषात् । नन्वीदृशावस्थाश्रयत्वस्य यदवस्थशब्दार्थत्वे लक्षणे पुनर्द्र-व्यमिति निवेशः किमर्थः, द्रव्यातिरिक्ते एतदसंभवात् । न च प्रकृतलक्षणे जन्यत्वशक्तिभिन्नत्वविशिष्टत्वं न निवेशनीयम्; किंतु विशेष्यमात्रम् । एवञ्च शक्तिरूपधर्ममादाय पुनश्चेतनगतक्रियादेः शरीरत्वापत्तिरिति द्रव्यत्वनिवेश इति वाच्यम् - द्रव्यत्वं हि नाम अवस्थाश्रयत्वमेवेति पुनरप्युक्तावस्थानिवेशापेक्षया ऽत्र शक्तिभिन्नत्वनिवेशस्यैवोचितत्वादिति चेत्—सत्यम् । जन्यत्वादिघटित-स्योक्तावस्थापदार्थस्यात्र निवेशे जीव-काल-नित्यविभूति-नित्यभगवद्दिव्यमङ्गल-विग्रहादौ सर्वदासंभावितत्तत्संयोगादिरूपावस्था आदाय क्लेशेन लक्षण-समन्वयापेक्षया कालत्वादिनित्यधर्ममादायैव लक्षणवर्णनादिसौकर्याय प्रकृते अवस्थापदं धर्ममात्रार्थकं स्वीक्रियते चेत्-अस्तु कामम्; अथाप्यद्रव्य-वारकं विशेषणं प्रवेश्यमेवेति बोधनाय यदवस्थं द्रव्यमित्युक्तम् ।

## शरीरशब्दघटितवाक्यार्थः

तथाच तं प्रति शरीरत्वं नाम तन्निष्ठचैतन्यावच्छिन्नानुयोगिताकसंबन्धाभावार्हत्वाभाव प्रतिबन्धकाभावविशिष्टतन्निष्ठसंकल्पेतरकालावच्छिन्नाभावप्रतियोगित्व्यापारवद्भेदोभयानुयोगितावच्छेदकशक्तिभिन्नधर्मवत्त्वम् । अत्र तत्तदवस्थारूपधर्मे तादृशार्हत्वाभावानुयोगितावच्छेदकत्वस्याप्युक्तत्वात् तद्धर्मावच्छिन्ने तादृशसंबन्धाभावार्हत्वसत्त्वे तद्धर्मे तदभावानुयोगितावच्छेदकत्वासंभवात् यावत्सत्तमिति दलप्रयोजनलाभात् सत्ताकालिकत्वरूपविशेषणं त्यक्तम् । अस्येदं शरीरमिति व्यवहारे तन्निष्ठेत्यंशपरित्यागेन उक्तविधाभावद्वयानुयोगितावच्छेदकशक्तिभिन्नधर्मवदिति शरीरपदार्थः । तद्घटके चैतन्ये संकल्पे च अस्येति षष्ठ्यर्थाधेयतया अन्वयः । इदम्पदार्थतावच्छेदकस्य तादृशानुयोगितावच्छेदकधर्मस्य चाभेदभानं समभिव्याहारबलादिति ध्येयम् ॥

## शरीरलक्षणं द्वितीयम्

अथ द्वितीयं लक्षणम्—यस्य चेतनस्य यदवस्थं द्रव्यं यावत्सत्तं धार्यमिति । अत्र धृतिपदेन पतनाभावादिविलक्षणा तावत्क्षणसंबन्धरूपा स्थितिरेव विवक्षितेति प्रागेवावाचि । धारकत्वं स्थितिप्रयोजकत्वमिति धार्यत्वं प्रयोज्यस्थितिकत्वमेव "आत्मैकाश्रयत्वमात्मविश्लेषे शरीरविनाशादवगम्यते" इति श्रीभाष्यानुसारेण । श्रीमद्रहस्यत्रयसाराभिसंहितप्रकारेण चात्र विवक्षितः प्रयोज्यप्रयोजकभावो नित्यजीवकालादिस्थितिसाधारणः, एतच्चेतनाभावे इदं न स्यादित्यारोपावसेयः स्वरूपसंबन्धविशेषः; सौभर्यादिशरीरान्तरेषु, यद्ययं चैतन्यद्वारा न स्यात्, तदेदं न स्यादिति निश्चयात् । 'एकां शाखां जीवो जहाति, अथ सा शुष्यती' त्युक्तरीत्या सौभरेः स्थितिप्रयोजकत्वाङ्गीकारान्न क्षतिः । नित्यमुक्तचैतन्यसंबन्धस्य सर्वत्र सत्त्वेऽपि ईदृशप्रयोज्यप्रयोजकभावे प्रमाणाभावान्नातिव्याप्तिः । प्राणेन्द्रियपुत्रशरीरादीनामपि ईदृशस्थितिमत्त्वाभावान्न दोषः । शिरस्येवोत्पन्नविनष्टयूकादौ च नातिव्याप्तिः; तत्स्थितेरपि तत्प्रयोज्यत्वे प्रमाणाभावात् । यूकनाशात् प्रागेव जीवविश्लेषे तस्य बहिर्निःसरणादिसंभवात् । एवं परकायस्थितेरपि विनाऽप्येतदात्मानं सद्भावात् प्रयोज्यत्वाभावान्न परकायस्य स्वकायत्वप्रसङ्गः ।

ननु ज्वरजाठराग्निपञ्चवृत्तिप्राणादीनां चेतनाभावेऽभावस्य सुवचत्वात् तत्प्रयोज्यस्थितिकत्वमस्तीति चेत्—यद्येवम्, तर्हि तत्प्रयोज्यत्वस्थाने

तन्निष्ठचैतन्यसंबन्धप्रयोज्यत्वं विवक्ष्यताम् । तेषामात्मप्रयोज्यत्वेऽपि न तत्प्रयोज्यत्वमिष्यत इति । ननु सौभरिशरीरान्तरेषु ज्वरादेश्चैतन्यसंबन्धप्रयोज्यत्वमेव वक्तव्यमिति चेत्— न ; तत्र शरीरगतचैतन्यसंबन्धस्य प्रयोजकत्वेऽपि स्वनिष्ठचैतन्यसंबन्धप्रयोज्यत्वस्य विवक्षितत्वेनादोषात् । वस्तुतः शरीरस्थिताविव चैतन्यसंबन्धः प्रयोजकः । ज्वरादिस्थितौ तु अदृष्टविशेषसहकृतशरीरसंबन्ध एव प्रयोजक इति नैव दोषः प्रसज्यते ।

ननु यस्य पुरुषस्य वीक्षणवशेन किञ्चिद्वस्तु अविनष्टं चिरमनुवृत्तम्, तत्र तच्चैतन्यसंबन्धप्रयोज्यस्थितिकत्वसत्त्वेनातिव्याप्तिरिति चेत्—अत एव यावत्सत्तमिति निवेश्यते । तेन यावत्सत्तं तद्धार्यत्वकथनेन स्थितिप्रयोजके चैतन्यसंबन्धे शरीरत्वाभिमतवस्तुसत्ताव्यापकत्वं लभ्यते । एवञ्च कदाचित् स्पृष्टे कटाक्षिते वा तत्र वस्तुनि न दोषः । एतावन्मात्रोक्तौ नित्यमुक्तशरीरत्वं सर्वस्य स्यादिति प्रयोज्यत्वस्यापि निवेशः । मद्दृष्टिपर्यन्तमिदं तिष्ठत्विति येन यद् वस्तु दृष्टम्, तस्यापि न तच्छरीरत्वापत्तिः; तद्दृष्टिप्राक्कालिकस्थितौ तच्चैतन्यसंबन्धाभावात् । तथाविधसंकल्पेन चैतन्यसंबन्धपूर्वकमुत्पाद्य दृष्टिस्थापितेऽपि वस्तुनि, इदमेवं तिष्ठत्विति संकल्पप्रयोज्यत्वेऽपि दृष्टिप्रयोज्यत्वं नाङ्गीक्रियते । अस्तु वा सर्वथा दोषः— अथापि संकल्पशक्तिविशेषादिसहकृतचैतन्यसंबन्धप्रयोज्यत्वेऽपि न केवलप्रयोज्यत्वमिति लक्षणस्य तथा विवक्षितत्वान्न दोषः । एतादृशविवक्षायाञ्च यावत्सत्तमितीदम्, तदभावे इदं न भवतीतीदृशप्रयोज्यप्रयोजकभावज्ञापनाय । यद्वा मत्स्यशिशूनां तन्मातृसमीक्षणमात्रेण स्तन्यपानेनेव स्थितिरिति तत्र स्तन्यादिस्थल इव शक्तिविशेषापेक्षाविरहेण मत्स्यकानां तन्मातृशरीरत्वापत्तिरिति यावत्सत्तमित्यावश्यकम् । तथा च तत्प्रयोज्यसत्तासामान्यकत्वमित्युक्तं भवति । स्वहस्त एवोत्पन्नविनष्टे वस्तुनि पतनाभावरूपधारणस्य स्वप्रयोज्यत्वेऽपि तत्सत्तानुवृत्तिरूपस्थितेर्न स्वचैतन्यसंबन्धप्रयोज्यत्वमिति न दोषप्रसक्तिः । प्रभायाः प्रभावदधीनस्थितिकत्वेऽपि चैतन्यसंबन्धघटितलक्षणस्य न प्रसङ्गः । धर्मभूतज्ञानस्य च न शरीरत्वम्; तत्स्थितेश्चैतन्यसंबन्धायत्तत्वाभावात् । इदं चेतनस्येति पदलभ्यम् । शरीरस्थिताविव शरीरक्रियादावपि चैतन्यसंबन्धस्य प्रयोजकत्वमस्तीति तदधीनस्थितिकत्वात् शरीरक्रियादावतिव्याप्तिरिति द्रव्यमिति । शरीरस्याप्यवस्थान्तरवेषेण चैतन्य संबन्धाभावेऽपि सद्भावात् प्रयोज्यत्वं न स्यादिति शङ्कायां यद्धर्मावच्छिन्नस्थितेः प्रयोज्यत्वम्, तद्धर्मावच्छिन्नत्वमेव शरीरत्वमिति वक्तुं पदवस्यमिति ।

एवञ्चैकधर्मावच्छिन्नसत्तायां प्रयोज्यत्वसद्भावमात्रेण नावस्थान्तरे शरीरव्यवहार-प्रसङ्गः । तथा च तन्निष्ठकेवलचैतन्यसंबन्धप्रयोज्यतद्धर्मावच्छिन्नसत्तासामा-न्यकत्वं तच्चेतनं प्रति तद्धर्मावच्छिन्नस्य शरीरत्वम् । अस्येदं शरीरमित्यत्र शरीरपदं केवलचैतन्यसंबन्धप्रयोज्यकिञ्चिद्धर्मावच्छिन्नसत्तासामान्यकपरम् । अस्येति चेतनवाचकपदोत्तरषष्ठ्या आधेयत्वमर्थः चैतन्यान्वयि । इदम्पदार्थ-तावच्छेदकधर्मस्य शरीरपदार्थघटकधर्मस्य चाभेदबुद्धिः पार्ष्ठिकी । अतो नावस्थान्तरे शरीरत्वापत्तिरिति ।

## तृतीयलक्षणम्

अथ तृतीयं लक्षणम्—यस्य चेतनस्य यदवस्थं द्रव्यं यावत्सत्तमशेष-तानर्हम्, तस्य तदवस्थं शरीरमिति । प्रभावन्तं प्रति प्रभायाः शरीरत्वापत्तिरिति चेतनस्येति । शरीररूपद्रव्यस्यावस्थान्तरे अशेषतार्हत्वात् अनर्हत्वघटितलक्षण-स्याव्याप्तिरिति यदवस्थमिति । चेतनगतसंयोगाधायकक्रियादेः शरीरत्ववारणाय द्रव्यमिति । शेषभूतमित्युक्तौ कादाचित्कशेषभावे गृहक्षेत्रादावतिव्याप्तिरिति अशेषतानर्हेत्युक्तम । गृहक्षेत्रपुत्रादेर्दानादिना स्वशेषत्वनिवृत्तिसंभवान्ना-नर्हत्वमिति न दोषः । इदञ्च भाष्ये शेषतैकस्वरूपमिति एकपदबलाल्लब्धम् । अत्र, 'शेषतैकस्वरूपमित्येकपदेन स्वाभाविकशेषित्वं नास्तीत्यर्थबोधनेन कादाचित्कस्वेच्छायत्तभागवतशेषत्वशालिनि भगवति नातिव्याप्तिरित्युक्तौ कदाचिदपि शेषित्वरहिते प्राणेन्द्रियादावतिव्याप्तिरिति सर्वात्मनेति पदमनुषज्य यावत्सत्तं शेषत्वं वर्णनीयम् । एवञ्च प्राणादावाप्रलयस्थायिनि नातिव्याप्तिः । एतन्निवेशेऽपि यावत्सत्तं शेषतया स्थिते कुठारादौ स एव दोष इति अशेषतानर्हमित्यर्थवर्णनमावश्यकम्' इति दर्शयितुं यावत्सत्तमित्युक्तम् । अशेषतानर्हमिति परिष्करणानन्तरं न तस्य लक्षणे प्रवेशः ।

एतच्छरीरलक्षणघटके तच्छेषत्वे तन्निष्ठातिशयाधायकत्वरूपे तन्निष्ठेत्यत्र तन्निष्ठनिरूपकताकाधेयताघटकनिरूपकतायां चैतन्यावच्छिन्नत्वनिवेशः । तेन चैतन्यनिष्ठाधेयतानिरूपकतायामिव चैतन्याधेयातिशयनिष्ठाधेयता-निरूपकतायामपि चैतन्यावच्छिन्नत्वस्यानङ्गीकारात् तादृशातिशयाधायकत्वा-भावानर्हत्वस्य धर्मभूतज्ञाने अभावान्न तस्य शरीरत्वापत्तिः। नन्वीश्वरकालादेर्विभुतया चेतनसंयोगावश्यम्भावेन चेतनगतसंयोगरूपातिशयाधायकत्वाभावानर्हतया तत्रा-तिव्याप्तिरिति चेन्न—अत्र ह्यतिशयो नाम शेषत्वाभिमतवस्तुसत्ताप्रयोजक-कार्यविशेषः । तस्य तत्प्रयोजकत्वं स्वर्गस्य ज्योतिष्टोमादिप्रयोजकत्वमिव,

'एतदर्थमिदमस्तु' इति भगवत्संकल्पसिद्धम् । कालादेश्च न चेतनेन संयोगार्थं सद्भावः; अपित्वन्यार्थं सतस्तस्यावर्जनीयः संयोग इति न तत्र तादृशातिशयाधायकत्वं नियमेनेति न दोष इति । तथाच अस्येदं शरीरमित्यत्र चैतन्यावच्छिन्नाधिकरणतानिरूपकतादृशातिशयाधायकत्वाभावार्हत्वाभावानुयोगितावच्छेदक-शक्तिभिन्न-धर्मवत् इति शरीरपदार्थः । अस्येति षष्ठ्यर्थाधेयत्वस्य चैतन्येऽन्वयः । इदम्पदार्थतावच्छेदकस्य चैत्रत्वमैत्रत्वघटत्वपटत्वादेः शरीरपदार्थघटक तादृशधर्मस्य चाभेदभानं समभिव्याहारादिति ।

## सूचितं तुरीयं लक्षणम्

एवं श्रीभाष्ये कण्ठोक्तं लक्षणत्रयमत्र प्रदर्श्य फलितं चतुर्थं लक्षणमप्युक्तम्, 'यस्य चेतनस्य यदवस्थमपृथक्सिद्धविशेषणं द्रव्यं यत्, तदवस्थं तत् तस्य शरीरम्' इति । कथमस्य फलितत्वमिति चेत्—तदुच्यते, 'यावत्सत्तमसंबन्धानर्हत्वमपृथक्सिद्धत्वम् । आधेयत्वविधेयत्वशेषत्वानि चापृथक्सिद्धेरवान्तरभेदा इह विवक्षिताः' इति । अयं भावः—प्रथमलक्षणप्रविष्टमसंबन्धानर्हत्वं यद्यपि नियन्तुं शक्यमिति दलान्तरावैयर्थ्याय संभावितसंबन्धान्तरसाधारणम्—तथाप्यन्यत्र पितापुत्रभावादिरूपत्वेऽप्यत्र शरीरे समन्वयः अपृथक्सिद्धिसंबन्धमादायैव कर्तव्यः । यद्यपि शेषत्वादिः संबन्धः संभवति—तथापि तादृशशेषत्वाद्यभावानर्हत्वमेवान्यत्र कथं न भवति, केवलं पुनरत्रेति विमर्शे अपृथक्सिद्धिरेव तत्र नियामिका वाच्या । अतोऽवश्यञ्चयापृथक्सिद्धिसंबन्धमादाय लक्षणसमन्वयः सिद्ध्यति । तस्य तत्त्वेन रूपेण प्रवेशं विहाय सामान्यरूपेण निवेशादेव दलान्तरस्यावश्यकता, न पुनर्विशिष्य निवेश इति तथा निवेश्य लक्षणमपि स्वोक्तशेषत्वघटिततृतीयलक्षणवत् संभवत् तत्र भाष्ये विवक्षितं भवितुमर्हतीति । यद्वा यावत्सत्तमसंबन्धानर्हत्वस्यापृथक्सिद्धिरूपत्वात् तत्र संबन्धपदेन तत्तल्लक्षणगताधेयत्वादेरेव गृहीतप्रायत्वादेतल्लक्षणसूचनार्थमेवैतावदित्याशयः ।

नन्वाधेयत्वविधेयत्वशेषत्वानि शरीरशब्दप्रवृत्तिनिमित्तानीति भाषितत्वात् तावत एवातिलघुनो लक्षणत्वमुचितम् । नैवम् । यथाश्रुतरूपेणाधेयत्वादेर्लक्षणत्वेऽतिप्रसंगेन तस्य भाष्यस्योक्तद्वितीयप्रथमतृतीयलक्षणपर्यवसानपरत्वस्याङ्गीकार्यतया तत्र च धारयितुं शक्यत्वम्, अशेषत्वानर्हत्वम्, उक्तासंबन्धानर्हत्वञ्चानन्यसाधारणमपृथक्सिद्धिसंबन्धबलायत्तमिति तत्कथने तदपि कथितप्रायमेवेति । ननु तर्हि अपृथक्सिद्धत्वमेव गृहीतं लक्षण-

मस्तु; किमधिकदलेन; तत्राह, 'व्यवच्छेद्यं तु स्पष्टमेवे'ति । तथा च आवश्यकत्वात् किञ्चिदधिकः परिष्कार इति भावः ।

नन्वपृथक्सिद्धत्वस्य लक्षणत्वेनेष्टत्वे आधेयत्वविधेयत्वशेषत्वानि शरीरशब्दप्रवृत्तिनिमित्तमिति न भाष्येत । फलितत्वेनाभिमतस्य लक्षणस्य, 'तच्छेषैतकस्वरूपञ्चे'ति, चकारेणानुक्तसमुच्चायकेन ज्ञापनोक्तावपि अत्रापि तज्ज्ञापनस्य वर्णयितुमशक्यत्वात् । अतो नेदं श्रीभाष्यकाराभिप्रेतमित्याशङ्कायां तस्यापि ग्रन्थस्य यथाश्रुतार्थकत्वेऽनुपपत्तिसत्त्वेन, यादृशस्य प्रवृत्तिनिमित्तत्वस्वीकारे सर्वमिदमाधेयत्वादिकमर्थसिद्धं भवितुमर्हति तादृशपरत्वमेव स्वीकार्यमित्याशयेनाह, 'एतेनैतदपी'त्यादि । यस्य चेतनस्येत्यादिभाष्यस्यैवं योजनाऽपि स्यात् । यद्‌द्रव्यं सर्वात्मना यस्य चेतनस्य भवति । यावत्सत्तं यच्चेतनसंबन्धीति यावत् । अत्र षष्ठ्यैव संबन्धलाभः; न तु सर्वात्मनेति पदमात्रेण । एवमपृथक्सिद्धिसंबन्धविवक्षया लक्षणमुक्त्वा इममेव संबन्धं तत्कार्यनियमनादिमुखेन दर्शयितुम्, नियन्तुं शक्यमित्यादि भाषितम । अतः षष्ठ्यर्थशोधने फलितमिदं लक्षणमिति ।

अथ लक्षणव्याख्या—प्रभाप्रभावतोरप्यपृथक्सिद्धत्वात् चेतनस्येति । शरीरस्याप्यवस्थान्तरे पृथक्सिद्धत्वादपृथक्सिद्धत्वमसंभवीत्यतो यदवस्थमिति । (मूले तदित्यस्य तदवस्थमित्यर्थः) ननु किमिदं चेतनापृथक्सिद्धत्वम्? न तावत् स्वप्रतियोग्यवच्छेदकयावत्कालावच्छिन्नचेतनसंबन्धवत्त्वम्; अस्य जीवं प्रति ईश्वरेऽपि सत्त्वेन तस्यापि जीवशरीरत्वापत्तेः । न च चेतनानुयोगिकतादृशसंबन्धप्रतियोगित्वम; संबन्धपदेन परम्परासंबन्धग्रहणे रूपरसादीनामपि चेतनापृथक्सिद्धत्वव्यवहारापत्तेः साक्षात्संबन्धस्यैवात्र निवेश्यतया सौभरिशरीरान्तरेषु तत्साक्षात्संबन्धाभावेनाव्याप्तेः । न च अपृथक्सिद्धत्वस्यान्यत्र साक्षात्संबन्धरूपत्वेऽपि प्रकृते शरीरलक्षणे साक्षात्परम्परासाधारण्येन संबन्धो विवक्ष्यते । रूपरसादीनां द्रव्यत्वाभावादेव तद्वारणम् । अथवा तच्चेतनानुयोगिकतादृशसंबन्धप्रतियोगित्वं नाम तन्निष्ठचैतन्यानुयोगिकतादृशसंबन्धप्रतियोगित्वम् । सर्वथा सौभरिशरीरेषु नाव्याप्तिरिति वाच्यम्—प्रथमकल्पे तेजश्शरीराध्यक्षं जीवं प्रति प्रभायाः शरीरत्वापत्तेः । परम्परया जीवसबन्धिजीवान्तरापृथक्सिद्धशरीरस्य तज्जीवशरीरत्वापत्तेः । मुक्तचैतन्यसंबन्धिजीवान्तरापृथक्सिद्धशरीरस्य मुक्तशरीरत्वापत्तेश्च । द्वितीयेऽपि मुक्तचैतन्यापृथक्सिद्धत्वस्य जीवान्तरशरीरे सद्भावेनतिव्याप्त्यवारणात् । न च मुक्तस्यान्यशरीराधारत्वे प्रमाणाभावेन प्रकृतसंबन्धे स्वसत्ताप्रयोजकत्वविशेषणदानेन स्वसत्ताप्रयोजकतन्निष्ठ-

चैतन्यानुयोगिकतादृशसंबन्धप्रतियोगित्वं तच्छरीरत्वमित्युच्यत इति न दोष इति शङ्क्यम्—एवं तर्हि लाघवात् द्वितीयलक्षण एव पर्यवसानसंभवेन लक्षणान्तरत्वायोगात् । किञ्च, कालपरमात्मनोरीदृशमपृथक्सिद्धत्वं दुर्वचम् । स्वपदेन तदुभयसंयोगरूपसंबन्धग्रहणे तत्प्रतियोगिनः कालस्यावच्छेदकस्य कालान्तरस्य वक्तुमशक्यत्वात् । स्वस्य च स्वावच्छेदकत्वासंभवात् । स्वपरनिर्वाहकसमाधिना कथञ्चिन्निर्वाहेऽपि संततसंचरणशीलानां जीवात्मनामन्येषाञ्च परिच्छिन्नानां परमात्मना संयोगस्य क्रियाभेदभिन्नतया कस्यामपि संबन्धव्यक्तौ यावत्कालावच्छिन्नत्वस्यासंभवादिति चेत्—उच्यते ।

## अपृथक्सिद्धिलक्षणम्

अपृथक्सिद्धिलक्षणं प्रागुक्तम्; तद्धर्मावच्छिन्नानुयोगिकाभावाप्रतियोगितन्निरूपिताधेयताप्रयोजकसंबन्धवत्त्वं वा । यदवस्थमाधेयम्, तदवस्थं तद्धर्माव च्छिन्नम् । तत्र च नियमेन धर्मिनिरूपिताधेयताऽस्तीति तत्प्रयोजकसंबन्धवतोरुभयोरपृथ क्सिद्धत्वम् । सर्वस्य द्रव्यस्य यावत्सत्तमीश्वराधेयत्वमस्ति । तथा गुणानां गुण्याधेयत्वम् । एवं शरीरस्यापि जीवाधेयत्वम् । एवञ्चापृथक्सिद्धत्वस्याधेयत्वाघटितत्वमत्या घटाकाशयोरपृथक्सिद्धत्वापादनं परास्तम् । नचेष्टापत्तिः; तथासति घटपदेन तदपृथक्सिद्धाकाशबोधप्रसङ्गात् । अथवेष्यतामपृथक्सिद्धत्वम् । न चोक्तो दोषः; अपृथक्सिद्धधर्मवाचिनां धर्मिपर्यन्तत्वस्यैव व्युत्पत्त्या ग्रहणात् घटस्याकाशं प्रति धर्मत्वाभावेनानापत्तेः । एवञ्च सर्वसाधारणमपृथक्सिद्धत्वं नाम यद्धर्मावच्छिन्नानुयोगिकाभावाप्रतियोगि यत्, तद्धर्मावच्छिन्नं तच्चेत्येतदुभयत्वम् । स्वानुयोगिकसंबन्धप्रतियोगित्वं प्रतियोगितावच्छेदकसंबन्धः । स्वं धर्मि । अनेन संबन्धेन धर्मिणो धर्मे नियमेन सत्त्वात् धर्म्यभावस्य तत्र दुर्वचत्वाक्षतेमतत् । एवञ्च संबन्धस्य भिन्नभिन्नत्वेऽपि न व्यापकत्वक्षतिः । वस्तुन एव व्यापकत्वकथनात् । संबन्धश्चायं कालिकातिरिक्तः ।

एवं सामान्यतोऽपृथक्सिद्धिस्वरूपस्वीकारेऽपि प्रकृते सर्वेषां मुक्तशरीरत्ववारणायाधेयताघटितमेव तल्लक्षणं वाच्यम् । इदञ्च चतुर्थचतुर्थेऽधिकरणसारावल्यां विंशेन श्लोकेनाप्यवगमितप्रायम् । यद्यपि जीवस्याणुत्वादमूर्तत्वाच्च स्थूलमूर्तशरीराधारत्वं दुर्वचमिव—तथाप्यात्मविश्लेषे शरीरविनाशात् शरीरसत्ताप्रयोजकस्यात्मनः तस्य चाधाराधेयभाव ऊरीक्रियते । धारको ह्याधारः; धार्यमाधेयम् । अणुरप्ययमात्मा, यथा दीपः प्रभाद्वारा प्रकाशं परेषामाधत्ते, यथा च भास्करः प्रभाभिर्भासि

बिभर्ति, तथैव विलक्षणावस्थेन चैतन्येन व्याप्नुवन् शरीरं धारयति । परमात्मा पुनर्वैभवेन स्वयमद्वारीकृत्यैव चैतन्यम्, अखिलमशेषं धारयितुम् । नित्यमुक्तानां तु चैतन्यं विभुतो व्यापकमपि भगवत्संकल्पविरहेण न सर्वथा धारकत्वशक्तिं प्रतिपद्यते इति न तदाधेयत्वं जगतः । यद्यपि केचिन्नित्यसूरयः, केषाञ्चित् प्रापञ्चिकपदार्थानामभिमानिन इति विष्णुपुराणे अस्त्रभूषणाध्याय आवेदितमस्ति—अथापि तत्तद्वस्तूत्पत्तिप्रभृति तत्तद्विषये कात्स्न्र्येन तेषां शासनमेव न प्रवर्तते; कुतस्तेषां तथा धारकत्वम्! तथा च तन्निष्ठाभावाप्रतियोगिनी या तन्निरूपिताधेयता, तत्प्रयोजकसंबन्ध एव तयोरपृथक्सिद्धिसंबन्धः ।

न च कालस्य नियमेन घटपटादिः सर्वोऽप्याधेय इति तयोरपृथक्सिद्धत्वं स्यात् । न चेष्टापत्तिः; अपृथक्सिद्धधर्मिपर्यन्तार्थकतया सर्वेषामपि शब्दानां कालपरत्वापत्तेरिति वाच्यम्—कालस्य तत्तद्वस्तुविशेषणतयैव प्रतीयमानस्याधारत्वे प्रमाणाभावात् । किञ्च नैयायिकमतेऽपि कालस्य रूपाद्याधारतया कालस्य रूपादेश्चायुतसिद्धत्वपरिहाराय कालिकसंबन्धानवच्छिन्नाधाराधेयभाव एव विवक्षणीयः । उक्तं हि सूत्रकारेण, 'इहेति प्रत्ययहेतुः समवायः' इति । तद्वदस्माभिरपि इदमिदानीमिति प्रतीतिनियामकसंबन्धानवच्छिन्ननिरुक्ताधेयताप्रयोजकसंबन्ध एवापृथक्सिद्धिरिष्यते । यथा परमतेऽपि कालस्य विभुत्वेन सर्वसंयुक्तत्वेऽपि न तत्संयोगस्य वृत्तिनियामकता, आकाशादिसंयोगवत्; किं तु कालिकस्वरूपसंबन्धस्यैव तदतिरिक्तस्य—तथैवास्मन्मतेऽपि । कालवृत्तिगुणं प्रति कालस्यापृथक्सिद्धिरपि इदानीमितिप्रतीतिनियामककालिकस्वरूपसंबन्धापेक्षया विलक्षण एव स्वरूपसंबन्धः, यथा कालवृत्तिक्रमभावं प्रति कालस्योच्यमानः स्वरूपसंबन्धः कालिकसंबन्धादतिरिक्तः, तथैवेत्यदोषात् ।

न च यत् कन्दुकादिकं स्वहस्त एव क्रियमाणं विनष्टम्, तन्निष्ठाभावाप्रतियोगिनी शरीरनिरूपिताधेयतेति शरीरकन्दुकयोरपृथक्सिद्धत्वापत्तिरिति वाच्यम्—तत्र परं तस्येष्टत्वात् । न च तावता कन्दुकशब्देन तच्छरीरबोधापत्तिः; कन्दुकत्वधर्माक्रान्तानां सर्वेषां शरीरापृथक्सिद्धत्वाभावेन तथा व्यवहारायोगात् ।

यद्वा अपृथक्सिद्धत्वं यदभावारोपप्रयोज्यारोपविषयस्वसत्ताभावकं यत्, तदुभयत्वम् । यदीश्वरो न स्यात्, जगदेव न स्यात्, यदि जीवो न स्यात्

शरीरं न स्यात्, यदि घटादिकं न स्यात् रूपादिकं न स्यादिति धर्म्यभावारोपेण धर्माभावारोपसंभवाल्लक्षणसमन्वयः । दण्डाभावे घटो न तिष्ठेदित्यारोपस्तु न भवति । दण्डाभावे घटोत्पत्त्ययोगेऽपि घटसद्भावसंभवात् । दण्डनाशेऽपि घटस्थितेः । घटोत्पत्तेः दण्डापृथक्सिद्धत्वापत्तिस्तु न; तस्यास्तदनाधेयत्वात् । उक्तकन्दुकादेस्तु नैतादृशापृथक्सिद्धत्वम् । कन्दुकनाशात् प्राक् शरीरविशरणेऽपि तत्सद्भावसंभवात् । सौभर्यादि-शरीरान्तरेषु सौभर्याद्यभावेऽभावस्य प्रामाणिकत्वान्न क्षतिः । यदि तु— जीवचैतन्यसंयोगाभावे शरीराभाव इत्यारोपसंभवात् चैतन्यसंयोगस्य शरीरस्य चापृथक्सिद्धत्वापत्तिः । न चेष्टापत्तिः, संयोगस्य शरीरगुणत्वादिति वाच्यम्; धर्म्यभावारोपेण धर्माभावारोपस्य प्रागुक्तत्वात् तथात्रानुक्तेः । अथवा संयोगसंबन्धेन चैतन्याभावे शरीराभाव इति चैतन्यशरीरयोर-पृथक्सिद्धत्वं स्यादिति विमृश्यते—तर्हि निरुक्तोभयत्वमात्रं नापृथक्सिद्धत्वम्; किन्तु निरुक्तोभयनिष्ठाधाराधेयभाव एव । यद्यपि घटाधारत्वं भूतलस्य यथा घटपतनप्रतिघातिसंयोगवत्त्वात्, न तथा चेतनस्याधारत्वम् । तदिदं, 'न च मत्स्थानि भूतानि' इत्यनेन गीतम्—अथापि लोके आधाराधेयभावो मूर्तविषय एव, पतनप्रसक्तावेवेति न नियमः; द्रव्ये रूपरसाद्याधारत्वस्य, आत्मनि ज्ञानाद्याधारत्वस्य च संप्रतिपन्नत्वात् । तथाच यथा अमूर्तस्य पतन-प्रसक्तिरहितस्यप्याधेयत्वमनुभवबलात्, यथा च कालेश्वरादेर्मूर्ताधा-रत्वमन्यमतेऽपि, तथा चेतनस्यामूर्तस्याधारत्वं देहभृदित्याद्यनुभवव्यवहार-बलात्, 'जीवभूतां महाबाहो ययेदं धार्यते जगत्' 'भूतभृतन्न च भूतस्थः' इत्यादिप्रमाणबलाच्च स्वीक्रियते । अयमाधाराधेयभावः सौभर्यादेः शरीरान्तरं प्रत्यपि, स्वसंबन्धिशरीरान्तर्गत-साक्षाज्जीवाधिष्ठानभूतहृदयातिरिक्त-प्रदेशं प्रतीव चैतन्यसंयोगबलादभ्युपगम्यते । अन्यथा हि कार्त्स्न्येन एकशरीरधारणस्याप्यणोरसंभवेनानुभवप्रमाणव्याकोपप्रसङ्गात् । न च जीवोऽत्रा-ऽस्तीतिव्यवहारबलात् देहस्यापि जीवाधारत्वं स्यादिति वाच्यम्—आधाराधेय-भावविरहेऽपि देहान्तःप्रवेशमात्रेण तथा व्यवहारसंभवात् । घटे गगनमस्तीति, गगने विहङ्गमोऽस्तीति च यथा । चैतन्यशरीरयोश्च नाधाराधेयभावः, तत्र प्रमाणाभावात् । न च संकल्पधार्यत्वस्य तत्रतत्रोक्तत्वात् स स्यादिति शङ्क्यम्—ईश्वरसंकल्पो हि इदं जगत् मदाश्रितं भवतु इत्याकारकः । तथाच संकल्पेन जगद्धारणं नाम स्वसंकल्पाधीनस्वनिष्ठजगन्नि-रूपिताधारताकत्वमीश्वरनिष्ठम् । ईश्वरनिष्ठतादृशाधारताप्रयोजकत्वञ्च संकल्प-

निष्ठम्; न पुनः साक्षादाधारत्वमित्यदोषात् । जीवसंकल्पस्तु न तादृशाधारता-प्रयोजकोऽपि भवति; किं तु जागरदशायां पतनाभावरूपधृतिमात्रप्रयोजक इति न संकल्पस्याधारत्वप्रसक्तिः ।

## तुरीयलक्षणस्वीकारे औचित्यम्

ईदृशापृथक्सिद्धत्वघटितश्चेदं शरीरलक्षणं पूर्वोक्तलक्षणत्रयापेक्षया लघुत्वरहितमपि नियाम्यत्वादितत्तदाकारप्रयोजकतया एतज्ज्ञाने चैतत्प्रयोज्यानां तेषामपि ज्ञानसंभवेन शरीरशब्दप्रवृत्तिनिमित्तं स्वीक्रियते; त्रिष्वेकतमग्रहणे विनिगमकाभावात् । त्रयं प्रति उपजीव्यत्वेनास्य वैशिष्ट्यात् । वस्ततस्तु नियाम्यत्वशेषत्वघटितलक्षणापेक्षया लघुत्वं निर्विवादम् । द्वितीयलक्षणेऽपि तदभावारोपप्रयोज्यत्वविवक्षणान्न लाघवम्; प्रत्युत सत्तासामान्येति सामान्य-पदघटनात्, या या सत्ता सा सर्वा तत्प्रयोज्येति व्याप्यव्यापकभावे पर्यवसानाद्गौरवमेव ।

न चेदं चतुर्थलक्षणमेव, 'धारयितुं शक्य'मिति भाष्यविवक्षितमिति वाच्यम्—तत्र श्रुतप्रकाशिकादिदर्शितरीत्या सर्वात्मनेति पदान्वयस्य स्वरसप्रतीततया, धारयितुं शक्यमिति पदस्वारस्येन च तत्प्रयोज्यधृतिमत्त्वस्य, सर्वात्मनेतिपदेन धृतेः प्रयोज्यत्वस्य च व्याप्यव्यापकभावस्य च प्रतीत्या तदविरोधेन लक्षणकरणस्यैव युक्तत्वात् । अस्य द्वितीयलक्षणवाक्याभिमतत्वे त्रयाणां तुल्यतया निर्देशेन एतदेकतात्पर्यकताया भाष्यसूक्तौ दुर्वचत्वात् । तस्माद् भाष्यकारैः कण्ठरवेणानुक्तमिदं त्रितयसूचितमित्येव युक्तम् । अतोऽस्य प्रयोजकाकारत्वात् लघुत्वाच्चेदमेव शरीरशब्दप्रवृत्तिनिमित्तम् ।

वस्तुतस्तु अपृथक्सिद्धत्वस्यैवंरूपेण परिष्कारेऽपि प्रकृते शरीरशब्द-प्रवृत्तिनिमित्तं नैतावत् । किंतु यथा घटादिशब्दैर्घटत्वादीनां न किञ्चिद्रूपेण बोधः, अपि तु स्वरूपेण । घटत्वादिसंस्थानविशेषस्य किञ्चिद्रूपेण भानार्हस्यापि ततः स्वरूपत एव भानानुभवात्—तथा शरीरशब्दतोपि निरुक्तोभयनिष्ठाधाराधेयभाव-रूपसंबन्धस्य स्वरूपतो बोध इति स्वीक्रियते । तथाच प्रतियोगितासंबन्धेन स्वरूपतो भासमान तादृशसंबन्धविशिष्टद्रव्यं शरीरपदार्थः । अस्येदं शरीरमित्यत्र षष्ठ्यर्थस्य संबन्धेऽन्वयः । तत्र चैतन्यस्य चेतनापृथक्सिद्धतया तत्र शरीरव्यवहारवारणाय अस्येति प्रकृत्यर्थस्य चैतन्यावच्छिन्नानुयोगिताकत्व-संबन्धेनान्वयः स्वीक्रियते; नानुयोगितासंबन्धमात्रेण । अयमेव संबन्धः

प्रकृते षष्ठ्यर्थः । तदेकदेशचैतन्ये अस्येति प्रकृत्यर्थजीवान्वयः । यदि तु स्वरूपतो भासमाने धर्मे समभिव्याहृतपदार्थान्वयो न संभवतीत्यालोच्यते, तर्ह्येवमस्तु—चेतनापृथक्सिद्धविशेषणद्रव्यत्वं चैतन्यावच्छिन्नाधारतानिरूपितसंयोगसंबन्धावच्छिन्नाधेयतावत्स्वरूपमेव शरीरशब्दप्रवृत्तिनिमित्तम् । आधारतायां चैतन्यावच्छिन्नत्वनिवेशात् धर्मभूतज्ञानस्य, शरीरत्वापत्तिवारणम् । आधेयतायां संयोगसंबन्धावच्छिन्नत्वनिवेशात् अद्रव्यस्य न शरीरत्वम् । सौभर्यादिशरीरनिष्ठाधेयतायाः स्वसंयुक्तचैतन्यसंयोगसंबन्धावच्छिन्नत्वेऽपि तत्र संयोगस्यापि घटकतया नासमन्वयः । अथवा शरीरत्वं संयुक्तचैतन्यसंबन्धावच्छिन्नाधेयतावत्त्वम् । मुक्तचैतन्यस्य सर्वत्र प्रसरेऽपि शरीरान्तरं प्रति मुक्तानामाधारत्वे भगवत्संकल्पाभावेन न कश्चिद्दोषः । सौभरिशरीरे पुनरिदमस्ति । न च सामान्यतश्चैतन्यप्रसरस्याधाराधेयभावनियामकता ; घटादिप्रत्यक्षे चैतन्यप्रसरसत्त्वेऽपि आत्मनस्तदाधारत्वासंप्रतिपत्तेः । अतो विलक्षणावस्थचैतन्यसंबन्धस्यैव तन्नियामकत्वम् । विस्तरोऽत्रास्मदुपनिषद्भाष्यपरिष्कारे छान्दोग्ये सद्विद्यायां द्रष्टव्यः । क्षुद्रायस्कान्तादीनामपि स्वप्रभावभूमानुगुण्येन दूरस्थपदार्थधारणाकर्षणादिकरत्वमध्यक्षयतां मत्यद्भुतयोगप्रभावेषु सौभरिप्रभृतिषु विलक्षणेष्वीदृक्षशक्तिसंपत्तौ कः संदेहः? आधाराधेयभावश्चायं प्रतियोग्यनुयोगिभावादिवत् स्वरूपसंबन्धविशेषः । अस्येदं शरीरमित्यत्र शरीरशब्दार्थघटकाधेयतायां षष्ठ्यर्थस्य निरूपितत्वस्यान्वयः । तादृशाधेयतावदभिन्नमिदमिति बोधः । इदम्पदार्थतावच्छेदकधर्मावच्छिन्नत्वस्याधेयतायां भानं समभिव्याहारबलादिति महल्लाघवमत्रेति आचार्याणामत्रैवाऽऽदरो महानिति सर्वं समञ्जसम् ।

## सौबालादिदर्शितविशेषः

एवम्भूतशरीरात्मभावनिबन्धनमेव वेदे ब्रह्मणश्चेतनाचेतनप्रपञ्चेन सामानाधिकरण्यवचनम् । अस्य सामानाधिकरण्यनियामकत्वमपि एतत्स्वरूपवत् प्रमाणप्रतिपन्नमेव । तस्मिन् सति लोकानुभवा अनुकूलतर्काश्च भगवद्रामानुजस्वामिपादैः सहकारितया सम्यगदर्शिषत । एतत्स्वरूपविषये अन्तर्यामिब्राह्मणादिकं प्रमाणमिति विदितमेव । अन्तर्यामिश्रुतिश्च बृहदारण्यक इव सौबालेऽपि श्रूयते । तत्रास्मिन् शरीरात्मभावे विशेषादरप्रादिदर्शयिषया एतच्छरीरात्मभावविद्याधिगमकगुरुपरम्पराप्रस्तावोऽपि सप्तमे खण्डे कृतः । 'दिव्यो देव एको नारायणोऽन्तर्यामी । स एतां विद्यामपान्तरतमाय वेदाचार्याय ददौ, स ब्रह्मणे स घोराङ्गिरसे, स रैक्काय, स रामाय, रामः सर्वेभ्यः'

इति एतद्विषये विशिष्य गुरुपरम्परां प्रस्तुवन्नयं खण्डः अस्य रहस्यतमत्वमाविष्करोति । एतन्निबन्धनश्च सामानाधिकरण्यमितीदमपि, 'तदनुप्रविश्य सच्च त्यच्चाभवत्', 'अनुप्रविश्य नामरूपे व्याकरवाणि', 'स एष सर्वभूतात्मा विश्वरूपो यतोऽव्ययः', 'सर्वं समाप्नोषि ततोऽसि सर्वः' इत्यादिश्रुतिस्मृतिसहस्रसंप्रतिपन्नम् । अस्य प्रधानतमार्थत्वादेव श्रीराममिश्रविरचितषडर्थसंक्षेपादौ संबन्धस्य पदार्थान्तरवत् पार्थक्येन परिगणनमाद्रियतेति विशिष्टाद्वैतिनिष्कृष्टं विशिष्टमिदं प्रमेयमिति ।

## ख्यातिप्रकाराः

तदेवं प्रधानप्रतितन्त्रभूतशरीरात्मभावविषये एतद्ग्रन्थकारप्रथमनिरूपितांशोपरि तत्परिपोषणात्मा विस्तरः अवश्यविज्ञेय इति एवं प्रत्यपादि । एवमुपरितनप्रकरणप्रमेयेषु विशेषमन्ते संजिघृक्षुणा संप्रति ख्यातिविषयेऽपि किञ्चिद् वक्तव्यमिह संगृह्यते—वदन्ति चैवं ख्यातिप्रकारान्—

"आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा ।
तथाऽनिर्वचनख्यातिरित्येतत् ख्यातिपञ्चकम् ॥"

इति । तत्रासत्ख्यातिर्माध्यमिकस्य बौद्धसार्वभौमस्य । शून्यवादिनस्तस्य हि मते सर्वात्मनाऽप्यसदेव ख्यायत इति । आत्मख्यातिर्योगाचारस्य बौद्धस्य; तेन विज्ञानस्यैवात्मशब्दवाच्यस्य बाह्यात्मना ख्यानस्वीकारात् । अख्यातिः प्राभाकरस्य; तेन इदं रजतमिति विशिष्टज्ञानस्य वाद्यन्तरसंमतस्य कारणभूतं यत्, इदमिति धर्मिज्ञानम्, रजतमिति स्मरणञ्च, तदुभयातिरिक्ता विशिष्टज्ञानात्मिका ख्यातिर्नास्तीत्यङ्गीकारात् । यद्वा अख्यातिर्नाम शुक्तौ रजतभेदख्यात्यभावः । भेदरूपविशेषस्य ख्यात्यभावकथनात् शुक्तिज्ञानं रजतज्ञानञ्चास्तीति, तयोर्भेदः परं न ज्ञायत इति च गम्यते । अन्यथाख्यातिश्च भाट्टनैयायिकादीनाम् । पञ्चमी चानिर्वचनीयख्यातिरद्वैतिषु श्रीशङ्करभगवत्पादानुयायिनाम् । तत्र प्रथमपक्षद्वयमवैदिकमतम् । विशिष्टाद्वैतिनस्तु, "स्वारस्यमन्यथाख्यातौ अख्यातौ लाघवं स्थितम्" इति वर्णयन्ति । निर्भरश्चाख्यातिपक्षे । परं तु यत्र, 'यथार्थं सर्वविज्ञान'मिति वैदिकसिद्धान्ताभङ्गेन अन्यथाख्यातिवाद्यभिमतस्वारस्यसंरक्षणमपि संभाव्यते, तत्राख्यातिवाद्यभिमतस्थलविशेषे अख्यातिपक्षमुपेक्ष्य विशिष्टं यथार्थज्ञानमपि स्वीकर्तुमुचितमिति, अख्यातिपक्षवत् तत्र न ज्ञानद्वयमात्रम्, किं तु तदतिरिक्तं विशिष्टज्ञानमपीत्याशेरते ।

अत एव तस्य प्रकरणस्य यथार्थख्यातीति शीर्षकमकारि । इदमर्थज्ञानस्य ग्रहणात्मकस्य, विधेयरजतादिज्ञानस्य च स्मरणात्मकस्य अख्यातिपक्षे यथार्थत्वादेव यथार्थख्यातीति नामात्र निक्षिप्तमिति न; किं तु स्थलविशेषे विशिष्टज्ञानस्य स्वीकारे, तस्यान्यथाख्यातित्वादिना परैर्भ्रमत्वेन कथ्यमानस्यापि यथार्थत्वमेवेति ज्ञापयितुं तथा नामनिर्देश इति ।

अनिर्वचनीयख्यातिं तु नैव मानयन्ति । अत्र श्रीभाष्यम्, "अत्यन्तापरिदृष्टाकारणकवस्तुकल्पनाऽयोगात्" इति । तदिदमत्र मनाग् विव्रियते—

## अनिर्वचनीयख्यातिविमर्शः

अनिर्वचनीयवादिभिः, इदं रजतमिति शुक्तिविशेष्यकप्रतीतिविषयतया तादृशरजतसिद्धिर्वक्तव्या । सा च प्रतीतिः परमार्थरजतमेवावगाहते; नानिर्वचनीयरजतम् । यदि तदेवानिर्वचनीयत्वेन प्रतीयेत, तर्हि बाधज्ञानस्य नावसरः । प्रवृत्तिरपि तर्हि रजतार्थिनो नोदेष्यति । वक्ति च परमार्थतो रजतं पश्यामीति भ्रान्तः । अतो रजतं दृष्टमपि न तथा परिदृष्टम्, यथा तत् अद्वैतिसंमतमिति न ततस्तत्सिद्धिः ।

अथ प्रत्यक्षेण तथादर्शनाभावेऽपि युक्त्या तथा गम्यत इति चेत्—का युक्तिः? इयम् । इदं रजतमिति तावत् शुक्तौ तादात्म्येन रजतप्रतीतिरस्ति । यदि रजतमसत्, तर्हि न प्रतीयेत । पश्चाच्च नेदं रजतमिति बाधो लक्ष्यते । यदि वस्तुत एव रजतं सत्, तर्हि न बाध्येत । अतः प्रतीतिबाधान्यथानुपपत्तिः सदसद्विलक्षणं साधयतीति । अत्र विशिष्टाद्वैतिनः—अत्र प्रतीतिबाधयोरुभयोः प्रमात्वं तावदनुभवविरुद्धमिति भवत्संमतमेव । अतो बाधज्ञानमेव प्रमेति तेन रजतासत्त्वस्यावधारितत्वात् कथं भ्रान्तिरूपया प्रतीत्या रजतस्य तद्देशासद्रजतविलक्षणत्वं स्थाप्यते? न हि भ्रमस्य वस्तुसाधकत्वं युक्तम् । एवं तर्हि शशशृङ्गमपि भ्रान्त्या गृह्यतामिति चेत्, गृह्येत, यदि परमार्थशशशृङ्गानुभवाहितसंस्कारः कश्चित् स्यात् । ननु तत्रासतो रजतस्य तत्र भानमन्यथाख्यातिः स्यात् । सा च न युक्ता । आपणस्थरजतस्मरणाधीना ह्यन्यथाख्यातिः आपणस्थत्वेनैव रजतं ग्राहयेदिति शुक्तौ कथं तत्तादात्म्यभानमिति चेत्—अद्वैतिमतेऽपि इदं रजतमिति भातस्य शुक्तिरजतस्य यत् परमार्थत्वं भासते, तत् किं रजत एव वर्तमानम्, शुक्तिस्थं वा? नाद्यः, तर्हि परमार्थरजतसद्भावात् तद्बाधो न स्यात् । रजतवत्

तन्निष्ठं परमार्थत्वमपि कल्पितं चेत्, एवमपि बाधो न स्यात् । तन्मते हि नेदं रजतमिति बाधबुद्धिर्न सामान्यतो रजताभावविषयिणी; पूर्वं कल्पितस्य रजतस्य तत्र कथमपि सद्भावात् । अपितु परमार्थत्वेन रजताभावविषयिणीति वक्तव्यम् । तद् यदि परमार्थत्वमपि किञ्चित् कल्पितं तत्र स्यात्, तर्हि तेन रूपेणापि तदभावस्तत्र न विषय इति बाधबुद्धिरेव नोदियादिति । तस्मात् शुक्तिस्थं परमार्थत्वं रजते भासत इति स्वीकार्यम् । स्वीकृतञ्च तथैव परिभाषायाम् । तथाच तत्रान्यथाख्यातिसिद्धिः । न च परमार्थत्वसत्त्वेऽपि रजते परमार्थत्वसमवायोऽनिर्वचनीय इति वाच्यम् - परमार्थत्वसमवायस्यापि शुक्तिस्थस्य संनिकृष्टत्वात् । न च परमार्थत्वसमवायनिष्ठं रजतानुयोगिकत्वं कल्पनीयत्वादनिर्वचनीयमिति वाच्यम् - रजतानुयोगिकत्वस्यापि रजतत्वसमवाये क्लृप्तत्वेन कल्पनीयत्वाभावात् । तथाच तत्रान्यथाख्यातेस्तन्मतेऽप्यावश्यकतया तत्र यथा परमार्थत्वगतः संनिकर्षः शुक्तिस्थत्वेन तन्न दर्शयति, किंत्वनिर्वचनीयरजतस्थत्वेन, तद्वदेव वस्तुत आपणस्थितस्य रजतस्य स्मरणमपि पुरोदेशे रजतं दर्शयतीति सुवचमित्यवश्याभ्युपेत्यया ऽन्यथाख्यात्यैव निर्वाहान्नानिर्वचनीयसिद्धिः ।

## देशान्तरस्थरजतावच्छेदकत्वसंभवः

ननु इदं रजतमिति शुक्तौ देशान्तरस्थस्य रजतस्यावच्छेदकत्वं न भवति, कुत्रापि तददर्शनात् । न च घटो नास्तीत्यादौ अत्यन्ताभावध्वंसप्रागभावेषु देशकालान्तरस्थितघटादेरवच्छेदकत्वं दृष्टमिति वाच्यम्—तत्राप्यारोपितघटस्यैवावच्छेदकत्वात् । तदुक्तं सूत्रभाष्यवार्तिके इति चेन्न—अत्यन्ताभावादौ आरोपितघटस्यानवच्छेदकत्वात् । न चाभावबुद्धौ प्रतियोग्यारोपस्य कारणत्वादारोपितघट एवावच्छेदक इति वाच्यम् । प्रतियोगिग्राहकसामग्रीविशिष्टानुपलब्धेरेव योग्यानुपलब्धिपदार्थतायाः कुसुमाञ्जलौ व्यक्तत्वेन तत एव प्रतियोगिस्मरणे सति अभावप्रत्ययसंभवे अन्तर्गडुभूतस्य प्रतियोग्यारोपस्यानपेक्षितत्वात् । किंच भूतले घटो नास्तीत्यत्र प्रतियोग्यारोपः किमभावे किं वा अभावानुयोगिनि भूतले । नाद्यः; तथा सति अभावो न घटीय इति पश्चाद्बाधावतारापत्तेः; आरोपतः प्राक् अभावस्यागृहीतत्वेन तत्र तदारोपासंभवाच्च । नान्त्यः, भूतले आरोपितस्याभावं प्रत्यवच्छेदकत्वासंभवात् । अन्यत्र स्थितस्यान्यावच्छेदकत्वं न भवतीत्युक्तत्वात् । सामानाधिकरण्यसत्त्वादवच्छेदकत्वमिति चेत्—एवमप्यारोपितघटस्यैव निषिद्धत्वात् परमार्थघटसत्तायां

बाधकाभावात् नास्तीति बुद्ध्यनन्तरमपि घटार्थी तत्र प्रवर्तेत । एवमतीतानागतदेशान्तरस्थघटाद्यवच्छिन्नत्वस्य घटज्ञानं पटज्ञानमित्येवं ज्ञाने दर्शनादपि न देशकालान्तरस्थस्यावच्छेदकत्वासंभवः । अतः कतिपयसंबन्धान्तरेण देशान्तरादिस्थस्यावच्छेदकत्वसंभवेऽपि तादात्म्यादिसंबन्धेनावच्छेदकत्वस्यादर्शनात् इदं रजतमिति कथं तादात्म्येनावच्छेदकत्वमित्यत्र प्रष्टव्यम् । अत्र च तत एव भ्रमत्वमित्येव समाधिः । अन्यथा हि संबन्धसत्त्व एवावच्छेदकत्वे भ्रमत्वमेव न सेत्स्यति । तस्मादबाधितज्ञानस्यैव विषयसाधकत्वात्, शून्यमिति ज्ञानेनेतरसर्वज्ञानानां बाध्यत्वाङ्गीकारे विषयासिद्धया शून्यवादिना लोकयात्राहेतुभूतप्रवृत्तिनिवृत्त्योरेवाकर्तव्यत्वप्रसङ्गेन शून्यज्ञानस्यैव बाध्यत्वनिश्चयवदत्रापि बाध्यत्वनिश्चयात् बाधितज्ञानात्मकेन भ्रमेण न रजततादात्म्यविशिष्टशुक्तिः साधयितुं शक्यते ।

## अवच्छेदकत्वस्वरूपशोधनम्

एतदुक्तं भवति—किमिदं रजतस्यावच्छेदकत्वम? न तावत् शुक्त्यनुयोगिकतादात्म्यप्रतियोगित्वम्; अनभ्युपगमात् । नापि शुक्तिनिष्ठविशेष्यतानिरूपितप्रकारताश्रयत्वम्, तन्निबन्धनस्वरूपसंबन्धविशेषो वा; तस्य देशान्तरस्थत्वेऽपि स्वीकारे बाधकाभावात् । तथा चेदं रजतमिति ज्ञाने यद् भासते पुरोवर्ति द्रव्यम्, रजतं तादात्म्यञ्चेति—तत् सर्वं सत्यमेव; नानिर्वचनीयम् । ज्ञाने च यो धर्मः तादात्म्यसंसर्गावच्छिन्नरजतनिष्ठप्रकारतानिरूपितशुक्तिनिष्ठविशेष्यताकत्वम, तदपि सत्यमेव। समुच्चयज्ञानापेक्षया चास्येदमेव वैलक्षण्यम्, यत् मिथो निरूप्यनिरूपकभावापन्नविषयताशालित्वम् । अन्यथा इदं रजतमिति न स्यात् । इदञ्च रजतञ्चेति समुच्चयोल्लेखः स्यात् । अख्यातिपक्षे ज्ञानद्वयम्, अन्यथाख्यातिपक्षे चैकं ज्ञानमिति भेदः । विभिन्नज्ञानीययोरपि विषयतयोर्निरूप्यनिरूपकभाव इष्यते । यद्वा इदमर्थज्ञानविशिष्टरजतज्ञानत्वेन प्रवृत्तिकारणत्वमनुभववशादिष्यते । प्रामाण्यञ्च विषयतथाभावः; अतथाभावश्चाप्रामाण्यमित्यन्यदेतत् ।

## साक्षात्कारबलाद्रजतकल्पनाविमर्शः

अनिर्वचनीयमस्तीत्यत्रान्यां काञ्चिद् युक्तिं वर्णयन्ति—यद्यपि लोहितः स्फटिकः, पीतः शङ्खः इत्यादौ लौहित्यपीतद्रव्यादावपीन्द्रियसंनिकर्षसत्त्वेना-

निर्वचनीयानभ्युपगमेनैव प्रत्यक्षनिर्वाहः, तथाऽपि शुक्तिरजतादिस्थलेऽनिर्वचनीयानभ्युपगमे रजतं साक्षात्करोमीति प्रसिद्धप्रत्ययस्यानुपपत्तिः ; सत्यरजतस्य तत्राभावेनासंनिकृष्टत्वादिति—तत्र परेषामयं समाधिः—कल्पितेऽपि रजतेऽनुपपत्तिर्न • परिह्रियते । साक्षात्कारो हि नामेन्द्रियसंनिकर्षजं ज्ञानम् । अतो रजतं प्रागुत्पन्नं पश्चादिन्द्रियसंनिकृष्टं तदनन्तरं साक्षात्क्रियत इति स्वीकारे तदुपपत्तिः स्यात् °। प्रातिभासिकपदार्थानां प्रतिभाससमसमयसद्भाववादिभिश्च रजतोत्पत्तिकाल एव रजतविषयिण्यविद्यावृत्तिरेष्टव्या । तथा च संनिकर्षाजन्यस्य तस्य कथं साक्षात्कारतेति । न च संनिकर्षाजन्यत्वेऽपि साक्षिभास्यत्वादनिर्वचनीयरजतस्य साक्षात्कृतत्वोपपत्तिरिति वाच्यम्—साक्षिस्वरूपतद्भास्यत्वादेर्लोकानुभवागोचरत्वादनुभवनिर्वाहावसरे तथा वक्तुमशक्यत्वात् । यद्यनुभवानारूढमपि संनिकर्षातिरिक्तयत्किञ्चिदधीनत्वं बाह्यवस्तुसाक्षात्कारस्येष्यते, ततो वरमन्यथाख्यातिवादीष्टं संनिकर्षाभावेऽपि दोषवशात् रजतसाक्षात्कारो भवतीति अनुभवदत्तहस्तं स्वीकरणम् । एवमिदमर्थविषयेऽन्तःकरणवृत्तिः, रजतविषयेऽविद्यावृत्तिरिति वृत्तिभेदकल्पने ज्ञानद्वित्वं तन्मतेऽप्यापतति । अन्यथाख्यातिपक्षे तु अनुभवसिद्धमेकज्ञानत्वमनपह्नुतं भवति । अपूर्वरजततत्कारणतद्ज्ञानकारणाद्यनेककल्पनापेक्षया रजतसाक्षात्कारस्य दोषजन्यत्वकल्पने लाघवञ्च । एवम् इदं रजतमिति ज्ञानस्यैकस्य देशान्तरस्थरजतांशे साक्षात्कारत्वाभावेऽपि इदमर्थांशे तस्य साक्षात्काररूपत्वात् तन्निष्ठं साक्षात्कारनिरूपकत्वमेव रजते अन्यथाख्यातिरूपेणानुव्यवसायेन गृह्यते दोषवशादित्यपि रजतं साक्षात्करोमीत्यस्य निर्वाहः सुकरः । रजतं चक्षुषा पश्यामि, देवदत्तेनानीय निक्षिप्तं रजतमहं गृह्णामीत्यादीनामद्वैतिभिरप्यन्यथैव निर्वाहः कार्यः । शुक्तिरजते चक्षुस्संनिकर्षजन्यप्रत्यक्षविषयत्व-देवदत्तानीतत्व-निक्षिप्तत्व-स्वग्राह्यत्वादेरभावात् । यदि साक्षात्कारविषयत्वमनुभवबलाद् वस्तुतः स्वीकर्तव्यम्, तर्हि तत्साक्षात्कारे चक्षुर्जन्यत्वादिकमपि तथैव स्वीकार्यं स्यात् । अभावस्यानुपलब्धिग्राह्यत्वं वदद्भिः, भूतले घटाभावं साक्षात्करोमीति प्रह्वो भूतलनिष्ठस्य साक्षात्कारविषयत्वस्य घटाभावे आरोपेणेत्येव हि वक्तव्यम् । तथैवेहापि शुक्तिगतसाक्षात्कारविषयत्वस्य रजते आरोप इति ।

## रजतस्मृतिकारणत्वायोगविमर्शः

एतेन—असंनिकृष्टरजतप्रत्यक्षायोगादापणस्थरजते चक्षुरिन्द्रियसंनिकर्षस्य दूरत्वव्यवधानयोः सत्वेऽप्यङ्गीकारे पुरुषापणमध्यगतानां पदार्थानां

संनिकृष्टत्वाविशेषात् प्रत्यक्षापत्तिः । अतः संनिकर्षं विहाय रजतस्मृतिरूप-ज्ञानलक्षणाप्रत्यासत्त्या रजतप्रत्यक्षनिर्वाहे कुत्राप्यक्लृप्तायाः ज्ञानलक्षणाप्रत्यासत्तेः स्वीकारापातः । न हि सुरभि चन्दनमिति प्रत्यक्षेऽपि सौरभांशे ज्ञानलक्षणा प्रत्यासत्तिः प्रागपेक्षिता । यथायथं घ्राणचक्षुःसंनिकर्षयोः सतोर्विशिष्टज्ञान-स्यैकस्याभ्युपगमसंभवात्—इति वादोऽपि विमृश्यः । 'चक्षुःसंनिकर्षं विनैव रजतसाक्षात्कार' इत्यस्याद्वैतिमतेऽप्यविशिष्टत्वात्; अन्यथाख्यातिवादिनाऽपि संनिकर्षस्याकल्पनात् । घ्राणचक्षुषोः प्रत्येकं स्वस्वकार्यव्यापृततया सौरभं चन्दनञ्चेति कथञ्चित् समूहालम्बनकार्यस्वीकारसंभवेऽपि करम्बितकार्यरूप-विशिष्टज्ञानजननवर्णनायोगात् ज्ञानलक्षणाप्रत्यासत्तेस्तदर्थमपेक्षितत्वात् । यदि तत्र द्वेषः, कामं सा मा भूत् । तावतापि प्रत्यभिज्ञास्थले तत्तासंस्कारसचिवमिन्द्रियमिव दोष-रजतसंस्कारादिसहकृतं चक्षुरन्यथाख्यातिं कल्पयिष्यति ।

## परोक्षभ्रमेष्वनिर्वचनीयायोगः

एवं प्रत्यक्षस्थल एव रक्तः स्फटिक इत्यादावन्यथाख्यातिमाचक्षाणैः, रजतं साक्षात्करोमीत्यनुव्यवसायबलात् क्वचिदेव प्रत्यक्षेऽनिर्वचनीयमभ्युपयद्भिः परोक्षभ्रमेऽनुमित्यादावन्यथाख्यातिरेव स्वीकृतेत्यविप्रतिपन्नम् । न च धूलीपटले धूमत्वभ्रान्त्या वह्न्यनुमितौ तदधीनप्रवृत्ते र्वह्निप्राप्तेरपि दर्शनात् न परोक्षभ्रम इति वाच्यम्—क्वचित् संवादस्यैव क्वचिद्विसंवादस्यापि दर्शनात् । अतः प्रमात्मकपरामर्श एवानुमितिजनक इति वा, तादृशपरामर्श एव प्रमात्मकानुमितिजनक इति वा, भ्रमात्मकपरामर्शो भ्रमात्मकानुमितिमात्रजनक इति वा नियमो मा भूत् । सल्लिङ्गकपरामर्शो भ्रमानुमित्यजनक इति च काममस्तु । भ्रमात्म-कपरामर्शोऽपि प्रमात्मकानुमितेरेव जनक इति तु न सेत्स्यति । न च तस्या अनुमितेः कालान्तरस्थिताग्निमादायापि चारितार्थ्यान्न भ्रमत्वमिति वाच्यम्—धूमदर्शनेन वर्तमानविषयकेणानुमीयमानोऽग्निर्हि न वत्सरान्तरकालिको भवितु-मर्हति; किंतु क्वचिद् वह्निशमनसमनन्तरमपि धूमपुञ्जदर्शनात् तत्क्षणस्थवह्नि-कत्वस्य कथञ्चिदनुमानासंभवेऽपि विलक्षणधूमदर्शनेन कतिपयक्षणप्राग्भा-व्यग्न्यनुमितिसंभवेन धूलीपटले तादृशधूमत्वभ्रान्त्या जनिताऽनुमितिर्नात्यन्तव्य-वहितकालाग्निविषयिणीति, तत्र यत्कालावच्छिन्नत्वेनाग्निर्गृह्यते, तत्कालावच्छेदेन तत्र चेदग्निर्ना भूत्, तत्र तदनुमितिः कथं न भ्रमः? यत्र धर्मिणि कदापि साध्यस्याभावः, यथा जले गन्धस्य, वायौ रूपस्य, अद्वैतिमते जगति पारमार्थ्यस्य, ब्रह्मण्यपारमार्थ्यस्य च, तत्र तदनुमितिः कथं न भ्रमः?

एवं शाब्दबोधोऽपि भ्रमात्मको द्रष्टव्यः । न हि तत्तद्वादिषु जायमानमुपनिषद्वाक्यार्थज्ञानं विभिन्नं सर्वमपि प्रमात्मकम् ।

तस्मादस्त्येवं परोक्षभ्रमः । न च तत्र शब्दानुमानादिस्थलेऽप्यनिर्वचनीयं कल्प्येत । तथा सति रजतस्थले इन्द्रियसंनिकर्षाभावेऽपि अन्तःकरणवृत्त्यभावेऽपि अविद्यावृत्तिमात्रेण रजतप्रत्यक्षत्ववत् इहापि तस्य प्रत्यक्षतापत्तेः । पर्वतेन्द्रियसंनिकर्षस्यापि सत्त्वेन, वह्निं साक्षात्करोमीति प्रतीत्यापत्तेश्च । ननु रूपाद्यग्रहणात् कथं तत्प्रत्यक्षमिति चेत्—चक्षुःसंनिकर्षजन्यप्रत्यक्षस्य ह्येष स्वभावनियमः; नाविद्यावृत्त्यात्मनः प्रत्यक्षस्येति । परोक्षे रूपाद्यग्रहणात् तत्र रूपाद्यभावे च तथाविधस्य वह्नित्वेऽपि प्रमाणाभावात् तदप्यनिर्वचनीयं न स्यात् ।

एवं मनो ब्रह्मेत्युपासीतेत्यादौ दृष्टिविधौ ब्रह्म भासमानं सत्यमनिर्वचनीयं वा । नाद्यः, अन्यथाख्यातिप्रसङ्गात् । नान्त्यः, अनिर्वचनीयब्रह्मोत्पादकस्य दुर्वचत्वात् । इतरज्ञानवत् साऽपि दृष्टिर्मानसक्रियात्मिकाऽपि ज्ञानरूपा सविषया चेति तत्रानिर्वचनीयं विना निर्वाहे सर्वत्र तथा स्यात् । एवमेकश्चन्द्र इति प्रत्यक्षसमनन्तरमङ्गुल्यवष्टम्भादिना यदा द्वौ चन्द्राविति भ्रमः, तत्र बाधकसत्त्वादनिर्वचनीयोत्पत्तिर्न भवतीति तत्रान्यथाख्यातिरवर्जनीयेति सर्वत्र तथैव स्यात् अविशेषादिति ।

## अख्यात्या निर्वाहोपपादनम् ।

एवं तावत् रक्तः स्फटिकः इत्यादिप्रत्यक्षविशेषेषु आनुमानिकागमिकभ्रमेषु अनिर्वचनीयं विना अन्यथाख्यानेनैव निर्वाहात् तथैव शुक्तिरजतादिप्रत्यक्षेऽपि निर्वाह उचित इत्युक्तम् अन्यथाख्यातिस्वीकारेण । अथ लाघवादख्यातिरेव सर्वत्रास्तु; नान्यथाख्यातिरपीति ब्रूमः । अन्यथाख्यातिकारणत्वेनावश्यस्वीकार्यमिदमर्थदर्शनम्, रजतस्मरणञ्च, तयोर्भेदाग्रहश्चेति तत एव संवलितात् प्रवृत्तिनिर्वाहे किं विशिष्टज्ञानान्तरकल्पनयेति ।

ननु न भेदाग्रहः सुवचः । स किमिदमर्थस्य च रजतस्य च, किं वा ग्रहणस्मरणयोः । नाद्यः; रजतभेदस्येदमर्थनिष्ठस्याधिकरणस्वरूपत्वेनेदमर्थग्रहे तदग्रहायोगात् । अत एव नान्त्यः; ज्ञानस्य स्वयम्प्रकाशत्वेन इदमर्थग्रहणस्य रजतस्मरणस्य च ग्रहणत्वस्मरणत्वविशिष्टतयैव प्रकाशात् भेदग्रहध्रौव्यादिति

चेत्—न; रजतभेदस्य शुक्तित्वरूपधर्मस्वरूपत्वात् शुक्तिग्रहेऽपि तद्धर्माग्रहात्। ज्ञानस्वयम्प्रकाशत्वेऽपि तद्गतप्रत्यक्षत्वस्मृतित्वादेरग्रहस्यानुभविकत्वात्। अत एव हि पर्वतो वह्निमानित्यत्र पर्वतांशे ज्ञानस्यानुमितित्वं प्रत्यक्षत्वं वा, अघटं भूतलमित्यत्र घटाभावांशे प्रत्यक्षत्वमनुपलब्धिजन्यत्वं वा, सोऽयं घट इति प्रत्यभिज्ञायाः तत्तांशे स्मरणत्वमभ्यादशत्वं वेति वादिनो विवदन्ते। इदन्त्वं तु न रजतभेदः; पुरोवर्तित्वरूपेदन्त्वस्य स्मृतिविषयत्वावच्छिन्नभेद-देशान्तरवर्तित्वावच्छिन्नभेदादिरूपत्वेऽपि रजतत्वावच्छिन्नभेदरूपत्वायोगात्। अयोग्यस्थले च शब्दस्य विशिष्टज्ञानजनकत्वमख्यातिवादिभिर्नेष्यते; किं तु असंसर्गाग्रह एव। न च रजतस्य देशान्तरस्थस्य स्मरणे देशान्तरा-देरपि स्मरणमावश्यकमिति निर्बन्धः; यथा व्यवहारात् शक्तिग्रहकाले पदार्थस्य देशकालविशेषविशिष्टतया ग्रहणेऽपि एवं नानास्थलदर्शनात् पश्चात् व्यवहारान्तरे देशकालौ विहाय पदार्थमात्रस्मरणम्, अन्यथा देशकालयोरपि रजतादिपदात् स्मरणे शाब्दबोधे तद्भानापत्तेः—तथेहापि रजतमात्रस्मृतिः स्मृतिप्रमोषरूपा वा तावन्मात्रानुभवाहितसंस्कारजन्या वा भवितुमर्हतीत्यदोषात्। अतोऽख्याति-रेवास्तु। अद्वैतिपक्षे इदं रजतमित्यत्र इदमर्थेऽन्तःकरणवृत्तिः, रजतविषये अविद्यावृत्तिरिति वृत्तिद्वयम्, अख्यातिपक्षेऽपि अनुभवस्मरणात्मकज्ञान-द्वयमित्यविशिष्टम्।

## प्राभाकरीययथार्थख्यातिपक्षनिगमनम्

एवमन्यथाख्यातिं विहायाख्यातिस्वीकारे सर्वं ज्ञानं यथार्थमिति स्वतः सिद्धं भवतीति न स्वतःप्रामाण्यस्य ज्ञानगतस्य कुत्राप्यपवाद इति बौद्धसंमतास्याप्रामाण्यस्य सामस्त्येन निरासः। इदञ्च सर्वज्ञानयाथार्थ्यमुक्तं प्रकरणपञ्चिकायां नयवीथीप्रकरणे शालिकनाथेन—

"यथार्थं सर्वमेवेह विज्ञानमिति सिद्धये।
प्रभाकरगुरोर्भावः समीचीनः प्रकाश्यते॥" इति।

## विशिष्टाद्वैतिपक्षस्थो विशेषः

अत्र विशिष्टाद्वैतिनः कञ्चिदुचितमर्थमुपक्षिपन्ति—अद्वैतिभिर्भ्रमस्थले सर्वत्र नानिर्वचनीयमिष्यते; किंतु शुक्तिरजतादिकतिपयस्थल एवेति प्रागेवावाचि। तत्र रजतकल्पनां विनैव रजतप्रत्यक्षं सूपपादमिति किं तेन! तथाहि—यत्र यादृशसामग्रीसमवधाने यावद्विशेषणविशिष्टवस्तुविषयकमेकं

ज्ञानं विशिष्टज्ञानपदवाच्यमुत्पत्तुमर्हम्, तत्र तादृशसामग्र्या तावद्विशिष्टवस्तुज्ञानमेकमेवेति तावत् अख्यातिवादिप्रभृतिसर्वसंमतम् । अत एव रजते, इदं रजतमिति रजतत्वपुरोवर्तित्वविशिष्टवस्तुविषयकं ज्ञानं जायमानमेकमेव; न तु विशेष्यादिभेदेन भिन्नम् । शुक्तौ तु इदं रजतमिति ज्ञानमेकं न भवितुमर्हति; इदमर्थज्ञानस्य संनिकर्षाधीनप्रत्यक्षरूपत्वात्, रजतज्ञानस्य च संस्काराधीनस्मृतिरूपत्वात् । तत्र तादृशज्ञानद्वयजन्याप्रमाभूतज्ञानान्तरस्वीकारापेक्षया च कारणीभूतज्ञानद्वयेनैव निर्वाह इति सर्वज्ञानयाथार्थ्यमख्यातिवाद्यभिमतम् । एवञ्च प्रमाभूतविशिष्टज्ञानस्यैकस्य सुवचत्वे ज्ञानद्वयक्लेशस्तत्र न सोढव्य इति संप्रतिपन्नमेव । भ्रमस्थले सर्वत्र प्रमात्मकविशिष्टज्ञानवर्णनासंभवेऽपि, प्रायेणाख्यातिपक्षस्यादरणीयत्वेऽपि च, क्वचित् क्वचिद्भ्रमस्थले विशिष्टज्ञानं यथार्थमेकं सुवचमिति ईदृशी यथार्थख्यातिरप्यस्तीति । कथमेवमिति चेत्— इदमेव, "यथार्थं सर्वविज्ञानम्" इत्यादिना श्रीभाष्ये विशेषेण भाषितम् । तदत्र विविच्यते—

## विशिष्टाद्वैत्युक्तविशेषे प्रमाणानि

श्रुतिस्मृतिमीमांसान्यायप्रत्यक्षप्रमाणकोऽयं यथार्थख्यातिपक्षः । तथाहि— श्रुतिस्तावत्, 'तत् तेजोऽसृजत'इत्यादिना भूतानां सृष्टिमुक्त्वा, 'तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' इति त्रिवृत्करणं वर्णयन्ती भूतानां मिथःसंसृष्टत्वं ब्रवीति । अत्र श्रुतावुक्तं मिथो भूतमिश्रणं न तेजोबन्नरूपभूतत्रयमात्रविषयकम्, किं तर्हि, महदादिपृथिव्यन्तसमष्टिसृष्ट्यन्तर्गतसर्वविकारविषयकमिति श्रीविष्णुपुराणे, "नानावीर्याः—महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते" इति सृष्टिप्रकरणे व्यक्तमदर्शि । इदमेव समष्टिभूतमिश्रणं व्यष्टिगतमग्निमादाय श्रुत्या दर्श्यतेऽपि, 'यदग्नेः रोहितं रूपं तेजसस्तद्रूपम्' इत्यादिना । एवं तर्हि सर्वेषु भूतेषु सर्वभूतानुप्रवेशात् सर्वमपि पृथिवीशब्देनाबादिशब्देन चाविशेषेण व्यष्टौ व्यपदिश्येतेत्याशङ्कायाम्, "त्र्यात्मकत्वात्तु भूयस्त्वात्" इत्यनेन भगवता बादरायणेन समाधानमसूत्रि । अयमर्थः—सर्वत्र सर्वांशसद्भावेऽपि यद्भूतांशा यत्राधिका भवन्ति, तत्र तद्व्यपदेशः । अतोऽबादौ पृथिव्याद्यंशानां न्यूनत्वात् पृथिव्यादिव्यपदेशा नैव क्रियन्त इति । तावता जलगतपार्थिवांशस्य पृथिवीत्वं नास्तीति वा, पृथिवीशब्दव्यवहार्यत्वं न भवतीति वा न मन्तव्यम्; समष्टिसमये तयोः स्थितत्वात् । किंतु अबंशभूयस्त्वेनाल्पीयसां पृथिव्यंशानामभिभूतत्वेनानभिव्यक्तत्वात् तत्र तथा व्यवहारं न

कांश्चेत् करोतीत्येतावदेवेत्यप्यत्र ध्वनितम् । एवञ्च यदि कश्चित् कथमपि दोषवशात् कदाचिदग्नौ शुक्ललोहितभागादर्शनेन कृष्णभागमात्रं पश्यन् तत एव इयं पृथिवीति गृह्णीयात्, व्यवहरेच्च, तत् तस्य ज्ञानं जातं यथार्थमेव, अग्निगतकृष्णरूपपृथिव्यंशमात्रम्, इयमिति गृहीत्वा तत्र तेन पृथिवीत्वग्रहणादित्यकामेनाप्युभ्युपगन्तव्यम् । एवं यदि कश्चिद् भौतिकविज्ञानी निपुणस्तत्र विशिष्टेन साधनेन अन्याद्यंशान् पृथक्कृत्य पृथिव्यंशं शेषयेत्, भगवान् वा प्रलयावसरे तत्तदंशपृथक्करणपरः स्यात्, तदा तत्र तत्र तत्तद्व्यवहारो हि प्रामाणिको निराबाधः । तथैवेदानीमपीति मन्तव्यम् । शुक्लांशानां भूयसां ग्रहणे भूयोंशानुरोधी अन्यादृशो व्यवहार इत्यन्यदेतत् । एतावता एकस्मिन् भूते भूतान्तरप्रतीतिव्यवहारौ अन्यादृशभूतांशाग्रहणसमयभवौ प्रामाणिकाविति सिद्धम् । एतेन मृगतृष्णिकारूपप्रभापुञ्जे तोयप्रतीतिव्यवहारौ व्याख्यातौ । तादृशतेजोन्तर्गततोयांशमात्रसंनिकर्षमूलयोस्तयोः प्रामाणिकत्वौचित्यात् । एवं श्रुतिस्मृतिसूत्रपर्यालोचनया चेदमपि निश्चितम्, यत् यत्र पदार्थे यदंशसत्तानिबन्धनौ यादृशप्रतीतिव्यवहारौ तद्भिन्नपदार्थेऽपि तदंशसत्ताबलेन तादृशप्रतीतिव्यवहारौ जातु जायमानौ प्रामाणिकाविति ।

## तत्र पूर्वमीमांसोक्तीनामनुकूलता

अतश्च मीमांसकानामुक्तयः सुसंगता भवन्ति । ते ह्येवमाहुः— 'यदि सोमं न विन्देत् पूतीकानभिषुणुयात्' इति श्रुतिः सोमयागानुष्ठानाय सोमलतारूपद्रव्यालाभे पूतीकद्रव्यं नियमयति । नायमपूर्वविधिः; किं तु 'सोमेन यजेते'ति वाक्येन सोमस्य साधनत्वकथनात् सोमावयवानां सर्वेषां साधनत्वावगमात् भूयस्सोमावयवकसोमव्यक्त्या यागानुष्ठानं मुख्यम् । तदभावे च कतिपयसोमावयवशालिद्रव्यान्तरग्रहणे औचित्यात् प्रसक्ते पूतीकविधिरयं पूतीकनियमं दर्शयन् सदृशद्रव्यान्तरग्रहणं प्रथमतः प्रसज्यमानं वारयति । तदत्र पूतीके पूतीकव्यक्तेर्वा सोमावयवविलक्षणावयवानां वा न करणता; किंतु सोमेन यजेतेत्यत्र सोमपदोपात्त-पूतीकान्तर्गतसोमावयवानामेवेति । एवं व्रीहिभिर्यजेतेति वाक्येन व्रीहिव्यक्तेर्व्रीह्यवयवानाञ्च साधनत्वावगमात्, यत्र व्रीहिव्यक्त्यलाभः, तत्र नीवारादेः प्रतिनिधित्वेन ग्रहणम्; नीवारादिगतानां विलक्षणनीवारावयवानां साधनत्वप्रापकप्रमाणाभावेऽपि व्रीहिपदेन नीवारान्तर्गतव्रीह्यवयवानामपि साधनत्वकथनात् तादृशावयवार्थमेव नीवारग्रहणसंभवात् ।

तदवयवमात्रपृथक्कारस्य दुष्करत्वात्तु विलक्षणनीवारावयवानामपि सह निवेशः। न तावता तेषां साधनत्वमिति। (६-३ ११) शास्त्रदीपिकादिष्वयमर्थो विस्तरेण द्रष्टव्यः। शाबरभाष्ये, 'सामान्यं तच्चिकीर्षा हि' (६-३-२७) इति सूत्रे, "व्यक्तेश्चाकृत्या विशेषाः परिच्छिद्यन्ते। यस्मिंश्च सदृशे गृह्यमाणे तेषां विशेषाणां केचित् संगृहीता भवन्ति" इति वाक्येन प्रतिनिधिद्रव्ये मुख्यगताकृतिपरिच्छेद्यावयवसद्भाव उक्तः। 'न तदीप्सा हि' (६-३-३४) इति सूत्रे च, "न हि पूतीकव्यक्तीनामीप्सा। पूतीकेषु यत् सोमसादृश्यम्, तन्नियम्यते" इत्यभाषि। 'तादर्थ्याद्वा तदाख्यं स्यात् संस्कारैरविशिष्टत्वात्' इति सूत्रे च, "नैतदस्ति ऊह इति; अविकारेण प्रयोगः। कुतः? तादर्थ्यात्। तादर्थ्यं व्रीह्यर्थता नीवाराणाम्" इति भाषितम्। प्रोक्षणादिसंस्कारापेक्षया व्रीह्यादिशब्दे विशेषाभावात् प्रतिनिधिषु प्रोक्षणाद्यन्वयवत् व्रीह्यादिशब्दान्वयोऽपि भवितुमर्हति। अतो नीवारादीनां व्रीह्याद्यर्थत्वात् व्रीह्याद्याख्याप्रयोग एव कार्यः; न नीवारादिशब्दप्रयोगः इत्येतत्सूत्रार्थः। एवमेतेषु सूत्रभाष्यादिषु परिशील्यमानेषु, 'सदृशद्रव्येषु मुख्यद्रव्यावयवसद्भावः, तादृशावयवार्थतया मुख्यद्रव्यवाचिशब्दप्रयोगस्य युक्तत्वञ्च सिद्ध्यति। इदमेव चेह मीमांसाग्रन्थेषु स्पष्टमुक्तं श्रीभाष्ये भाषितम्,

"व्रीह्यभावे च नीवारग्रहणं व्रीहिभावतः।
तदेव सदृशं तस्य यत् तद्द्रव्यैकदेशभाक्" इति।

## नवीनतान्त्रिकोक्तो विशेषः

अत्र च, 'यत्र जातेरवयवावयविसाधारणता, तत्र पूतीकगतसोमावयवानामपि सोमत्वजात्याक्रान्ततया सोमशब्दव्यपदेशयोगेऽपि, यत्र जातेरवयविमात्रवृत्तिता यथा व्रीह्यादौ, तुषतण्डुलाद्येकदेशे व्रीह्यादिपदाप्रयोगात्, तत्र नीवारादिगतव्रीह्यवयवादौ व्रीहित्वजातिसत्त्वे प्रमाणाभावेन कथं व्रीहिशब्दप्रयोगः' इत्याशङ्क्य सोमनाथखण्डदेवादिभिरेवं समाहितम्, 'मन्त्राणां प्रयोगसमवेतार्थस्मारकत्वात् व्रीह्यादिगतावयवानामेव पुरोडाशादिसाधनतया प्रयोगसमवेतत्वात् तत्प्रकाशनाय, 'व्रीहीणां मेधे' ति मन्त्रे व्रीहित्वादिजात्यवच्छेदनसमर्थद्रव्यावयवा एव लक्षणया निर्देष्टव्या इति तादृशावयवत्वस्य नीवारादिगतव्रीह्याद्यवयवेष्वव्यक्षतत्वान्न दोषः' इति।

तथा च सोमादौ सोमत्वादिसंस्थानसंपत्त्यर्थं यादृशपरिणामं प्राप्य पृथिवीद्रव्यं सोमाद्यवयवभावेनावतिष्ठते, तादृशपरिणामं प्राप्यैव पूतीकादावपि तद्द्रव्यमवतिष्ठते इति मिथः सौसादृश्यादेव व्रीह्याद्यवयवत्वस्य पूतीकाद्यवयवेषु कथ्यमानत्वात् एकसोमगतसोमावयवानां सोमान्तरगतावयवानाञ्च यत् सौसादृश्यम्, तदत्राप्यस्ति। एवं सति सर्वैः पूतीके सोमव्यपदेशाकरणं तु भूयोविजातीयग्रहणाभिभूततया 'तत्र तथात्वस्यानभिव्यक्तत्वादिति पूर्वोक्तमीमांसकवाक्यत एव व्यक्तम्। वेदान्तिमते च जातिरूपनित्यपदार्थानङ्गीकारात् जातिः, आकृतिः, संस्थानमिति पर्याया इति विशेषः। आकृत्यधिकरणादौ आकृतिपदेन जातिं गृह्णीयुर्मीमांसकाः; जात्याकृत्योर्भेदमपि ब्रूयुः। वेदान्तिनां पुनर्जातिराकृतिरेव संस्थाननामव्यपदेश्येति।

## त्रिवृत्करणमूलसादृश्यस्थलम्

तदेवं यत्रैकभूतकार्ययोरेव सादृश्यं समानावयवकत्वं भवति, यथा सोमपूतीकादौ, तत्र त्रिवृत्करणश्रुतेर्नोपयोगः। यत्र तु एकभूतकार्ये भूतान्तरकार्यसादृश्यप्रतीतिः, तत्र त्रिवृत्करणोपयोगः, यथा शुक्तिः पार्थिवी, रजतं तैजसमिति, तत्र शुक्तौ रजतसादृश्यानुभवः अन्यत्रेव रजतगतरजतावयवसद्भावमूल एव। तथा च रजते तेजोद्रव्यं यादृशशुक्लभास्वरपरिणामं प्राप्य वर्तते, तथैव शुक्तावपि त्रिवृत्कृतपृथिव्यन्तर्गततेजोभागस्तादृशपरिणामो वर्तत इति ततस्तत्र सादृश्यप्रतीतिः।

## शुक्तौ रजतावयवस्थितिः

यद्यपि सहस्रगुणितशुक्तिदाहेऽपि रजतावयवाः स्वल्पा अपि कैरपि न प्राप्यन्ते—तथापि शुक्तिशकलेऽपि रजतावयवकल्पनं न निर्मूलम्; सदृशप्रतिनिधिनियमसद्भावन्यायप्रत्यक्षादिमूलकत्वात् शुक्तौ रजतसद्भाववर्णनस्य। ओषधिविशेषसंपर्कात् रजतादेरपि भस्मीभावो लक्ष्यते। तद्वत् विलक्षणशुक्तिशकलान्तर्गताः रजतांशा अपि ईदृशैरुपायैः पृथक्कारानर्हा भवितुमर्हन्ति। विजातीयद्रव्योपश्लेषबलाच्च दाहे स्वरूपं विहाय रूपान्तरं प्रापितं भवेत्। पार्थिवतेजोभाग एव किलैवं स्थित इति ब्रूमः। स स्वां प्रकृतिं दाहे प्राप्नोतीति युक्तो दाहवशात् रजतालाभः। न च रजतत्वजातिरवयविमात्रवृत्तिः, येन पशुत्वमनुष्यत्वादिवदेकदेशावृत्तिः स्यात्। सोमत्वपूतीकत्वादिवत्तु

मृत्सुवर्णरजतादीनामनेकेषां द्रव्याणामवयविसर्वबृत्तिजातिमस्वमेवाऽऽनुभविकम् । कामं कश्चित् शुक्तौ सर्वात्मना रजतांशो नास्तीति प्रत्यक्षादिविरोधमप्यवधीर्य साधयतु । एवमपि यथार्थख्यातिर्भ्रमस्थले क्वचिद्भवन्ती न निवारयितुं शक्यते । पूतीकसंनिकर्षजे, अयं सोम इति ज्ञाने लोके भ्रान्तित्वेन संमन्यमान एव यथार्थख्यातेर्जागरूकत्वात् । नोदाहरणमादर्तव्यमिति च नीतिविदः । अन्यत्र पुनरख्यातिरेवेति ।

## अग्रहस्य कारणत्वम्

ननु भेदाग्रहस्य कारणत्वं न संभवति; भेदग्रहस्य प्रतिबन्धकत्वेऽपि प्रतिबन्धकाभावस्याकारणत्वात् । सामग्र्यां सत्यां कार्योत्पादविरोधित्वं हि प्रतिबन्धकत्वम् । सामग्री च सर्वकारणसमुदाय इति प्रतिबन्धकाभावातिरिक्तानामेव कारणत्वमानुभविकम् । एवं कराग्निसंयोगे सति मणिसमवधाने दाहानुत्पादः, मणिसंयोगाभावप्रथमक्षण एव दाहोत्पादश्चानुभवसिद्धः । अतः प्रतिबन्धकाभावस्य दाहपूर्ववृत्तित्वाभावान्न कारणत्वसंभव इति चेत्—एवमपि प्रतिबन्धकाभावस्यापेक्षितत्वं दुर्निषेधम् । तथा हि—प्रतिबन्धकाभावो न कार्यं प्रति कारणमिति वदता किं सत्येव प्रतिबन्धके कार्यं भवतीत्युच्यते, उत न । आद्ये मणिसमवधानेऽपि दाहः स्यात् । अन्त्ये प्रतिबन्धकाभावापेक्षा नेति रिक्तं वचः । किञ्च प्रतिबन्धकाभावस्य किमिदं कार्योत्पत्तिविरोधित्वम् । यदि कार्यानुकूलशक्तिविघटकत्वम्, तर्हि प्रतिबन्धकाभावे सति शक्त्युत्पादे कार्योत्पाद इति तदपेक्षाऽस्त्येव । यदि कार्यानुत्पादप्रयोजकत्वं तत्, तदापि कार्यानुत्पादस्य कार्यप्रागभावस्य स्वतःसिद्धत्वात् तस्य प्रतिबन्धकप्रयोज्यत्वाभावेन कार्योत्पादस्य प्रतिबन्धकाभावस्य च स्थितः कार्यकारणभाव एव कार्यानुत्पाद-प्रतिबन्धकाभावाभावात्मकप्रतिबन्धकयुगले समारोप्यमाणः प्रयोज्यप्रयोजकभाव इत्युच्यते, कार्याभावकारणाभावयोरिवेति मन्तव्यम् । ननु पूर्वक्षणे मणिसमवधानेऽपि दाहोत्पादकाले मण्यभावमात्रेण तद्दर्शनात् कथं तस्य कारणत्वमिति चेत्—यदि क्षणविलम्बमन्तरेण कार्योत्पादोऽनुभवसिद्धः, अविनश्यदवस्थमणिसंयोगः प्रतिबन्धकः; तदभावः कारणमिति स्वीक्रियताम् । अतो भेदग्रहाभावः प्रवृत्तिहेतुर्भवितुमर्हतीति ।

अथाख्यातिपक्षे इदं रजतत्वेन जानामीत्यस्य निर्वाहः कथम्? इदमर्थविशेष्यकज्ञानस्य रजतत्वप्रकारकत्वाभावात् । न च इदमर्थज्ञानं रजत-

ज्ञानञ्च मेऽस्तीति तदर्थः; तथासति शुक्तिविषये शुक्तिरिति ज्ञाने रङ्गे रजतज्ञाने च सति शुक्तौ, इदं रजतत्वेन जानामीति प्रहापत्तेः। न च इदमर्थविशेष्यकं यत् रजतत्वप्रकारकं ज्ञानम् तद्वानहमित्येव तदर्थः। अथापि तस्य भ्रान्तसमवेतानुव्यवसायत्वात् नेदमर्थविशेष्यके ज्ञाने रजतत्व-प्रकारकत्वसाधकत्वमिति वाच्यम्—तर्हि अनुव्यवसायस्यापि भ्रमत्वापत्तेः। अनुव्यवसायातिरिक्तं व्यवसायात्मकं ज्ञानं नास्तीति चेत्—अस्त्वेतत्। एवमपि शुक्तौ रजतभ्रमनिवृत्त्यनन्तरम्, 'इदं रजतत्वेन प्रागजानाम्' इति ज्ञानस्य एकज्ञाने शुक्तिविशेष्यकत्वरजतत्वप्रकारकत्वोभयसाधकत्वात्। इदं रजतमिति ज्ञानस्य नेदं रजतमिति बाधज्ञानोदयवत् इदं रजतत्वेन न जानामीति अख्यातिवादे अनुभवापत्तेः। इदमर्थज्ञानं न रजतविषयकमिति हि तेषामनुभवः संभवतीति चेत्—वस्तुत ईदृशानुव्यवसायस्यान्यथाख्यातिपक्षे स्वरसत्वेऽपि लाघवमूलकाख्यातिपक्षेऽपि निर्वाहः संभवति; इदं रजतत्वेन जानामीत्यस्य इदमर्थविशेष्यकरजतत्वासंसर्गाग्रहविशिष्टरजतत्वप्रकारकज्ञानवानह-मित्यर्थसंभवात्। शुक्तिज्ञानरङ्गरजतज्ञानसत्वे च शुक्तिविशेष्यकज्ञानं न रजतत्वासंसर्गाग्रहविशिष्टम्। शुक्तित्वस्य रजतत्वासंसर्गात्मकतया शुक्तित्वेन शुक्तिज्ञाने सति रजतत्वासंसर्गाग्रहाभावात् नाग्रहविशिष्टज्ञानमस्तीति। विभिन्न-ज्ञानीयविषयतयोरपि निरूप्यनिरूपकभावस्वीकारिणां मते तु शुक्तिविशेष्यता-निरूपितरजतत्वप्रकारताकज्ञानवानहमिति बोधवर्णनं सुकरमेव।

## स्वप्नविषयः

एवं स्वप्नज्ञानस्यापि यथार्थख्यातित्वसंभवादख्यातिस्वीकारोऽन्यत्रैवेति विशिष्टाद्वैतिनः। अथ स्वप्नस्य सत्यविषयकत्वे स्वप्नजागरयोरविशेषात्, "वैधर्म्याच्च न स्वप्नादिवत्" इति भगवता बादरायणेन स्वप्नजागरयोर्वै-धर्म्यवर्णनं न घटेतेति चेत्—

## वैधर्म्यसूत्रनिर्वाहसाम्यम्

उभयोर्मिथ्यार्थविषयकत्वमतेऽपि तन्न घटेतैव। अपि चाद्वैतभाष्यानु-रोधेनैतत्सूत्रसमाधेयः पूर्वपक्षस्तावत्—"यथा हि स्वप्नमायामरीच्युदकगन्धर्व-नगरादिप्रत्ययाः विनैव बाह्येनार्थेन ग्राह्यग्राहकाकारा भवन्ति, एवं जागरितद-शाभाविनः संवादसधीचीना अपि स्तम्भादिप्रत्यया भवितुमर्हन्तीत्यवगम्यते

प्रत्ययत्वाविशेषात्' इत्येवंरूपः । अत्र जागरितज्ञानं न बाह्यालम्बनं विज्ञानत्वात् स्वप्नादिज्ञानवदिति पूर्वपक्ष्यनुमानशरीरं रत्नप्रभायां निष्कृष्टम् । इदमनुमानं वैधर्म्यादिति सूत्रेण निराक्रियते । स्पष्टमिदं भाष्येऽपि । स्वप्नज्ञानस्य, मिथ्या मयोपलब्धो महाजनसमागम इति प्रबोधे बाध्यमानत्वात्, 'निद्राग्लानं तु मे मनो बभूव; तेनैषा भ्रान्तिरुद्भूते'ति दुष्टकारणजन्यत्वेनावधार्यमाणत्वाच्च बाह्यार्थानालम्बनत्वं युक्तम् । नैवं जागरितज्ञानस्य बाध्यत्वादिकमस्तीति न बाह्यार्थानालम्बनत्वम् । अतो बाह्यार्थाः सन्तीति पूर्वपक्षनिराकरणप्रकारः । अयमद्वैतमतेऽभ्युपगमवादमन्तरा न संगच्छते । तैरपि विशिष्टाद्वैतिभिरिव स्वप्ने पदार्थसृष्टेरङ्गीकारात् । इयान् विशेषः—एकतरस्मिन् पक्षे तस्या ईश्वरकर्तृकत्वम्, अन्यतरस्मिन् जीवीयत्वमिति । एवञ्च स्वप्नदशानुभूयमान-देशकालवस्तुव्यापारादीनां सर्वेषां विज्ञानाकारव्यतिरेकेण वर्तमानत्वात् कथं स्वप्ने बाह्यार्थानालम्बनत्वम्? अतः स्वासंमतमपि बाह्यार्थानालम्बनत्वं स्वयमभ्युपगम्य सूत्रकारः स्वप्नवैधर्म्यं जागरिते दर्शयतीत्येव तैरपि वक्तव्यम् । तथैवाभ्युपगमवादः श्रुतप्रकाशिकायामप्युक्त इति न विशेषः ।

उपरि च सूत्रभाष्ये, "स्मृतिरेषा यत् स्वप्नदर्शनम्; उपलब्धिस्तु जागरितदर्शनम्" इति वैधर्म्यान्तरं दर्शितम् । इदमपि न तन्मते युज्यते । स्वप्नेऽपि, 'अद्राक्षं गजम्' इति प्रबोधकालिकानुसंधानानुरोधेनानिर्वचनीय-सृष्टिमङ्गीकृत्य यथावस्थितोपलब्धेरेवेष्टत्वात् ।

## सूत्रकारहृदयम्

अत्र स्वप्नादिवत् इति आदिपदं प्रयुञ्जानः सूत्रकारः पूर्वपक्ष्युक्तमसत्य-विषयकत्वं स्वप्नस्याभ्युपगम्य स्वप्नवैधर्म्यं वदन्नपि आदिपदग्राह्यमायादिस्थलान्येव मुख्यवैधर्म्योदाहरणत्वेन मन्यत इति सुवचम् । किञ्च श्रुतिं प्रमाणमनभ्यु-पगच्छन्तं बौद्धं प्रति श्रुतिप्रामाण्येन स्वाभिमतस्य स्वप्नसत्यत्वस्य प्रस्तावो नोचितः । श्रुतिं दूरे निक्षिप्य तर्कपरिकल्पिताः परमतप्रक्रियाः पराकर्तुं तर्कपादमारचयता सूत्रकृता तन्मध्ये श्रुतिमात्रसिद्धार्थनिरूपणं नैवौचित्य-मावहति । अतो लोकानुभवमनुसृत्य वक्तव्यमेव तत्र वक्तुमुचितम् ।

## वैधर्म्यसूत्रनिर्वाहविधान्तरम्

अन्यच्च । व्यावहारिकदशाबाध्यत्वं स्वप्नेऽस्ति, न तु जाग इति वैधर्म्यं चेद् विवक्ष्यते, विशिष्टाद्वैतिभिरपि तत्कालमात्रानुभाव्यत्व-

तत्पुरुषमात्रानुभाव्यत्वतदभावप्रयुक्तवैधर्म्यसद्भावात् स्वप्ने मिथ्यात्वानुमानप्रसक्तिरस्ति, न त्वत्रेति तदेव वैधर्म्यं सूत्रकृदाहेति सुवचम् । एवं स्वप्ने पदार्थानां सत्यत्वेऽपि तेषां जागरपदार्थभिन्नत्वात् तत्र, अयमहं चैत्रः, अयं मे पिता, मातेयम्, मातुलोऽयमित्येवं चैत्रत्वपितृत्वादिज्ञानं भ्रान्तिरेव । जागरसमयानुभाव्यशरीरसंस्थानसरूपसंस्थानदर्शनमात्रादेवं धीरिति तादृशबाध्यांशाभिप्रायेण स्वप्नवैधर्म्यं सूत्रकृद् दर्शयतीति च भाव्यताम् ।

## स्वप्नोपसंहारः

अतः श्रुतिप्रामाण्यमातिष्ठमानानां स्वाप्निकाः पदार्थाः सत्या एव । न च प्रातिभासिकेषु शुक्तिरजतादिषु लोके सृजतिशब्दः प्रयुज्यते; श्रुतौ स्वप्नविषये 'अथ रथान् रथयोगान् पथः सृजते, स हि कर्ता' इत्येवं सृजत्यादिः प्रयुज्यते, शक्तिश्च प्रतिपाद्यत इति न तत्र प्रातिभासिकतुल्यता, किं तु जागरवत् सत्यतैवेति तत्रापि यथार्थख्यातिर्दृश्यमानपदार्थविषये । पितृत्वमातृत्वादिधर्मांशे पुनः प्रकारान्तरेणानिर्वाह्ये स्यादख्यातिरिति ।

एवञ्च यत्र साक्षात्कारस्थले साक्षात्कारत्वानिर्वाहायानिर्वाच्यं किञ्चिदपूर्वं कल्प्यते, तत्र तत्कल्पनां विनैव पारमार्थिकांशग्रहणेनैव निर्वाहं वर्णयन्तो विशिष्टाद्वैतिनो यथार्थख्यातिं ख्यापयन्ति । अन्यत्त्वन्यत्र ।

## उदाहरणान्तरे विमर्शः

अथान्यदुदाह्रियते

"पलाशमुकुलभ्रान्त्या शुकतुण्डे पतत्यलिः ।
सोपि जम्बूफलभ्रान्त्या तमेतं हर्तुमिच्छति ॥"

अत्रालिशुकयोः पलाशमुकुलजम्बूफलरसास्वादप्रसङ्गः । अनिर्वचनीययोस्तयोरुत्पन्नत्वात् । अथ तत्र प्रतिभासमानवर्णाकारमात्रवैशिष्ट्याङ्गीकारेऽपि न रसगन्धस्पर्शादीतरांशसत्त्वमिति चेत् - तर्हि यादृशयादृशासाधारणांशवैशिष्ट्यं पलाशमुकुलजम्बूफलादावायुर्वेदलोकानुभवसिद्धम् , तादृशांशवैशिष्ट्यं तत्र बाधज्ञानोदयात् प्रागपि यदि न भविष्यति, तर्हि तत् अपलाशमुकुलमजम्बूफलश्चेति अतस्मिंस्तत्प्रत्यय एव तत्र । तत्र तच्छब्दवाच्यत्वधीरपि भ्रान्तिरेव । साक्षिभास्ये तत्रेन्द्रियग्राह्यत्वादिधीरपि भ्रान्तिरेव । तन्निर्वाहायैव हि

तत्रानिर्वचनीयकल्पना। कल्पनेऽपि तदनिर्वाह एव। एवं शुक्तिरजतादावपि। परमार्थापरमार्थसंयोगाद्यभावाच्च, अत्र रजतमित्यादिकमपि न घटत इत्यादि भाव्यम्।

## मिथ्याज्ञानव्यवहारनिर्वाहः

तर्हि सर्वस्य ज्ञानस्य यथार्थत्वे मिथ्याज्ञानमिति लोकव्यवहारः किमभिप्रायक इति चेत्—उच्यते। अन्यथाख्यातिपक्षे तदभाववति तत्प्रकारकत्वरूपं ज्ञाने मिथ्यात्वम्, यद्देशकालावच्छेदेन यत्र यद् गृह्यते, तादृशगृह्यमाणदेशकालावच्छेदेन गृह्यमाणविशेष्यावृत्तिप्रकारत्वं वस्तुनि मिथ्यात्वम्, पूर्वोक्तज्ञानजनकवाक्यत्वमेव वाक्ये मिथ्यात्वमिति मिथ्याज्ञानं, मिथ्यावस्तु, मिथ्यावाक्यमिति पदानामर्थस्थितिः। अख्यातिपक्षे च ज्ञानस्य मिथ्यात्वं नाम विद्यमानभेदाग्रहधर्मिग्रहोभयविशिष्टकिञ्चिज्ज्ञानत्वरूपम्। यथार्थख्यातिपक्षे तु वस्तुतः शुक्तिगतस्य गृहीतांशस्य रजतत्वात् अभिमतकार्यानुपयोग्यर्थविषयकज्ञानत्वं मिथ्याज्ञानत्वमिति वक्तव्यम्, शुक्तिभूयस्त्वबलेन तस्य रजतांशस्यापेक्षितकार्यनिर्वर्तकत्वाभावात्। अतश्च सत्यमर्थक्रियाकारि, अतादृशं मिथ्येति निर्वचनमप्यनुसृतं भवतीति सर्वपक्षेऽपि मिथ्याज्ञानत्वं सूपपादमिति दिक्।

## अनिर्वचनीयकारणविमर्शः

तदेवं श्रीभाष्ये अनिर्वचनीयस्यात्यन्तापरिदृष्टत्वमभिसंहितम्। एवमकारणकत्वमपि। इदं रजतमिति प्रतीतिस्तावत् रजतसत्ताज्ञापिका; न तु कारिका। कथञ्च कारकाभावादनुत्पन्नं रजतं ज्ञापकाभिमतः प्रत्ययः साधयेत्। शुक्तित्वाज्ञानं तु पुरुषगतं तत्र शुक्तिज्ञानाधीनव्यवहाराभावं परं साधयेत्। शुक्तिगतं किञ्चित् शुक्तित्वाज्ञानं त्वनुभवानारूढम्। यदि तदा शुक्तौ काचिच्छक्तिः स्यात्, तर्हि ततो जायमानं रजतं मृद्घटादिवद् विनश्यदेव स्यात्; न तु बाध्यम्। तिमिरादिदोषस्त्विन्द्रिये वर्तमान इन्द्रियकार्यमन्यथा कुर्यात्; न तु बहिः किञ्चिदुत्पादयेत्। न चोत्पन्नं रजतमिति कस्यचिदनुभवोऽस्ति। न च स्वप्न इव तत्र सृष्टेः स्थापकं श्रुतिप्रमाणं लक्ष्यते। प्रतीत्यन्यथानुपपत्त्या कारणमेकं कल्प्यत इति चेत्, तत्कल्पनातः प्रागस्थितं कथं तद्रजतमुत्पादितवत् स्यादिति।

एवं यथार्थख्यातिं स्थितामत्र नयद्युमणौ निरूपयन् श्रीभाष्यादिदर्शितान्युदाहरणानि बहूनि गृहीत्वा विचारं प्रवर्तयत्ययं ग्रन्थकारः

संशयविपर्ययतर्कभेदेन त्रेधा अयथार्थज्ञानस्य तार्किकैर्विभजनात् सर्वोदाहृत-विपर्ययस्थलेष्विव संशयतर्कविषये तत्परित्यक्तेऽपि स्वसिद्धान्तमनुरुध्य निर्वाहं निरूपयतीत्ययमस्ति विशेषः।

एवं सर्वस्यापि ज्ञानस्य यथार्थत्वे लोके प्रमाभ्रमादिप्रतिनियतव्यवहार-नियामकं किमिति चेत्—उद्देश्यभूतकार्यनिष्पादकप्रवृत्तिहेतुज्ञानं प्रमा, तदनिष्पादकप्रवृत्तिहेतुर्भ्रम इत्येवं भाव्यम्।

## स्वतः प्रामाण्यम्

एवं सर्वं ज्ञानं प्रमेत्यवोचाम,। एतद्गतं प्रामाण्यं किं स्वतः परत इत्यत्र तीर्थकरा विप्रतिपद्यन्ते। अत्रेदं सारभूतं संगृह्यते। प्रामाण्यमप्रामाण्यञ्च स्वत इति सांख्याः। उभयं परत इति तार्किकाः। अप्रामाण्यं स्वतः, प्रामाण्यं परत इति बौद्धाः। प्रामाण्यं स्वतः, अप्रामाण्यं परत इति वैदिकाः।

तत्रायं सांख्याशयः—वस्तु उत्पद्यमानं स्वासाधारणधर्मविशिष्टमेवोत्पाद्यते सामग्र्येति प्रमाणभूतं ज्ञानं प्रामाण्यविशिष्टमेवोत्पद्यते, अप्रमाणभूतमपि ज्ञानं तथेति न धर्मोत्पत्त्यर्थं कारणान्तरमन्वेष्टव्यम्। यथैवं स्वतो जायते, तथा स्वत एव ज्ञायते च। ज्ञानस्य ह्ययं स्वभावः, यद्वस्तु यथाऽस्ति, तथा तद् गृह्णातीति। एवञ्च प्रमाणभूते ज्ञाने गृह्यमाणे प्रामाण्यविशिष्टमेव गृह्यते, अप्रामाणभूतञ्चाप्रामाण्यविशिष्टं गृह्यत इति।

तार्किकास्तु प्राहुः—ज्ञानं तावद् द्विविधम् प्रमा भ्रमश्चेति। तत्र ज्ञानस्य सामान्यसामग्री, विशेषसामग्रीति द्वयं वाच्यम्। लोके सर्वत्र कार्ये तद्दर्शनात्। तत्र विशेषसामग्रीं विना सामान्यसामग्रीमात्रात् कार्यं कुत्रापि न भवतीति विशेषसामग्र्यां सामान्यसामग्री निविशत इत्यन्यदेतत्। तथा च ज्ञानसामान्यसामग्री प्रमात्वादिविशेषनियामकांशसंवलिता विशेषोत्पादिका भवति। अतः सामान्यसामग्र्यतिरिक्तो गुणो दोषश्च यथाक्रमं प्रमात्वे भ्रमत्वे च हेतुरित्युभयोरुत्पत्तिः परत एव; तथा ज्ञप्तिरपि, सफलप्रवृत्तिहेतु-त्वादिनैव तद्ग्रहात्। स्वत एव चेद् गृह्यते, प्रमाणमप्रमाणं वेति संशयादि च नोपपद्यत इति।

सर्वापलापप्रवृत्तेन तु बौद्धेन ज्ञानस्य स्वतःप्रामाण्ये वस्तुसिद्धिरापद्यत इति भीतेन स्वपक्षरक्षणमुखामोदकभक्षणप्रत्याशया अप्रामाण्यं स्वत इत्यास्थीयते।

यद्येवं तत्त्वम्, लौकिकं सर्वमपि ज्ञानं स्वत एवाप्रमाणमवबुध्यमानो बौद्धो भोजनादावप्यप्रवृत्तः कथं प्राणान् धारयिष्यति ?

## तार्किकवादतत्त्वम्

अत्र तार्किकोक्तं किञ्चिदप्रतिषेध्यमिव लक्ष्यते । तथाहि—प्रामाण्यं नाम किमिति निरूप्यैव, तद् ज्ञाने गृह्यमाणे सह गृह्यते न वेति वक्तव्यम् । यद् धर्मि, यश्च धर्मः तदुभयग्राहित्वमेव प्रामाण्यमित्युक्तौ इदं रजतमिति ज्ञानमपि प्रमाणं स्यात्, शुक्तिरूपधर्मिरजतत्वरूपधर्मोभयग्राहित्वात् । अतस्तद्वति तत्प्रकारकत्वं प्रामाण्यम् । रजतत्वाश्रयभूत एवेदं ज्ञानं रजतत्वप्रकारकमिति रजतत्वविशिष्टवस्तुविशेष्यकत्वावच्छिन्नरजतत्वप्रकारकत्वरूपप्रामाण्यग्रहणं तावत् इदं रजतं जानामीत्यनुव्यवसायतो न भवतीति परत एव ग्राह्यमिति । एवं तदभाववति तत्प्रकारकत्वरूपमप्रामाण्यमपि तदभाववद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वरूपं परत एव ग्राह्यमिति । तदिदमस्माभिर्न्यायकुसुमाञ्जलिव्याख्याने निष्कृष्यादर्शि । वैदिकास्तु ज्ञाने गृह्यमाणे सह गृह्यत एव प्रामाण्यमिति प्राहुः । तत्र मीमांसकानां त्रिस्रो गतयः । ज्ञानमतीन्द्रियं ज्ञाततयाऽनुमेयमिति ज्ञाने अनुमानेन गृह्यमाणे प्रामाण्यमपि सह गृह्यत इति भाट्टाः । ज्ञानं मनइन्द्रियग्राह्यमेवेति अनुव्यवसायेन गृह्यते सह प्रामाण्येनेति मुरारिमिश्राः । ज्ञानं स्वयम्प्रकाशं ज्ञानान्तरनिरपेक्षमेव प्रकाशते; तदा प्रामाण्यमपि सहेति प्राभाकराः । वेदान्तिनः प्राभाकरपक्षमेव परिगृह्णन्ति । स्वयंप्रकाशत्वादेव ज्ञानस्य तदुचितमभिनीय दर्शयितुकामाः, अयं घट इति ज्ञानाकारमुपेक्ष्य, घटमहं जानामीति ज्ञानाकारमादित एवाभिलपन्ति । अस्य च, अहं घटविषयकज्ञानवानित्यर्थो भवेत् । इममहं घटं जानामीति वा ज्ञानाकार इष्यताम् । तदपि पुरोवर्तिविशेष्यकघटत्वप्रकारकज्ञानवानहमित्येव गृह्येत । न तु घटत्ववद्विशेष्यकत्वांशग्रहणम् । न हि विशेष्यं घटत्ववत्त्वेन तत्र भाति । इममित्यस्य पुरोवर्तिनमित्यर्थः स्यात्; न तु घटमिति । न हि घटमहं घटं जानामीति तदर्थ इति । तथा च तार्किकोक्तस्य कथं स्वतोग्रहणमिति—

## वेदान्त्याशयः

अत्रेदं बोध्यम्—घटत्ववद्विशेष्यकत्वविशिष्टघटत्वप्रकारकत्वरूपप्रामाण्ये तार्किकोक्तानुव्यवसायसमानाकारस्वयंप्रकाशज्ञानेनागृह्यमाणं किमिति विचार्यम् ।

धर्मिविशेष्यकत्वघटत्वप्रकारकत्वयोर्भानं तावदविवादम् । अत एव तादृशविशेष्यकत्वावच्छिन्नत्वमपि तत्प्रकारकत्वे गृहीतमेव । किं तु ईदृशविशेष्यता वस्तुतो घटत्वसमानाधिकरणा न वेति प्रामाण्यसंशयपर्यवसानं वाच्यम् । तथा च प्रामाण्यग्रहणं नाम विशेष्यतायां तत्र घटत्वसामानाधिकरण्यग्रह एव खलु । स चास्ति । कथम् । घटमहं जानामि, ज्ञातो मया घट इत्युभयमेकार्थम् । तत्र मदीयघटत्वप्रकारकज्ञानविशेष्यो घट इत्यर्थके विशेष्यतायां घटत्वसामानाधिकरण्यं भासत एव; पर्वतो वह्निमानिति सामानाधिकरण्येनानुमितौ वह्निपर्वतत्वयोः सामानाधिकरण्यं यथा । एवञ्च सर्वत्र तुल्यवित्तिवेद्यतानिबन्धनं तद्भानमवर्जनीयम् । अत इदमपि प्रामाण्यं गृहीतमेव । एतत्सूचनायैव प्राञ्चः, 'प्रामाण्यं नाम विषयतथात्वम्' इति व्यपदिदिशुः । अतो विषयनिष्ठस्य तस्य कथं ज्ञानगतप्रामाण्यरूपतेति न शङ्क्यम्—प्रामाण्यमगृहीतमिति वदद्भिर्यदन्ततो गत्वा तत्रागृहीतमिति वक्तव्यम, तत् ज्ञानविशेष्यतासामानाधिकरण्यं ज्ञानप्रकारीभूतघटत्वादिगतं यत् तदेवेति, तच्च गृहीतमेवेति निरूपयितुमेव विषयतथात्वमित्युच्यते । अतः प्रामाण्यं प्रथमतो गृह्यत एव ।

## अप्रामाण्यशङ्कासमर्थनम्

एवमपि प्रबलप्रमाणेन बाधकेन क्वचित् प्रामाण्ये अपोदिते दृष्टे तद्वदेव ज्ञानत्वाविशेषात् गृहीतप्रामाण्यकेऽप्यप्रामाण्यशङ्का, प्राप्तगुरूपदिष्टार्थविश्वासस्यैव साधोः पश्चात् कुतर्कक्षोभकारिताप्रामाण्यशङ्केव, विपक्षेच्छाबलाद् व्यभिचारशङ्केव च संभाव्यत इति न संशयानुपपत्तिः । व्यभिचारज्ञानाभावसहकृतसहचारज्ञानं व्याप्तिग्रहोपाय इति वदद्भिर्नवीननैयायिकैर्व्यभिचारसंशयस्यापि व्याप्तिनिश्चयप्रतिबन्धकत्वमिष्यते । तदत्रानुभवबलायातार्थस्वीकारे काऽनुपपत्तिः? वस्तुतस्तत्र संशयस्य प्रतिबध्यस्य मणिमन्त्रादिनयेन निश्चयप्रतिबन्धकत्वकल्पनं न युक्तमिति, किंतु इच्छारूपशङ्काया एव प्रतिबन्धकत्वमानुभविकमिति च न्यायकुसुमाञ्जलिविस्तरे मूलग्रन्थस्वारस्यप्रदर्शनपूर्वमस्माभिर्वर्णितमप्यत्रानुसंधेयम् । तथा च सत्यपि प्रामाण्यनिश्चये यावत् अप्रामाण्ये स्वीक्रियमाणे किञ्चिदनिष्टं नापाद्यते, तावत् अप्रामाण्यशङ्का तादृशी प्राप्तावसरेति ध्येयम् । सा च शङ्का प्रामाण्यनिश्चयाधीनप्रवृत्तिविशेषप्रतिबन्धिकाऽपि भवितुमर्हति ।

## स्वतःप्रामाण्यग्रहे युक्त्यन्तरम्

इदञ्च बोध्यम्—ज्ञानान्यथानुपपत्त्या सर्वत्र वस्तुसिद्धिः । अतो वस्तुग्रहणार्थतया कॢप्तस्य, तस्य वस्तु यथाऽस्ति, तथात्वेन तद्ग्राहकत्वमुत्सर्गः । पूर्वकर्मानुगुण्यात् तत् कदाचित् स्वभावमतिक्रम्यान्यथाग्राहकं भवति । अत एवाननुभूतान्यथाभावानां बालानामुपदिश्यमाने सर्वत्र साहजिको विस्रम्भः । अत एव मुक्तानां विपरीतग्रहणप्रसक्त्यभावः । अत एव यावत् परक्षोभो वा चित्तचाञ्चल्यरूपप्रकृत्यास्कन्दनं वा न भवति, तावत् विषयतथात्वावसायेन निष्कम्पा प्रवृत्तिर्निर्विलम्बमेव जायमाना जगत्यनुभूयते ।

## प्रकाशपदार्थविवेचनम्

एवं ज्ञानस्य विषयस्य च विषयविषयिभावो नाम न स्वरूपादतिरिच्यते । नापि स्वयंप्रकाशं ज्ञानमित्यस्य स्वस्मिन् स्वयं विषयो भवतीत्यर्थः, येनाङ्गुल्यग्रेण स्वात्मस्पर्शवदशक्यमिदम्, कर्तृकर्मभावविरोधश्चेत्याशङ्का पदं निक्षिपेत् । किंतु "धर्मभूतज्ञानस्य विषयित्वं विशेषः" इति श्रीमद्रहस्यत्रयसारोक्तरीत्या तस्यैव विषयवत्त्वं विषयसंबन्धिस्वरूपमस्ति; न तु स्वप्रकाशस्यात्मनः; स्वस्य स्वसंयुक्तस्वरूपविषयवत्त्वायोगात् । तदत्र स्वप्रकाशता नाम स्वव्यवहारकारणत्वमेव । "प्रकाशो नाम व्यवहारानुगुण्यम्" इति हि भाष्यम् । तथाचात्मा इतरनिरपेक्षं स्वव्यवहारे कारणं भवति । धर्मभूतज्ञानञ्च घटादिव्यवहारे स्वयं कारणं भवत् स्वस्य स्वाविषयकत्वेऽपि स्वव्यवहारे स्वातिरिक्तं ज्ञानमनपेक्षमाणं स्वयमेव कारणं भवति, दीप इव स्वग्रहणे । अतश्च, घटमहं जानामीति घटघटत्वज्ञानाहमर्थानां प्रकाशः व्यवहारो भवति । व्यवहारे कृते श्रोतुस्तावद्विषयकज्ञानं जायत इति तावत्प्रकाशकत्वं नाम तावद्विषयकज्ञानान्तरहेतुशब्दप्रयोगयोग्यतैव । तत्राहमर्थप्रकाशकोऽहमर्थ एव । ज्ञानप्रकाशकञ्च ज्ञानम् । तयोः संसर्गप्रकाशनञ्च ताभ्यामेव । घटघटत्वप्रकाशकञ्च ज्ञानम् । एवं भवन्तं सर्वप्रकाशमभिप्रेत्यैव, 'ज्ञानं घटमहं जानामीत्यकारक'मित्युच्यते । न पुनर्ज्ञानेऽस्य सर्वस्यापि विषयत्वम् ।

तत्र धर्मधर्मिणोर्द्वयोर्ग्रहणकाले तत्संबन्धोऽपि गृह्यते, यदि वस्तुगत्या सोऽस्ति । घटे घटत्वसंबन्ध एव प्रामाण्यम् । तद्ग्रह एव प्रामाण्यग्रहः । भ्रमस्थले तु धर्मधर्मिणोर्वस्तुतः संबन्धाभावात् धर्मविषयज्ञानं धर्मिविषयक-

ज्ञानञ्च त्रिभिन्नमित्यख्यातिपक्षेणाङ्गीकारात् प्रामाण्यं न गृह्यते । ज्ञानत्वाविशेषात्तु ज्ञानैक्यभ्रमवत् प्रामाण्यं गृहीतमिति भ्रमः । शङ्कासंभवश्च प्रागेव दर्शितः । तद् ज्ञानद्वयं तु शोधने प्रत्येकं स्वस्वगृहीतांशे प्रमैवेत्यलमधिकेन ।

एतस्य स्वतःप्रामाण्यस्य निरूपणात् प्राक् अत्र ग्रन्थे अध्ययनविधिनिरूपणं यत् कृतमस्ति, तत्रैतन्मतस्य ,सयूथ्यनिर्णयस्य चैषदंशे स्थितो भेदस्तत्रोपक्रम एव टिप्पण्यामदर्शि ।

## वाक्यार्थः

अथ चतुर्थं वाक्यार्थप्रदीपं परिच्छेदमधिकृत्य किञ्चिदुपक्षिप्यते । तत्रादौ क्रियैव वाक्यार्थः, अपूर्वं वाक्यार्थ इत्यादीन् तीर्थकराणां पक्षान् निर्दिश्य तत्तन्निरसनेन स्वपक्षं (ब्रह्मवाक्यार्थपक्षं) स्थापयति । अत्रेदं विमृश्यम्— क्रियावाक्यार्थवादिनस्तावत् वैयाकरणाः । तन्मते, चैत्रस्तण्डुलं पचतीत्यादौ चैत्रकर्तृकस्तण्डुलकर्मकः पाक इति बोधः । क्रिया नाम भावनेति मीमांसकाः । सा चाख्यातार्थः । तन्मुख्यविशेष्यको बोधस्तेषामिष्टः । तदा च चैत्रनिष्ठा तण्डुलकर्मिका पाकसंबन्धिक्रियेति बोधः । यद्यपि विधिस्थले लिङाद्यर्थस्य शब्दभावनात्मिकायाः प्रवर्तनाया मुख्यविशेष्यत्वं प्राचामिष्टम्, अथापि सर्वाख्यातसाधारण्याय नवीनमीमांसकैरर्थभावनामुख्यविशेष्यक एव बोधः सर्वत्रेषितः । इमञ्च पक्षं "भावनामपरे जगुः" इतीह निर्दिदेश । एवं बोधप्रकारान् गणयन्नयं तार्किकसंमतं प्रथमान्तार्थमुख्यविष्यकं बोधं कस्मादत्याक्षीदिति ।

## ग्रन्थोक्तसमर्थनम्

'अत्रोच्यते—नायं वाक्यमेकं गृहीत्वा तदर्थेषु कतमस्य मुख्यविशेष्यत्वमितीमं विचारमिह प्रवर्तयति, येन नैयायिकपक्षप्रस्मरणमिति दोषः स्यात् । किंतु तत्तत्तीर्थकरैस्तत्र तत्र (भिन्नभिन्नवाक्य एव) वर्ण्यमानं स्वानभिमतं वाक्यार्थं प्रस्तुत्य स्वयं परमुखेन वा तं प्रदूष्यान्ते स्वसिद्धान्तं समर्थयते । यदि तावदेकस्मिन्नेव वाक्ये तान्त्रिकाणामर्थवर्णने स्थितं भेदमत्र प्रदिदर्शयिषुरयमिति स्यात्, तर्हि क्रिया वा अपूर्वं वा अखण्डैकरसं ब्रह्म वा स्फोटो वा भावना वा इष्टसाधनं वा इष्टं वा चिदचिद्विशिष्टं ब्रह्म वा को वाक्यार्थ इत्येवमर्थभेदाः कुत्रैकस्मिन् वाक्ये प्रदर्श्येरन्? न हि "यजेत स्वर्गकामः" इत्यत्राखण्डैकरसब्रह्मप्रतिपत्तेः प्रसक्तिलवलेशोऽप्यस्ति । न च "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यत्रापूर्वं वा कार्यं वा वाक्यार्थ इति कश्चिन्मीमांसको

विचारं प्रवर्तितवानस्ति । अतः पूर्वोक्त एव प्रकारो भाव्यः । तत्र क्रिया वाक्यार्थ इति न वैयाकरणमतनिरूपणाभिसंधिना । स्फोटवाक्यार्थपक्ष एव तु तदीयः प्रसिद्ध इष्टः, खण्डितश्च ।

किं तु विधिवाक्ये लिङर्थः क इति विचारेऽवतीर्य केचित् कार्यमर्थ इति निरूपयन्तः कार्यं तत् क्रियैवेति निष्कर्षन्ति, लोकवेदसाधारण्यं वाक्यार्थस्य तदात्वे सेत्स्यतीत्याशयानाः । यजेतेत्यत्रेव गामानयेत्यत्रापि हि क्रिया जागर्ति ; ममेदं कार्यमिति प्रतिपत्तेरत्रापि श्रोतुर्भावात् । अपूर्वं तु नैवं साधारणमिति । तत्पक्षः प्रथममुपन्यासि ।

अथ तु प्राभाकरस्य, यागादिक्रियायाः क्षणध्वंसितया चिरकालादनन्तरभाविफलसाधनत्वायोगेनानन्वयात् लिङर्थत्वासंभवमभिमन्यमानस्य, अत एव लोकव्यवहारावगतक्रियावाक्यार्थव्युत्पत्तिं पश्चात् परित्यजतः, लौकिकवाक्यानां पुरुषबुद्ध्यनुमापकत्वेनानुमानसिद्धार्थानुवादकतया प्रामाण्याभावमातिष्ठमानस्य, अत एव लोकवेदसाधारण्यं लिङर्थस्यानपेक्षितं मन्यमानस्य, यो वेदस्यैव शब्दप्रमाणतया वैदिकलिङाद्यर्थतयाऽवश्यमङ्गीकार्यस्यापूर्वस्यैव कार्यभूतस्य विध्यर्थत्ववर्णनपक्षः, स सर्वेतरपक्षप्रतिक्षेपेण प्रावर्ति । तथा च विधिवाक्येषु प्राभाकरपरिगृहीतापूर्ववाक्यार्थपक्षः स्वासंमतत्वात् प्रस्तुत्यानेन दूषितः ।

अथ "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यत्राद्वैतिभिः सत्यत्वज्ञानत्वादिविशेषणांशत्यागेन ब्रह्मरूपाखण्डैकपरत्वं यदिष्यते, विशिष्टस्यार्थत्वस्वीकारे एकविशेषणविशिष्टस्यापरविशेषणविशिष्टस्य च विशेषणभेदप्रयुक्तविशिष्टताभेदाद्भिन्नस्याभेदायोगादिरूपतर्कावलम्बनेन, तस्य स्वानभिमतस्य प्रस्तावः स्वयं परमुखेन वा तत्खण्डनाय । वैयाकरणैः सर्वत्रैव वाक्ये स्फोट एव वाक्यार्थ इष्यत इति तदनुवादस्ततः, तं खण्डयितुम् । विधिस्थल एव लिङादेरिष्टसाधनत्वमित्यादि यदुच्यते मण्डनमिश्रेण नैयायिकेन वा, तदुपन्यासो निरसनाय । अन्ततश्च स्वपक्ष उच्यते चिरचिद्विशिष्टं ब्रह्मैव वाक्यार्थ इति ।

## सर्वत्र ब्रह्मणो वाक्यार्थत्वानुपपत्तिः

तत्र च यदि प्रतिवाक्यं ब्रह्मणो मुख्यविशेष्यत्वेन नियमेन भानमत्र प्रतिपिपादयिषितं स्यात्, 'गामानय', "यजेत स्वर्गकामः" इत्यादिषु लौकिकेषु वैदिकेषु च वाक्येषु सर्वत्र ब्रह्मणः शाब्दबोधे भानमेष्टव्यं स्यात् । न

हि कश्चिदेवं लोके प्रतिपद्यते । एवं ब्रह्मणो मुख्यविशेष्यतया भानावश्यम्भाववर्णनमात्रेण कतमस्य पदस्यार्थो मुख्यविशेष्यतया स्थापितः स्यादित्यपि न कथञ्चिदपि बुध्यते । सर्वाण्यपि हि पदानि "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि", "तदनुप्रविश्य सच्च त्यच्चाभवत्", "सत्यञ्चानृतञ्च सत्यमभवत्", "वचसां वाच्यमुत्तमम्" इत्यादि प्रमाणं शरीरवाचकशब्दानां शरीरिपर्यन्तार्थकत्वन्यायञ्चानुसृत्य ब्रह्मपर्यन्तबोधनक्षमाणि । एवम् "आग्नेयमष्टाकपालं निर्वपति" इत्यादौ तत्तत्प्रकृतिप्रत्ययानां स्वार्थविशिष्टब्रह्मपरत्वे प्रकृत्यर्थस्य प्रत्ययार्थे, प्रत्ययार्थस्य च पदान्तरार्थेऽभेदेनैवान्वयो वाच्य इति भेदसंबन्धेनान्वयोऽखिलतान्त्रिकसंमतो न घटेत । लोकानुभवसिद्धः कार्यकारणभावः सर्वोऽपि त्यक्तः स्यात् । वेदान्तव्युत्पत्तिमन्महात्मबुद्ध्या कश्चिद्वाक्यार्थः, ब्रह्मविषयव्युत्पत्तिरहितकेवललौकिकजनसमूहदैनन्दिनानुभवापलापायोगेन ब्रह्मरूपार्थपरित्यागेन चापरो वाक्यार्थ इति सर्वत्र द्वैधं स्यात् ।

अथ शास्त्रतर्कसिद्धब्रह्मार्थकत्वस्य निष्कर्षविवक्षाकृते प्रयोगेऽनङ्गीकारात्, लोके च ब्रह्मज्ञानविधुराणां प्रयोगेषु वक्तृतात्पर्यविरोधेन ब्रह्मरूपार्थवर्णनायोगात्, "यजेत स्वर्गकामः" इत्यादावपि लिङर्थस्य कर्तृव्यापारसाध्यत्वस्य वा, स्वर्गकामरूपकर्तुर्वा बोधस्य ब्रह्माविषयकस्यानुभविकस्य त्यागेन तत्तद्विशिष्टब्रह्मेत्यर्थवर्णनेन प्राप्यस्य फलविशेषस्यादर्शनात्, ब्रह्मणि तद्वैशिष्ट्यबोधनार्थतया तादृशवाक्यप्रवृत्त्यभावेन तथा वर्णनायोगाच्च यत्र यत्र लोके वेदे वा ब्रह्मणो बोधविषयत्वमवश्यमेषितव्यम्, तत्रैव ब्रह्मणो वाक्यार्थत्वमित्युच्यते यदि—तर्हि ग्रन्थकारोऽयं कार्यापूर्वस्फोटादिवाक्यार्थदूषणपूर्वकम्, कार्यपरवाक्यानामेव बोधकत्वम्, न तु सिद्धपरवाक्यानामित्येतन्निरसनपूर्वकम्, तथा सिद्धपरवाक्यस्वार्थप्रामाण्यस्वीकारेऽप्यखण्डब्रह्मपरत्वाभिमानिनामद्वैतिनां मतव्युदासपूर्वकञ्च ब्रह्मप्रत्यायकं वाक्यं सर्वं यथायथं चिद्विशिष्टमचिद्विशिष्टं च ब्रह्मैव प्रतिपादयति, न तु निर्विशेषम्; यथायथं बद्धमुक्तनित्यरूपचेतनप्राकृताप्राकृतद्रव्यकल्याणगुणाद्यचेतनरूपविशेषणविशिष्टब्रह्मण एव सर्वत्र प्रतीतेरित्येतावदेव विवक्षतीत्यस्तु ।

इदमत्र बोध्यम्—सर्वत्र विशिष्टब्रह्मण एव कारणत्वात् कार्यत्वाच्च यागादिसाध्यं स्वर्गाद्यपि तद्विशिष्टब्रह्मैव । ज्ञानं तु तावद्विषयकमनुष्ठातुर्नास्तीत्यन्यदेतत् । अपि चायं ग्रन्थकारः प्राभाकरप्रतिपादितं लौकिकवाक्यानां पुरुषाभिप्रायानुमापकतया अनुवादकत्वमनुमानविधया प्रामाण्य शब्दविधया प्रामा-

व्यामावश्च रोचयन् वेदरूपशब्दस्यैव शब्दविधया प्रमाणत्वमाशेते । परं तु कार्यपरवाक्यस्येव सिद्धपरवाक्यस्यापि । तत्र च "सर्वे वेदा यत्पदमामनन्ति" इत्यादिवाक्यानुरोधेन सर्वत्र वाक्यार्थे अन्ततो ब्रह्मणो विशेष्यतया प्रतिपादनं शब्दस्वाभाव्यकृतमनुपेक्ष्य ब्रह्मणस्तत्र तत्र वाक्यार्थतया प्रतीतचेतनाचेतनान्तर्यामित्वरूपमहिमानुसंधानेन वेदार्थानुभवो वेदान्तव्युत्पत्तिशालिनां महाजनानां भवन् प्रशंसनीय एव भवतीति सर्वत्र वेदे चिदचिद्विशिष्टब्रह्मरूपार्थप्रतिपत्तिर्भवत्येवेत्यभिप्रैतीति वर्णने तु न किञ्चिदनौचित्यमिति ।

किञ्च यच्चाप्ययम्, आप्ताभिप्रायो विध्यर्थ इति पक्षमेकदेशिमतमित्युपेक्षते । अतो लिङः परब्रह्मप्रत्यायकत्वमपि नास्ति । अथापि कर्मकाण्डस्य कर्तृव्यापारसाध्यत्वं क्रियायाः बोधयतोऽपि परदेवताप्रीणनेनैव कर्मणां फलसाधनत्वात् आराधनानामाराध्यप्रधानकत्वात् राजपुरुष इत्यादौ पुरुषस्य शाब्दप्राधान्येऽपि राज्ञ आर्थप्राधान्यवत् वाक्यानां यत्किञ्चिदन्यार्थमुख्यविशेष्यकबोधजनकत्वेऽपि सर्वकर्मसमाराध्यस्य सर्वान्तर्यामिणो ब्रह्मण एव परमार्थत्वसंभवात् तदैकार्थ्यमक्षतमित्यध्यवस्यति । उपनिषदां तु ब्रह्मनिरूपणार्थमेव प्रवृत्ततया तत्र ब्रह्मैव मुख्यार्थः । तत्र च "सत्यं ज्ञानमनन्तं ब्रह्म" इति वाक्यं नाखण्डपरम्—भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यमिति शाब्दिकोक्तरीत्या तत्तत्प्रवृत्तिनिमित्तविशिष्टैकार्थप्रतिपादकत्वात् समानाधिकरणवाक्यस्य । अन्यथा, 'अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाती' त्यादावपि आरुण्यैकहायनीत्वपिङ्गाक्षीत्वादिसर्वविशिष्टव्यक्तिसाध्यत्वं सोमक्रयस्य न बुध्येत; यत्किञ्चिद्व्यक्तिमात्रेण सोमः क्रेयः स्यात् । न च विशेषणानां मिथोऽन्वयाभावेऽपि विशेष्ये सर्वविशेषणवैशिष्ट्यप्रतिपादने काचिदनुपपत्तिरस्ति । अन्वयतो वा व्यतिरेकतो वा प्रवृत्तिनिमित्तस्य विभिन्नस्याविवक्षायाञ्च व्यर्थं सर्वं पदं स्यादिति परिशीलनेनाद्वैतिपक्षप्रतिक्षेपेणाह अनेकविशेषणविशिष्टं ब्रह्मैव मुख्यार्थ इति संप्रतिपन्नमिति वेदवाक्यार्थो ब्रह्मैवेति ।

## बोधमुख्यविशेष्यविचारः

अस्तु तावदिदम् । वेदान्तिमते वाक्यजबोधे किं मुख्यविशेष्यमिति । उच्यते—नानासुबन्तैकाख्यातान्तपदकदम्बस्यैकवाक्यत्वात् तत्र सुबन्तानामनेकेषां मध्ये कस्यचित् प्राधान्ये विनिगमनाविरहादाख्यातान्तप्राधान्ये औचित्यं

लक्ष्यते । "प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः; तयोस्तु प्रत्ययः प्राधान्येन" इति स्मरणात् प्रातिपदिकापेक्षया सुब्विभक्त्यर्थानां कर्मत्वकरणत्वादीनां प्राधान्ये सिद्धे तेषाञ्च कारकाणां क्रियासापेक्षतया क्रियान्वयस्य युक्ततया तेषां क्रियया वशीकार इष्यते । एवञ्चाकारकविभक्तिस्थलेऽपि विभक्त्यर्थस्याविशेषादप्राधान्यं ग्राह्यम् । अतश्च षष्ठ्यादेरिव प्रथमाया अपि पदान्तरोपसर्जनत्वं युज्यते । यदा तु "अभिहितकारकवाचिनी प्रथमा" इति वार्तिककृतो मतमिष्यते, न तु प्रातिपदिकार्थ एव प्रथमार्थ इति पाणिनिमतम्, तदा कारकान्तरस्येव तस्यापि क्रियान्वयप्रतीतिः सुलभा । एवमाख्यातान्तप्राधान्ये सति तत्र तिङन्ते, किं प्रकृतेर्धातोरर्थः प्रधानं वैयाकरणमत इव, किं वा तिङर्थो मीमांसकमत इवेति विमर्शे, प्रकृतिप्रत्यययोर्मध्ये प्रत्ययार्थप्राधान्यानुशासनस्य तिङन्तव्यतिरिक्तविषयत्वेन संकोचे प्रमाणाभावात् लकारार्थस्यैव प्राधान्यमवसीयते ।

## न्यायपरिशुद्धिदर्शितोऽर्थः

परं तु आख्यातार्थकृतौ धात्वर्थस्य करणत्वादिनान्वयो मीमांसकोक्तो नेष्यते; किं तु साध्यत्वेनान्वयः । साध्यत्वमिदमुद्देश्यत्वातिरिक्तमुपादेयत्वरूपम् । फलस्य कृतिकर्मत्वं तु मीमांसकोक्तं न युक्तम्; ओदनं पचतीत्यादौ पाकेनौदनं करोतीति विवरणेऽपि, यागेन स्वर्गं करोतीत्यप्रयोगात् । अतो घटादेरिवौदनस्य कृतिसाध्यत्वात् कर्मत्वम्, न स्वर्गस्य; तस्य यष्ट्रा निर्माणाभावात् । घटः कृत इतिवत् अङ्कुरः कृत इति न कश्चित् प्रयुङ्क्ते इति च कुसुमाञ्जलावुदयनाचार्यः । अतः साध्यतातिरिक्ता उद्देश्यता फले । ओदनं पचतीत्यस्य ओदनमुद्दिश्य पाकं करोतीत्येव विवरणम् । ओदनो धात्वर्थकर्म, न कृतिकर्म । तदिदं न्यायपरिशुद्धिग्रन्थादधिगन्तव्यम् । अत एव श्रीमति रहस्यत्रयसारे, "वाक्यं पञ्चपदैर्युक्तमित्याख्यातप्रधानकम्" इति आख्यातप्राधान्यं कण्ठोक्तमिति । एवमपि कर्तुराख्यातार्थत्वात् न कृतेः प्राधान्यम् ।

## मुख्यविशेष्यविचारविमर्शः

अत्र किञ्चिद् विमृष्टव्यमस्ति—एकस्य पदार्थस्य पदार्थान्तरस्य च संबन्धोऽवश्यमस्ति, भासते च । तावता सर्वत्र निरूप्यनिरूपकभावापन्नविषयताशालित्वं सर्वेषामर्थानां सिध्येत् । तत्र विशेष्यताप्रकारतानैयत्यं किमर्थम्? किञ्चित्संबन्धावच्छिन्नविषयता प्रकारता, तदन्या संसर्गनिरूपितविषयता

विशेष्यतेति विवेकेऽपि तुल्यवित्तिवेद्यतया सर्वप्रकारस्य भानस्य सर्वत्र प्रमेयैक्ये संप्रतिपत्तव्यत्वात् तान्त्रिकैः क्रियमाणः, किं मुख्यविशेष्यमिति कोलाहलो नोचित इति किं सुवचं भवेदिति । एवं 'नामार्थयोरभेदेनान्वयः' इति व्युत्पत्तिर्न कल्प्या ; अरुणयैकहायन्येत्यादौ युगपत् समानाधिकरणपदैरारुण्यैकहायनीत्वादिविशिष्टतया सकृदेव धर्मिप्रतीतिजननस्वीकारात् व्यक्तेरनेकवारं भानस्य बोधे कल्पनाविरहात् । न चैवं राजपुरुष इत्यादौ षष्ठ्यर्थस्य संबन्धविधयैव भानमस्त्विति वाच्यम् ; नाम्नोर्भिन्नप्रवृत्तिनिमित्तविशिष्टैकार्थपरत्वस्य व्युत्पन्नत्वात् ; राजपदस्य पुरुषगतप्रवृत्तिनिमित्ताबोधकत्वे तद्विरोधात् । अस्तु वा षष्ठ्यर्थस्य संसर्गविधयैव भानम् । न च निषादस्थपत्यधिकरणविरोधः । तत्पुरुषे पूर्वपदे लक्षणाया अभावेऽपि निषादत्वाश्रयस्यैव स्थपतित्वाश्रयत्वस्वीकारे उपस्थितिकृतलाघवात्, व्यक्तिद्वयभानस्य द्विर्व्यक्तिभानस्य चाभावेन लाघवात्, उत्तरपदोत्तरविभक्तेरेव पूर्वपदोत्तरमपि प्रतिसंधाने लाघवाच्च कर्मधारयस्य ज्यायस्त्वमित्यधिकरणतात्पर्यसंभवात् । अतः "अरुणयैकहायन्या" इत्यादौ सर्वस्यापि विशेष्यभूतधर्मिपरत्वात् सर्वत्र समाना विभक्तिः ।

## विशेष्यविशेषणभावस्यानपलपनीयत्वम्

एतावता विशेषणविशेष्यभाव एव नास्तीति न ब्रूमः । आकृत्यधिकरणेन पदानां विशिष्टे शक्तिस्वीकारात् तत्र विशेषणविशेष्यसंप्रतिपत्तेः । तस्याधिकरणस्य आकृतिमात्रे शक्तिपरत्वम, आकृतिपदेन जातेर्विलक्षणाया ग्रहणञ्च यत् मीमांसकानुयायीष्टम, तद् वेदान्तिभिर्नेष्यते । न केवलमेतत् ; अरुणाधिकरणमपि श्रीभाष्ये तदुक्तप्रकारदूषणेनान्यथा व्याख्यातं भगवद्भाष्यकारैः । अयमपि नयद्युमणिकारोऽत्रैव वाक्यार्थप्रदीपप्रकरणे पश्चेकत्वाधिकरणं परिष्करोति । देवताधिकरणादीनामन्यथा व्याख्यातव्यत्वं तत्र तत्र प्रादर्शि । सेश्वरमीमांसादिश्रीमन्निगमान्तमहादेशिकादिग्रन्थाध्यायिनां बहुत्र मीमांसकव्याख्यानपद्धतेरुपेक्ष्यत्वं सुगमं स्यात् । अत आकृत्यधिकरणं विशिष्टे शक्तिव्यवस्थापकम् । गमकसत्त्वे तु विशेषणमात्रेऽपि प्रयोग इष्यते ।

## तत्र भाष्यपाक्षीकरणम्

एवं विशेषणविशेष्यभावस्यापलापाभावादेव, पञ्चाग्निविद्यायां ब्रह्मप्रकारकस्वात्मविशेष्यकोपासनम्, अन्यत्र स्वात्मप्रकारकब्रह्मविशेष्यकोपासनमिति

भगवद्भाष्यकारदर्शिता व्यवस्था सुस्था । ननु "तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" इत्यत्र तच्छब्दस्य जीवपरस्याप्याकृत्यधिकरणन्यायेन विशिष्टब्रह्मपरत्वे स्वरसे किमिति जीवस्य विशेष्यत्ववर्णनमिति चेत्; ब्रूमः—'ये' 'ये च' इति पृथङ्निर्देशावैयर्थ्याय तत्पदं जीवपरम्, तपःपदं ब्रह्मपरं चाभ्युपगम्यते । एवमपि ब्रह्मोपासनाभावे ब्रह्मप्राप्त्ययोगात् ब्रह्मोपासनेष्वपि शुद्धजीवोपासनस्यात्याज्यत्वाच्च प्रथमोपासने ब्रह्मणः, द्वितीयोपासनेषु जीवस्य चार्थात् प्रवेशे कार्ये सिद्धे, अर्थाक्षिप्तस्य ब्रह्मणो वाच्यार्थजीवोपसर्जनत्वमाद्यवाक्ये, अर्थाक्षिप्तस्य जीवस्य द्वितीयवाक्ये वाच्यार्थ-ब्रह्मोपसर्जनत्वं च भाने स्वीक्रियते । आक्षिप्तस्योपसर्जनतायाः, कण्ठोक्तस्य मुख्यतायाश्च युक्तत्वादिति । श्रीमद्रहस्यत्रयसारकारिका तु कैश्चिद्व्याख्यातत्वात् अस्थानपतितत्वादिचिन्तया च प्रक्षेपशङ्कास्पदम् । किञ्च तत्र आख्यातप्रधानकमित्युक्तिः तिङर्थमुख्यविशेष्यकत्वं बोधस्य न स्थापयेत् । तस्याः, मन्त्रस्यानुष्ठेयार्थप्रकाशनपरतया द्वये शरणागतिमन्त्रे शरणागतिरूपधात्वर्थैदम्पर्यस्य प्रदर्शनार्थं प्रवृत्तत्वात् । न हि शाब्दबोधे कस्य मुख्य-विशेष्यत्वमित्यस्येह निरूपणप्रसक्तिरस्ति । एवं चैत्रः पचतीत्यादौ तिङः कर्तृ-वाचित्वस्यैव व्याकरणादिसिद्धत्वेन प्रथमया पुनः कर्तृबोधनस्य व्यर्थतया चैत्रादि-प्रथमान्तपदस्याख्यातसामानाधिकरण्यात् चैत्रत्वपाककर्तृत्वोभयविशिष्टव्यक्ति-भानात् उभयोरपि विशेष्यपरत्वसंभवाच्च नाख्यातस्यैव प्राधान्यमित्येवं विमृश्य-मित्यलं विस्तरेण ।

तत् सिद्धं वाक्यघटकपदेषु येन केनापि परब्रह्मणो बोधनेऽप्य-न्विताभिधायिना तेन सर्वेण वाक्येनार्थप्राधान्यमप्रतिहतं वहतस्तस्य तद्वाक्यार्थे प्राधान्यमेकरूपं तदीयकल्याणगुणविशेषाविष्कारपूर्वकमुद्दिष्टं भवत्येवेति । यदि तु "लौकिकसर्ववाक्यानामपि ब्रह्मपरत्वेन मुख्यत्वात्" (११२ पु.) इति कथयतोऽस्य सर्वं विशिष्टब्रह्मपरमित्येवाभिमतमित्युच्यते, तदा ब्रह्मणि वक्तृ-तात्पर्याभावेऽपि, देवतान्तरमात्राराधनेऽपि शास्त्रबलात् भगवतः प्रीतिभाक्त्ववत् वक्तृतात्पर्याभावेऽपि शब्दशक्तिबलात् तत्त्वविदः पुंसः विवक्षितवाक्यार्थविशिष्ट-ब्रह्मबोधः स्वयं शब्दतो भवत्येवेत्यभिमतमिति वक्तव्यम् ॥

## अन्विताभिधानम्

प्रकरणान्तरवैलक्षण्येनास्य प्रकरणस्य वाक्यार्थप्रदीपात्मकपूर्वप्रकरणेन सह संगतिरप्यस्तीति प्रथमश्लोकेनाविष्कुर्वन् अन्विताभिधानं साधयितुं

प्रावर्तिष्ट । अन्विताभिधानवादोऽयं प्राभाकरसंमतः सिद्धान्तेऽपि स्वीक्रियते । अन्यस्तु अभिहितान्वयवादो भाट्टानाम् । उभयमिदं खण्डयन्तस्तार्किकाः प्रकारान्तरेण शाब्दं निर्वहन्ति । तत्प्रक्रिया च न्यायकुसुमाञ्जल्यादौ निष्कृष्टा ।

## अभिहितान्वयाप्रतिषेधः

अभिहितान्वयवादो भगवद्भाष्यकृद्भिर्न स्वीकृत इति स्थापनेऽर्वाञ्चो विप्रतिपद्यन्ते इति तत्त्वमुक्ताकलापतो विज्ञायते । यथोच्यते अन्विताभिधानं पूर्वं प्रसाध्य पुनरेवम्—

"संसर्गं वाक्यवेद्यं स्फुटमभिदधते कानिचिद्भाष्यवाक्या-
न्याद्या व्युत्पत्तिरुक्ता प्रतिपदमिह च क्वापि नान्यस्य हानिः ।
इत्थं मत्वा सयूथ्याः कतिचिदभिहितान्योन्यसंसर्गमीषु-
स्तत्तत्स्वारस्यलोकप्रतिपदनुगमात् तच्च नाधिक्षिपामः ॥" इति ।

## वेदान्तिमतविवेचनम्

कार्यान्वित एव प्रथमव्युत्पत्तिर्व्यवहाराद् भवतीति कृत्वा कार्यान्वित एव शक्तिरित्यभिहितं प्राभाकरैः । सिद्धार्थपरवाक्यादपि बोधस्वीकारिणो, भाट्टास्तार्किकाश्चैव वेदान्तिनः । परंतु अन्विताभिधानं प्राभाकरा इवेच्छन्ति । तत्र कार्यान्वितेत्युक्तौ सर्वानुगमविरहात् सामान्यतोऽन्विता-भिधानमित्याहुः, न तु कार्यान्वितेत्येवं विशेषरूपेण । कार्यवाक्यार्थवादिभिः प्राभाकरैरपि कार्यान्वितेति न वक्तुं शक्यम्; कार्यमात्रपरस्य लिङः कार्यान्वितवाचित्वाभावात् पदसामान्यं कार्यान्विताभिधायीति नियमायोगात् । अतः सामान्यतो वक्तव्यमन्विताभिधानमिति । शब्दः प्रमाणमित्यत्र शब्दपदेन नैकं पदं गृह्यते, एकपदमात्रस्याप्रमाणत्वसंप्रतिपत्तेः । आप्तवाक्यं शब्द इति तार्किका अप्याहुः । वाक्यंच संसर्गबोधकपदसमुदायः । अतः शब्दप्रमाणमन्विताभिधायीत्युक्तौ सामञ्जस्यं लक्ष्यते ।

## पक्षान्तरपरभाष्यनिर्वाहः

भाष्ये बहुत्रान्विताभिधानस्यादरणेऽपि जिज्ञासाधिकरणसिद्धान्तारम्भे पदमात्रेऽपि प्रथमव्युत्पत्तिर्दर्शिता, अम्बातातशशिपशुप्रभृतिषु पदेषु बहुशोऽङ्गुलिनिर्देशपूर्वं शिक्षया शक्तिग्रहो भवति, अथ च अस्य शब्दस्यायमर्थ इति प्रकारान्तरेण शिक्षापीति । न हि तत्रान्वितोऽर्थ

इति शिक्ष्यते । अन्वयं विना केवलस्यैवार्थतया निर्देशात् शब्दानामन्वयरहितेऽपि व्युत्पत्तिर्भवतीति ज्ञायते । अन्विताभिधानवादिना त्वस्य क्लेशेन निर्वाहः कार्यः । कथमिति चेत्—यद्यपि प्रथमत एवं गृह्णाति ; अथापि अनन्विताभिधायित्वे प्रमाणत्वायोगात् अन्वितपरत्वस्यावश्यकत्वेऽवधृते प्रथमतो विशिष्टैकदेशव्युत्पादने पश्चाद् व्युत्पत्तिपूरणं भविष्यति, वेदान्तव्युत्पत्त्या पदानां विशिष्टब्रह्मपरत्वनिश्चयेन व्युत्पत्तिपूरणवदिति ।

## पक्षद्वयपरभाष्यसूक्तिः

अन्विताभिधानमनिच्छन्तस्तु अन्वयांशोऽन्यथासिद्ध इत्युक्त्वा अनन्यलभ्यः शब्दार्थ इत्यातिष्ठन्ते । परमत्र भाष्ये उपरि "केनचित् पुरुषेण हस्तचेष्टादिना" इत्यादिना प्रकारान्तरेण व्युत्पत्तिः प्रदर्श्यते । तत्र 'बुद्धि पूर्वव्युत्पत्त्या सिद्धपरत्वं प्रागुक्तम् ; यादृच्छिकव्युत्पत्तौ तदत्र प्रदर्श्यते' इति विशेषो व्याख्यायामदर्शि । अभिहितान्वयानुगुणमुदाहरणं प्रागुक्तम् ; अन्विताभिधानानुगुणमुपरि प्रदर्श्यत इत्यपि सुवचम् । 'पिता ते सुखमास्ते' इत्यस्य पदसमुदायरूपतयान्विताभिधायकत्वात् । अतो भाष्यं जिज्ञासाधिकरणगतमुभयपक्षानुकूलम् ।

## भाट्टतार्किकमतविवेकः

एवमपि अभिहितान्वय इत्यत्र भाट्टभङ्गी भगवद्भाष्यकृदिष्टा, किं वा तार्किकप्रक्रियेति विमृश्यम् । उदयनाचार्यो न्यायकुसुमाञ्जलावन्विताभिधानवादिभिरभिहितान्वयपक्षे शक्तित्रयकल्पनागौरवं प्रसञ्जितं परिजहार । पदानां पदार्थबोधनशक्तिः, पदार्थानां संसर्गबोधनशक्तिरिति द्वयमेव ; न त्रयम् । न च पदबोध्यतादशायामेव पदार्थानां संसर्गबोधकत्वात् पदार्थगतसंसर्गबोधनशक्त्याधानशक्तिः पदेषु तृतीया कल्प्येति वाच्यम् ; त्वन्मते आप्तप्रोक्तपदानामेवान्विताभिधायकत्वात् पदेषु अन्विताभिधानशक्त्याविर्भाविका शक्तिराप्तेष्वेका हि प्रसज्यते । तत्र शक्तिकल्पनां विना आप्तोक्तत्वविशिष्टपदानामेवान्विताभिधानशक्तिरिष्यते चेत् ; अभिहितान्वयपक्षेऽपि पदबोध्यत्वविशिष्टार्थानामेवान्वयबोधनशक्तिमत्त्वमित्यस्तु इति तत्र कृतः परिहारप्रकारः । एवं वदन्नपि भाट्टभङ्गीं नाभ्युपजगाम । अभिहिताः पदार्था अन्वयं बोधयन्तीत्युक्ते शाब्दप्रमाकरणत्वमर्थेषु एषितव्यं स्यात् । न चार्थाः करणम् ; अतीतानाम-

नागतानां चार्थानां कारणत्वघटितकरणत्वायोगात् । अतः शब्दः प्रमाणमित्येव सर्वानुभवात् पदार्थस्मरणद्वारा पदानामेव समभिव्याहारमहिम्ना संसर्गबोध-रूपशाब्दबोधकरणत्वमिति अभिहितान्वयपक्षं प्रकारान्तरेण परिष्कृतवान् । तदप्यत्राभिमतं भवितुमर्हति ।

## शब्दे वेदान्तिमतम्

अन्विताभिधानमधस्ताद्वर्णितं यस्य, स शब्दस्तदनन्तरं न्यरूपि । मीमांसकमते शब्दो नित्यः । तार्किकमते च "संयोगाद् विभागाच्छब्दाच्च शब्दनिष्पत्तिः" इति कणादसूत्राद्युक्तरीत्या अनित्यः द्विक्षणमात्रावस्थायी । नित्यस्य शब्दस्य व्यञ्जकत्वेन मीमांसकादिभिः कथ्यमानं तार्किकैः कारण त्वेनैवेष्यते । इमे पुनर्वेदान्तिनः शब्दस्याकाशादिगुणत्वम, अत एवानित्यत्वम्, अथापि तार्किकरीत्या क्षणिकत्वे प्रमाणाभावात् अनेकसजातीयवर्णकल्पने गौरवाच्च आकाशोत्पत्तिसमन्तरमेव सर्वशब्दानामुत्पन्नत्वम्, आप्रलयावस्था-यित्वम्, अत एव ताल्वादिव्यापाराणां व्यञ्जकत्वम्, एवञ्च सजातीयानेक-कल्पने मानाभावात् गकारादिवर्णव्यक्तेरेकत्वं चाऽऽतिष्ठन्ते । एवंचोत्पत्त्यभि-व्यक्तिरूपार्थद्वयप्रतिपादकवचसां सामञ्जस्यमपि ।

## वेदनित्यत्वनिष्कर्षः

नन्वेवं सृष्टिकालारम्भप्रभृत्यवसानपर्यन्तं वर्णानां स्थायित्वेन वर्णनित्यत्वव्यपदेशो देवानाममरत्वव्यपदेशवत् वाय्वादेरमृतत्वव्यपदेशवच्च निर्वोढव्य इति अत्रैव ग्रन्थेऽभिप्रेततया वेदानुपूर्व्याः सृष्ट्यारम्भप्रभृति एकतयैव वेदनित्यत्वोपपत्तौ पूर्वानुपूर्वीसमानानुपूर्वीकत्वरूपं नित्यत्वमिति किमर्थमुक्तमिति चेत्—न ; प्रतिकल्पमुत्पद्यमानस्य प्रतिप्रलयं नश्यतश्च वेदस्य नित्यत्वं सर्वकालवृत्तित्वरूपं कथंकारं घटतामित्याशङ्कायाम्, प्रतिकल्पं वेदव्यक्तिभेदेऽपि आनुपूर्व्याः साम्यप्रयुक्तैव नित्यत्ववाचोयुक्तिरित्यभिधानात् ।

किञ्च वेदो नाम न वर्णमात्रम् ; किंतु आनुपूर्वीविशेषविशिष्टवर्ण-समुदायः । वेदघटकवर्णानां च आसृष्टेः स्थिततया एकवर्णानन्तरं वर्णान्तरो-त्पत्तिरित्यस्याभावेन वर्णेष्वानुपूर्वीरूपक्रमकल्पनायोगात् तद्व्यञ्जकोच्चारण एव क्रमस्य वक्तव्यत्वात् उच्चारणभेदेनानूपूर्वी भिद्यत इति पूर्वपूर्वोच्चारणानु-पूर्वीसमानानुपूर्वीकोच्चारणकत्वरूपनित्यत्वमेव वक्तव्यम् । आकल्पस्थायिवर्ण-कत्वमात्रेण नित्यत्वस्वीकारे तु कुमारसंभवादेरपि नित्यत्वापातः । अतः

अपूर्वानुपूर्वीकोच्चारणव्यङ्ग्यवर्णराशित्वं पूर्वानुपूर्वीनिरपेक्षोच्चारणव्यङ्ग्यवर्णराशित्वं वा अनित्यग्रन्थत्वम्; तद्भिन्नवर्णराशित्वमिह नित्यत्वमिति। "अत एव च नित्यत्वम्" इति सूत्रे चेदं विवक्षितम्।

अत्राधिकरणे अहङ्कारपरिणामत्वं शब्दस्य भाष्योक्तम्। उच्चारणादेर्व्यञ्जकत्वमस्वीकृत्य उत्पादकत्वमेवेष्टा तदा तदा वर्णोत्पत्तिं वायुपरिणामताञ्च स्वीकुर्वन्त्यन्य इत्यादिर्विशेषो न्यायसिद्धाञ्जनादवगन्तव्यः।

## श्रुतिलिङ्गादि

अथ पूर्वमीमांसातार्तीयाध्यायप्रमितं श्रुतिलिङ्गादि निरूपयितुमेकं प्रकरणम्। नूनं तत् नयप्रकाशिकाप्रतिज्ञातरीत्या मीमांसायामनधीतिनां तत्र व्युत्पत्तिसंपादनस्य कृते भवितुमर्हति। परं त्वधीतिनामपि उत्तरमीमांसाविषयेष्वसंकीर्णमुदाहरणं स्वबुद्धया सुग्रहं न भवेत्। गृहीतेऽपि वैयाकुल्या न निकर्षः स्यात। तदत्र ग्रन्थे तस्य तस्य शारीरकोदाहरणप्रदर्शनात् प्राज्ञानामपि भवत्येव बहुरुपकार इति भाव्यम्। अथ यथार्थख्यातिर्न्यरूपि, या प्रागेवात्र प्रत्यपादि।

## उपोद्घातविचारः

तत उपोद्घातनिर्णयादिकं सयूथ्यकलहेन प्रवृत्तम्। शारीरके उपक्रमे चतुःसूत्री चतुरधिकरण्यात्मा। तेष्वधिकरणेषु किं प्रथममेकमेव शास्त्रोपोद्घातः किं वा चत्वार्यपीति विवादः। अद्यत्वे चतुःसूत्र्या उपोद्घातत्वमेव सर्वे प्रतिपन्नाः। तदात्वे स्थितो विवाद इति अतोऽवसीयते। श्रीराममिश्राणामेतत्परमाचार्याणाम्, एतदाचार्याणां पितृपादानामात्रेयनाथसूरीणामेतदुपपादितया सरण्या प्रथमाधिकरणमात्रस्योपोद्घातत्वमेवाभिमतमिति मननीयं भवति। श्रीराममिश्रवचनान्युदाहृत्य तत्स्थापने प्रयत्यते चात्र। श्रीवरदनारायणभट्टारकवचनं न्यायसुदर्शनगतमनुभाष्य, 'नैतावता चतुःसूत्र्युपोद्घातत्वं साम्प्रदायिकं मन्तव्यम्; भगवद्भाष्यकारसूक्तिविरोधे सति तस्यार्थस्य तैरुपदेशप्राप्तत्वेऽपि सांप्रदायिकत्वासिद्धे'रित्याशयेन प्रत्युत्तरितमत्र। अन्यथा चतुःसूत्र्या इव प्रथमाध्यायाधिकरणानां सर्वेषामपि ब्रह्मपरत्वप्रामाण्याक्षेपपरत्वं तुल्यरीत्या सुवचमिति सर्वोऽप्युपोद्घातः स्यादिति प्रत्यवस्थीयते च। श्रीमन्निगमान्तमहादेशिकैरेषां पक्षमनूद्य चतुःसूत्र्युपोद्घातत्वे भूयसामनुमतिं

प्रदर्श्य, "अद्धा निर्धार्यतेऽतश्चतुरधिकरणी ब्रह्मचिन्तोपयुक्ता" इति सिद्धान्तः कृतः । परं भाष्यादिसूक्तीनां स्वपक्षानुकूलत्वमत्र प्रदर्श्यमानमुपपन्नं न भवतीति तैर्न व्यक्तमुक्तम्, नूनं विमर्शज्ञाः सिद्धान्तानुगुणं सर्वं निर्वोढुं प्रभवन्तीति विभाव्य ।

अत्रैतन्निरूपणसरणिः किञ्चित् परिशील्यते—'जन्माद्यधिकरणपूर्वपक्षे न तदारम्भाक्षेपः, अनेकब्रह्मपरत्वेनापि वेदप्रामाण्यात् तदारम्भोपपत्तेः । शास्त्रयोन्यधिकरणेऽपि नानारम्भशङ्का, उपासनपरवाक्यविचारारम्भाक्षेपासंभवात् । समन्वयाधिकरणेपि नोपासनादिविचारारम्भाक्षेपः' इति उत्तरसूत्राणामुपोद्घातत्वासंभव इहोपपादितः ।

अत्रेदं विमृश्यम्—एवंरीत्या तु प्रथमाधिकरणस्याप्यारम्भाक्षेपकत्वं न भवेत् । सिद्धवस्तुनि शब्दप्रामाण्यासंभवाद्धि हेतोः सिद्धरूपब्रह्मपरवेदान्तविचारानारम्भ उक्तः । वेदान्तस्य ब्रह्मोपासनरूपकार्यपरत्वसंभवान्न कार्यवाक्यार्थवादिदृष्ट्याप्यारम्भानुपपत्तिरिति हि प्रत्यवस्थानं संभवति । अतोऽत्र "अन्वारुह्योक्तिदैन्यं न हि सहत ऋजुः सूत्रकृद्बादरायणः" इति अधिकरणसारावल्युक्तमेवात्र समाधानम् । तत् अधिकरणचतुष्टयस्याप्यविशिष्टमिति तत्रैव व्यक्तम् ।

किञ्च नात्र वेदान्तानामप्रामाण्यादनारम्भः पूर्वपक्ष्यत इति संप्रतिपन्नम्; वेदप्रामाण्यस्य पूर्वमीमांसोपक्रम एव सिद्धेः । अत उपनिषदामूषरप्रायत्वात् पृथग्विचार्यार्थवत्त्वासंभवात् कर्मकाण्डशेषत्वमेव कर्तृस्वरूपनिरूपणादिपरत्वेनाभ्युपगम्य प्रामाण्यं समर्थनीयमिति पूर्वपक्षिणो हृदयम् । तत्र पूर्वकाण्डोक्तकर्मशेषत्वानर्हसिद्धब्रह्मप्रतिपादकत्वं सिद्धव्युत्पत्तिसंभवादिनात्र समर्थ्यते पृथक्प्रामाण्यनिर्वाहाय । तत्र द्वितीयमधिकरणं न ब्रह्मणो बहुत्वमेकत्वं वेति विचारार्थं प्रवृत्तम् । किंतु "यतो वै" इत्यादिवाक्यस्य लक्षणतो ब्रह्मप्रतिपत्तिकरत्वे सिद्धान्तिसंमतैकब्रह्मप्रतिपत्तिजननायोगात् अनेकब्रह्मपरत्वापत्तौ अनेकभूतस्रष्टृपालयित्रनेकसंहर्तृपरस्सहस्रप्रत्यक्षसिद्धजीवबृन्दपरत्वमेव वरमिति न पृथग्विचार्यत्वमस्ति कर्मकाण्डार्थवादतया पूर्वशेषत्वादित्येवमादिगमनिकाप्रदर्शनाय प्रवृत्तमिति आरम्भाक्षेप एव । शास्त्रयोनित्वाधिकरणमारम्भाक्षेपकमिति स्पष्टम् । तत्र ह्यनुमानेन ब्रह्मणोऽधिगतत्वात् किं शास्त्रेणेत्येवोच्यते । उपासनावाक्यविचारारम्भो नाक्षिप्यत इति चेत्; तावता तृतीयलक्षणान्तर्गतस्य तृतीयपादस्यारम्भविषयेऽनाक्षेपः सिध्येत् । ततः

पूर्वांशानामारम्भस्त्वाक्षिप्त एव। एवं हि प्रत्यक्षानुमानरूपप्रमाणान्तरावधृतजीवेश्वरानुवादरूपत्वात् सिद्धपरवाक्यविचारो नारभ्य इत्येव सिध्यति। अतः कार्यविधिशेषत्वं परित्यज्य सिद्धपरवाक्यानां विचारमैदम्पर्येण चिकीर्षूणां भगवतां भाष्यकृतां समन्वयाधिकरणान्तानि चत्वार्यधिकरणानि शास्त्रोपोद्घाततयैवाभिमतानि।

एवं तु शङ्क्यत—अधिकरणचतुष्टयस्याप्यारम्भाक्षेपकत्वसंभवेऽपि तावति तात्पर्यं मा भूत्। यथा पूर्वमीमांसायां प्राथमिकेनाधिकरणेनारम्भाक्षेपे शमिते, द्वैतीयीकमधिकरणं धर्मं लक्षणतः प्रतिपादयितुम्; अथ च तन्निमित्तपरीष्टौ प्रत्यक्षादेस्तत्रानवकाशनिरूपणेन वेदप्रमाणनिरूपणम्—तथा ब्रह्मजिज्ञासारम्भसमर्थनं जिज्ञासापदघटितसूत्रेणास्तु; उपरि ब्रह्मणो लक्षणविचारः; अथ तत्र प्रत्यक्षानुमानप्रमाणाभावेन शास्त्रैकप्रमाणकत्वमर्णनम्, शास्त्रस्यापि तत्परत्वायोगशङ्कापरिहारेण समन्वयप्रतिपादनं पश्चादिति।

अत्रोच्यते—आरम्भाक्षेपसंभवेऽपि तत्र तात्पर्यं मा भूदिति केयं राजाज्ञा? शास्त्रेण ब्रह्म लक्षणतः प्रतिपादयितुं न शक्यत इति पूर्वपक्षिणोक्ते, ततः किमिति सिद्धान्तिप्रश्ने पूर्वपक्षिणावश्यमेव वक्तव्यम्, यस्य यन्मूला स्वरूपावगतिर्न भवति, तस्य कथं तदादाय विचार आरभ्यत इति। अतः फलफलिभावविमर्शे आरम्भाक्षेपपर्यवसानात् तत्र तात्पर्याभावः कथम्? पूर्वमीमांसायामपि "चोदनालक्षणोऽर्थो धर्मः" इत्युक्ते कथमिदं चोदनालक्षणत्वमित्याक्षेपे यस्माच्चोदनातिरिक्तेन धर्मो न गम्यते, चोदनया च गम्यते, अतः प्रामाण्यस्याज्ञातज्ञापनरूपत्वात् चोदनालक्षणत्वमस्तीत्येवोपर्यधिकरणैरुपपादि। एवं चोदनाप्रमाणकत्वोक्त्या 'कथंलक्षणकः' इति प्रश्नसमाधानमुखेन, को धर्म इति स्वरूपप्रश्नोऽप्युत्तरितो भवतीति शास्त्रदीपिकायां द्वितीयाध्ययारम्भेऽभ्यधायि। तत्र को धर्मः कथंलक्षणकश्चेति प्रश्नो यदि वेदाध्ययनानन्तरं धर्मविचारप्रतिज्ञायां प्रथमसूत्रकृतायां तदाक्षेपरूपेण प्रवृत्तः स्यात्, तर्हि विचारानारम्भपर्यवसानं फलफलिभावशोधने पूर्वमीमांसायामपि भवत् ग्रन्थेऽनुक्तमपि कथं वार्येत? तर्हि ब्रह्मजिज्ञासानारम्भशङ्का प्रथमाध्यायव्यापिनी स्यादिति चेत्—सत्यम्; अथाप्यस्ति वैशेष्यम्, येन चतुस्सूत्रीमात्रे तदिष्टिः। तदुक्तमधिकरणसारावलौ—

"द्वाभ्यामादौ प्रतीतिप्रजननमुदितं सिद्धरूपे परस्मिन्
द्वाभ्यां वैफल्यशङ्का तदनु परिहृता शास्त्रतज्जन्यबुद्ध्योः" इति।

अयं भावः—सामान्यतः सिद्धवस्तुन एव शब्दतः प्रतिपत्त्यसंभवान्न ब्रह्मविचारः शक्य इति प्रथमाधिकरणे प्रत्यवस्थानम्। शब्दस्य सिद्धवस्तुबोधनक्षमत्वेऽपि लक्षणतः परब्रह्मप्रतिपादनासंभवात् स न शक्य इति द्वितीयाधिकरणे। भवन्त्यपि प्रतिपत्तिर्लौकिकप्रमाणजन्यप्रतीतिसमानेति शास्त्रविचारो वैफल्यान्न कार्य इति तृतीयाधिकरणे। अस्याः प्रतिपत्तेर्लोकाजन्यत्वेऽपि नैष्फल्यात् वेदस्यापि तज्जननपरत्वायोगान्न कर्तव्य इति तुरीयाधिकरणे। तत्र सिद्धवस्तुपरत्वं शब्दस्य न भवतीति प्रथममेव कथनेऽन्यदपि किञ्चित् कारणम्, यत् पूर्वमीमांसायामधीतिनः पूर्वमीमांसानन्तरमुत्तरमीमांसायां प्रवृत्तिं परिशीलयतः शङ्केयं समुन्मिषति। तत्र ह्यादौ धर्मलक्षणाधिकरण एव 'कार्यरूप एव वेदार्थः, न सिद्धरूपः; व्यवहारात् तत्राव्युत्पत्तेः' इति प्राभाकरैरुपपादनपूर्वकमधिकरणरचना कृतास्ति। तदिदं शास्त्रदीपिकायामप्यन्ववादि। अस्त्वेतत्। तत् सिद्धं चतुर्ष्वप्यधिकरणेष्वारम्भाक्षेपोऽस्तीति।

यत् पुनः ईक्षत्यधिकरणादिष्वपि स्यादयमिति; तन्न—वैषम्यात्। चतुर्णामधिकरणानामपि हि सामान्यतो वेदान्तवाक्यं सर्वं विषयः। द्वितीयाधिकरणे औचित्यात् तैत्तिरीयमात्रोदाहरणेऽपि वेदान्तवाक्यजातं न प्रतिपादयितुं शक्नोतीत्येव हि विवक्षितम्। एवं सर्वत्र। ईक्षत्यधिकरणादिषु तु तत्तद्वाक्यजातमात्रे विचारप्रवर्तनात् तत्तन्मात्रस्यान्यपरत्वकथनमात्रेण सर्वात्मना ब्रह्मविचारानारम्भ्यत्वस्य सहसा वक्तुमशक्यत्वात् तत्र तत्तात्पर्यपरित्यागः। किञ्च 'यत् कारणत्वलक्षणलक्षणीयं शास्त्रसिद्धम्, तत् प्रकृतिजीवतत्त्वयोरन्यतरदेवास्तु' इत्यक्षेप ईक्षत्यधिकरणादिषु प्रवर्त्यमानः कथं कारणभूतौपनिषदतत्त्वविचाररूपशास्त्रारम्भप्रतिक्षेपक एव। आरब्धेन शास्त्रेणायमेव निर्णयः कार्य इति ह्याक्षेप इति। तदिदं सर्वम् "औचित्यानेकभाष्यस्वरसगतिमती प्राक्तनी वर्तनीयम्" इत्यधिकरणसारावलौ औचित्यपदेन समग्राहि।

अन्यदप्यौचित्यम्—शास्त्रारम्भे विषयप्रयोजनसंबन्धाधिकारिरूपानुबन्धिचतुष्टयं प्रदर्श्यारम्भं साधयित्वा विवक्षितं वक्तव्यमिति सर्वग्रन्थकारसंमतमेतत्। तदत्र प्रथमेऽधिकरणे अधीतवेदपूर्वमीमांसमुमुक्षुरूपोऽधिकारी दर्श्यते; विषयो द्वितीये; प्रतिपाद्यप्रतिपादकभावः संबन्धस्तृतीये; प्रयोजनं तुर्य इति एतावद्दूरमवश्यमुपोद्घात इति। अथानेकभाष्यस्वरसोऽप्यस्तीत्युक्तम्।

तद्यथा—द्वितीयाधिकरणारम्भे, "किं पुनस्तद् ब्रह्म यज्जिज्ञास्यमुच्यते" इत्यत्र यत् जिज्ञास्यमित्यधिकभाषणं ब्रह्मस्वरूपनिरूपणस्याशक्यतया जिज्ञासा त्याज्येत्याक्षेपप्रदर्शनार्थमिति स्वरसगम्यम्। एवं तृतीयतुरीयाधिकरणयोरपि, 'शास्त्रं ब्रह्म न प्रतिपादयति' इति सामान्यतः शास्त्रं सर्वमेव गृहीत्वा आरम्भाक्षेपोऽवगमितः। अत्रानेकभाष्येत्यनेन कतिपयभाष्यस्वारस्यं पक्षान्तरेऽपि स्यान्नाम—औचित्यसंप्रदायानेकभाष्यरूपभूयोनुग्रहेणान्यस्य सुनिर्वहत्वात् चतुःसूत्र्या उपोद्घातत्वं साधीय इत्यदर्शि। शेषं टिप्पण्यामेव द्रष्टव्यम्। ग्रन्थकर्तृदर्शितानि भाष्यदीपसारवाक्यानि न चतुःसूत्र्युपोद्घातत्वपक्षप्रतिकूलानि लक्ष्यन्ते। प्रत्युत 'प्रतिपादनं स्थिरीक्रियते' 'प्रतिपादयन्त्येवेति जन्माद्यधिकरणत्रयेणोपपादितम्' इत्येवं भाषणेन प्रथमाधिकरणोपपादितप्रतिपत्तिभङ्गे ब्रह्मविषये प्रकारान्तरेण प्रसक्ते परिहारस्य कृतत्वज्ञापनात् तदधीनस्य आरम्भणीयत्वस्य स्थूणानिखननन्यायेन स्थापितत्वमेवावगम्यते। आरम्भस्थापनशेषतया लक्षणसंभवशास्त्रप्रमाणकत्वाद्युक्तावपि ब्रह्मणि जगत्कारणत्वादिसिद्धया, ब्रह्म कारणमेवेति, ब्रह्मैव कारणमिति च द्वितीयाधिकरणसिद्धमिति, तदुपपादनं पादत्रिपादीभ्यामिति च सुवचम्; उक्तं च तत् श्रुतप्रकाशिकायामिति। भाष्ये द्वितीयपादारम्भे "शास्त्रारम्भसिद्धये" इति पदनिर्वाहोऽपि तत्रैव द्रष्टव्यः।

## कालः

यथोपोद्घातविषये सगोत्रकलहः, तथा कालेऽपि। तत्र कालो न पृथग्द्रव्यमित्यदसीयः पक्षः। पृथगेवेति बहवः। 'भाष्यादिषु कालस्य द्रव्यत्वाद्युक्त्यदर्शनात् न पृथग्द्रव्यत्वम्। सूक्तिरस्ति चेत, अवश्यं शिरसोह्यते विषयः' इत्युक्त्वा प्रत्युत जैननिराकरणाधिकरणसूक्तिः कालरूपातिरिक्तद्रव्याभावे प्रामाणमिति निरूपयति। सा च सूक्तिः "कालस्य पदार्थविशेषणतयैव प्रतीतेस्तस्य पृथगस्तित्वनास्तित्वादयो न वक्तव्याः; न च परिहर्तव्याः। कालोऽस्ति, नास्तीति व्यवहारो व्यवहर्तॄणां जात्याद्यस्तित्वनास्तित्वव्यवहारतुल्यः" इति। एवम् "असंभवस्तु सतोऽनुपपत्तेः" इत्यत्र महदाद्यचेतनद्रव्यैः सह कालो न दर्शितः; अंशाधिकरणे जीवस्येव, अहिकुण्डलाधिकरणे प्रकृतेरिव च कालस्य ब्रह्मांशत्वं न कुत्रापि न्यरूपि। अतः कालो न पृथग्द्रव्यम्। अतः पृथिव्यादिर्देश एवादित्यसंयोगादिविशिष्टः, तद्देशगततत्संयुक्तत्वाद्यवस्था वा कालः। स्वधीनत्रिविधचेतनाचेतनेति चूर्णिकायां त्रैविध्यं चेतनमात्रान्वयि।

विष्णुपुराणादौ पृथक्कालकीर्तनम्, अव्यक्तापेक्षया व्यक्तस्य पृथक्कीर्तनवन्निर्वाह्यमिति अस्य मतम्।

अत्रेदं वक्तव्यम्—भगवतः प्रकृतिपुरुषात्मकरूपद्वयवत् "रूपान्तरं तद् द्विज कालसंज्ञम्" इति कालपार्थक्यं विस्पष्टमुक्तम्। "अनादिर्भगवान् कालो नान्तोऽस्य द्विज विद्यते" इति तस्य आद्यन्तरहितत्वभगवच्छरीरत्वयोश्च कथने विष्णुपुराणे जाग्रति, 'कालो नातिरिक्तं द्रव्यम्' इति यावत्कण्ठोक्त्या निषेधो भगवद्भाष्यकारश्रीसूक्तिषु न लक्ष्यते, तावत् तत्सद्भाव एव भाष्यादीष्ट इति स्वीकरणमेव वरम्। "सर्वे निमेषा जज्ञिरे" इत्यादिश्रुतिरपि दृश्यते। श्रुतिस्मृतिस्वरसगतिनिरोधेन तदुपजीविग्रन्थतात्पर्यवर्णनं चायुक्तम्। सूत्रकारेण कालानुक्तिस्तु नित्यविभूत्यनुक्तिवत् विस्पष्टविषये विचारणीयाभावात् तुल्यन्यायेन सिद्धिसंभवाच्च स्यात्। जैननिराकरणाधिकरणश्रीसूक्तितात्पर्यमेव तु विमृश्यम्। तस्यैतद्ग्रन्थकर्त्रभिमतोऽर्थस्तावत् जात्यादिवत् कालस्य पदार्थविशेषणतयैव प्रतीयमानस्य न पृथग्द्रव्यत्वमिति। अत्र सूक्तौ कालनिराकरणं न प्रतीयते। किं तु 'कालस्यास्तित्वनास्तित्वादिकं पृथक् न वक्तव्यं जैनादिभिः, विशेष्यापेक्षया विशेषणस्य तत्पृथक्कथनमनपेक्षितम् जात्यादेरिव' इत्येवोक्तं दृश्यते इति स्वयमेवोद्भाव्य, जात्यादीनां विशेषणानामपि धर्मिगतास्तित्वनास्तित्वातिरिक्तास्तित्वनास्तित्वाद्यभावः सर्वथा दुर्वच इत्युपपाद्य स्वाभिमत एव भाष्यार्थ इति चात्र ग्रन्थे विवृतम्।

'अस्य भाष्यग्रन्थस्य कालद्रव्यनिषेधे न तात्पर्यम्, शास्त्रस्वग्रन्थान्तरसंप्रदायविरोधात्। किं तु कालस्य विशेषणतया सर्वलोकप्रतीतस्य बौद्धादिभिर्नास्तित्वं न वक्तुं शक्यम्। न वा जैनादिभिस्तस्यास्तित्वं पृथक् स्थापनीयम्। पदार्थैः सह तस्यापि सिद्धेः' इत्येव तात्पर्यमिति सर्वार्थसिद्धिर्दर्शयतीति टिप्पण्यामीषत् प्रदर्शितमप्यत्रानुसंधेयम्। अत्र बौद्धादिभिरिति आदिना जैनस्यापि ग्रहणम्। न्यायसिद्धाञ्जनेऽपि भाष्यसूक्तिरनूदिता। अतः श्रीमन्निगमान्तमहादेशिकैरेतद्ग्रन्थ आलोडितः, विस्तरानादरेण प्रतिविहितश्चेति ज्ञायते। अथात्र किञ्चिद्विशदीक्रियते—'अस्तित्वनास्तित्वादयो न वक्तव्याः, न च परिहर्तव्याः' इत्यंशस्तावदत्रावधानमर्हति। अस्तित्वनास्तित्वादिकं पदार्थान्तराणामिव कालस्यापि विषये सप्तभङ्गीवादिभिर्जैनैरुक्तम्। पदार्थानां तादृशमनैकान्त्यं न भवतीत्यस्माभिः परिहर्तव्यम्। कालविषये तैस्तत् पृथक् न वक्तव्यम्; अस्माभिरपि तत एव न पृथक् तत्परिहारयत्नो

विधेयः; कालस्य पदार्थविशेषणतयैव प्रतीयमानत्वात् अस्तित्वनास्तित्वादेः पदार्थेऽन्वयं विना विशेषणेऽत्रान्वयाप्रतीतेः । तत्रास्तित्वनास्तित्वयोरेकत्र विरोधेऽत्रापि तद्विरोधोऽनक्षरमेवोक्तो भवतीति खल्वेतदर्थः । अत्रास्तित्ववत् नास्तित्वमपि गृहीतमस्ति । पृथगस्तित्वं न वक्तव्यमित्येतावता कालो न पृथगिति सिद्ध्येदिति चेत्—पृथङ् नास्तित्वं न वक्तव्यमित्यपि ह्युक्तम् । तेन पृथग्द्रव्यत्वं परं किं न सिध्येत्? परिहारो न कर्तव्य इत्युक्त्या च पुनः क्षोभ एव स्यात् । अतोऽस्यायमर्थः—कालस्य पृथगस्तित्वनास्तित्वादिवचनतत्परिहारौ नावकाशं लभेते; कालस्य पदार्थविशेषणतैकस्वभावत्वात् । जैनैर्हि "जीवाजीवात्मकं जगदेतन्निरीश्वरम्; तच्च षड्द्रव्यात्मकम्" इति वदद्भिः ज्ञानादिजीवगुणानां पुद्गलाश्रितगन्धवर्णादिगुणजात्यादीनां जगदन्तर्गतानां पृथग्विभागो नाकारि । तत् कस्मात्? तेषां द्रव्यविशेषणतया प्रतीयमानानां पृथगस्तित्वनास्तित्वादि न कण्ठतो वक्तव्यम् । सत्यपि तत्र गुणविषये द्रव्यविषये च तद्वैषम्ये यथायथं स्वयमेव सर्वं सुगममित्यत एव हि । एवञ्च कालस्यापि तथैव प्रतीयमानस्य तत्त्वे सति तद्विषये परं किमिति तद्वर्णनम्? तत् त्यज्यतामेतद्वर्णनम् । वयमपि न तत्परिहरणे प्रयतेमहि । पृथगेतद्विषये परिहरणस्यास्माभिः कृतत्वात् जात्यादिविषयेऽनैकान्त्यमस्मदिष्टमिति न मन्तव्यम् । यत्रानैकान्त्यं युष्मदुक्तम्, तत्रैव तत्परिहारस्य प्रसक्तत्वात् । त्यज्यतां काले तद्वर्णनम्; वयमपि जोषं भवेमेति । एवं च भाष्यमिदम्, 'कालस्याप्यनैकान्त्याभावः पदार्थवदेव मन्तव्यः । स च कालो विशेषणतयैव प्रतीयमानत्वादनपलप्यः' इत्येतावदेव ज्ञापयेत् ।

## कालस्याद्रव्यत्वाद्यसिद्धिः

न च विशेषणतयैव प्रतीतिकथनमात्रेणाद्रव्यत्वं सिध्येत्; प्रभायाः धर्मभूतज्ञानस्य च विशेषणतैकस्वभावत्वेऽपि द्रव्यत्वविकारित्वादेः संप्रतिपन्नत्वात् । विशेषणतैकस्वभावस्य विशेष्येण सहैव नियतप्रतीतितदभावौ एकसामग्रीवेद्यत्वतदभावप्रयुक्तौ । यदि पृथगस्तित्वनास्तित्ववचनाद्यसंभवभाषणमात्रेण कालस्य क्लृप्तपदार्थान्तर्भाव एवेष्टः, तर्हि तुल्यन्यायात् जातिगुणादीनामपि क्लृप्तान्तर्भाव एवेष्टः स्यात् । अतस्तेषां धर्मिमात्रत्वापातः । प्रत्युतात्र भाष्ये, "कालोऽस्ति नास्तीति व्यवहारो व्यवहर्तॄणां जात्याद्यस्तित्वनास्तित्वव्यवहारतुल्यः" इत्यनेन जातिगुणादीनां दृष्टान्तीकरणात् जात्याद्यपेक्षया कालस्य भिन्नत्वमेव प्रतीयते । विशेषणतैकस्वभावत्वकथनाच्च पृथिव्यादिरूपातत्स्वभाववस्त्वन्यत्वमपि

प्रतीयते । अतो वस्त्वन्तरत्वसिद्धिः । अत्र पूर्ववाक्ये अस्तित्वनास्तित्वादीति आदिपदप्रयोगात् जैनोक्ता सप्तभङ्गी विवक्षिता । तत्रास्तित्वं नास्तित्वमिति द्वयातिरिक्तं न कुत्राप्यानुभविकमिति ज्ञापनाय, "अस्तिनास्तीति व्यवहारो व्यवहर्तॄणाम्" इति द्वयमेव सोपस्करमुपरि गृहीतम् । अतो विशेषणतयैव कालप्रतीतिसाधकमिदं भाष्यं कालरूपद्रव्यान्तरवारकं कथंकारं भवितुमर्हति ?

नतु सिद्धान्ते उत्पत्तिप्रध्वंसौ अवस्थाविशेषौ इत्यङ्गीकृतम् । सत्त्वासत्त्वे अप्येवं भवेताम्, असदेवेदमित्यादौ तद्दर्शनात् । तत्र जात्यादेरवस्थावत्त्वाभावात् पृथक्सत्त्वासत्त्वे यथा न स्तः, तथा कालेऽपीत्युक्तौ कालस्याद्रव्यत्वसिद्धिरिति चेत्—न; तर्हि यथा जातेराकृतिरूपाया अस्मन्मते अवस्थारूपता, तथा कालः कस्य द्रव्यस्यावस्था स्यात् ? ननु लोकप्रसिद्धा तत्तदवस्थैव केनचिदुपाधिना कालत्वेन व्यवह्रियत इति तदाशय इति चेत्—न; कलाकाष्ठादेर्द्रव्यावस्थारूपत्वस्यानानुभविकत्वात् । द्रव्यं प्रतीव अद्रव्यभूतपदार्थं प्रत्यपि विशेषणतया कालस्य प्रतीयमानत्वात् तस्य विलक्षणत्वसिद्धेः । किं च सत्त्वादिकमनेकप्रकारं भवितुमर्हति ॥ भवतु; किमर्थं विशेषणतया प्रतीतिवर्णनमिति चेत्—उक्तमेव, पृथगनैकान्त्यवर्णनं निरासो वा न कार्य इति ज्ञापनार्थमिति । अन्यच्च ध्वनितमुक्तं श्रुतप्रकाशिकायाम्, "अनेन कालस्याणुत्वनिराकरणं फलितम्" इति । सर्वपदार्थविशेषणतया प्रतीयमानस्यास्य जैनैरणुत्वकथनं न घटते, किंतु विभुत्वमेवेति ज्ञापयदिदं भाष्यं कालस्य विभुद्रव्यत्वं साधयेदपि । अत्र च 'अभूद् भवति भविष्यति' इति प्रतीतिषु वस्तुनो वर्तमानत्वावर्तमानत्वे प्रतीयेते । तत्र तत्र कस्यचित् कालस्य प्रतीयमानत्वात् कालस्य प्रामाणिकत्वमपि सिद्धम् । अतः कालस्य नास्तित्वं न केनापि सुवचमिति च श्रुतप्रकाशिकायामुक्तम् । अनेककालकल्पनं विना एकेनैव निर्वाहसंभवात् विभुरेकः काल इति च तत्र दर्शितम् । क्षणलवादिरूपेण कालद्रव्यपरिणामे स परिणामोऽपि विभु, सर्वपदार्थविशेषणत्वादिति च न्यायसिद्धाञ्जनादावुक्तादि । महाप्रलये युगसंवत्सरादिगणना प्रामाणिकी । सा सूर्यगत्याद्युपाधिभिर्दुरुपपादा । कालद्रव्यस्य क्षणरूपेण परिणामे सुनिर्वहमेतत् । "सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि" इति वाक्यहृदयं तैत्तिरीयोपनिषद्भाष्यपरिष्कारे अस्मदीये द्रष्टव्यम् । अस्त्विदम्; विशेषणभूते काले नास्तित्वान्वयो भाष्योक्तः कथम्; अभूत्, भविष्यतीत्यादौ तदप्रतीतेरिति चेत्—अतीतवस्तु इदानीं नास्ति इत्यादौ वस्तुनीव अतीतत्वादिरूपकालेऽपि जात्यादाविव नास्तित्वान्वयः ।

वस्तुतः काले पृथक् अस्तित्वादि न वक्तव्यम् । कालसंबन्धरूपास्तित्वस्य काले साक्षात् कथनायोगादित्यपि भाव्यम् । वादिसिंहकृते अर्चिरादिग्रन्थे प्रकृतिपुरुषवत् कालस्य प्रस्तावो न कृत इत्येतावन्मात्रेण कालद्रव्यस्य पार्थक्यं निषिद्धं न भवेत् ।

अपिचात्र तर्कपादे युक्त्या परमतं निराक्रियते; न तु श्रुतिप्रदर्शनेन तद्विरोधान्निराकरणं वा तन्मूलं वस्तुस्थापनं वा क्रियते । अतो भगवद्भाष्यकारैरत्र कालस्य श्रुतिस्मृत्यादिसिद्धद्रव्यविशेषत्वस्थापनप्रसक्त्यभावात् तन्न कृतम् । लोकानुभवानुरोधेन यद्रूपेण कालः सिध्येत्, तदधिकस्य तद्विरुद्धगुणत्वानैकान्त्यादिरूपस्य चांशस्य साधकं लौकिकं प्रमाणमपि नास्तीत्येतावदिह विवक्षितमिति ध्येयम् ॥

## प्रमाणनिरूपणम्

प्रत्यक्षानुमानशब्दरूपप्रमाणत्रयमेव भगवद्भाष्यकारमतमिति प्राचां पन्थाः । ततोऽपसरन्नयं कालपार्थक्य इव तत्र प्रमाणान्तरान्तर्भावे अतृप्यन् प्राभाकरवत् पाञ्चविध्यं प्रत्येति । एवं प्रमाणपञ्चकपरिगणना भगवद्भाष्यकारकालसमीपकालवर्ति विष्णवार्यविरचितग्रन्थेऽपि लक्ष्यत इति नयप्रकाशिकायामनेन (१३४२ पुटे) प्राकाशि ।

## केवलव्यतिरेकिविचारः

केवलव्यतिरेक्यपि भगवद्भाष्यकारेणेष्यत इत्ययमाह । श्रीभगवद्यामुनमुनिभिरेव आत्मसिद्धौ तदसंभवः प्रपञ्चितः । अतो भाष्यस्य तात्पर्यान्तरवर्णनेन परमाचार्यैकरस्यसंपादनेन केवलव्यतिरेकि नेच्छन्ति परे । तदनङ्गीकारे लक्षणनिर्वाहो न संभवतीत्येतन्मतम् । इदमेवाशङ्क्य परिहृतं श्रीदेशिकचरणैः स्वग्रन्थेषु । अत्र च तत्त्वमुक्ताकलापे जीवसरस्य २७७, २७८, २७९ श्लोका द्रष्टव्याः । एवं न्यायपरिशुद्धावपि । अस्माभिश्च वैशेषिकदर्शनवृत्तौ वैशेषिकरसायने कणादमहर्षिमते केवलव्यतिरेकिण एष्टव्यता नेति तृतीयेऽध्याये वायुप्रकरणे च प्रादर्शि ।

## शब्दप्रमाणेऽपि विशेषः

शब्दप्रमाणं च शास्त्रं वेदः । पौरुषेयवाक्यानि तु अनुमानविधया प्रमाणानीति प्राभाकरसरणिरस्य; यामन्ये विशिष्टाद्वैतिनो नानुमन्यन्ते । परंतु प्राभाकरवैलक्षण्यं सिद्धपरवाक्येऽपि बोधस्वीकारात् ।

## अधिकप्रमाणस्वीकारविमर्शः

उपमानार्थापत्ती तु द्वे अधिके प्रमाणे पूर्वमीमांसकोक्ते तच्छाययैव स्वीकृते भगवद्भाष्यकारैरिष्टे स्यातामित्येतावन्मात्रेण । न तत्र प्रमाणान्तरत्वसाधिका युक्तिः प्रादर्शि । प्रमाणान्तरत्वस्थापकं भाष्यं तुषमात्रमपि न लक्ष्यते । प्रागेव तत्र नैयायिकानुमतोपमानमार्गन्यक्कारेण मीमांसकोक्तस्वीकारे । केवलं सूत्रैकशास्त्र्यमनुरुध्य व्याख्यातृषु आस्माकीनत्वाभिसंधिः कारणम् । गोसादृश्यस्य गवये प्रत्यक्षानुभवे सति गवि गोसादृश्यग्रहणमर्थसिद्धमानुमानिकं चेति किं न मन्येत । अर्थापत्तावपि देवदत्तो जीवन् गृहे नास्तीत्यत्र जीवस्त्वसंदेहश्चेत्, बहिःसत्त्वेऽपि संदेह एव । यदि तु जीवनकाले नियमेन गृह एव दृष्टत्वात् जीवनगृहसत्त्वयोर्व्याप्यव्यापकभावसंदेहप्रयुक्तो जीवनसंदेहः, तर्हि बहिःसतोऽपि जीवनस्यान्यपुरुषे दर्शनात् जीवनगृहसत्त्वयोर्व्याप्यव्यापकभावभङ्गे विहिते तन्मूलजीवनसंदेहव्यपायात् प्रकारान्तरेण जीवनसंदेहसामग्र्यभावे जीवनविशिष्टगृहासत्त्वेन बहिःसत्त्वस्यानुमानमिति सुवचम् । सर्वथासंदेहे त्वर्थापत्त्या कल्पनमप्यशक्यमेवेत्यादि भाव्यम् । 'प्रत्यक्षमनुमानं च शास्त्रं च त्रिविधागमम्' इति प्रमाणानुरोधेनापि प्रमाणत्रित्वमेव सांप्रदायिकं विशिष्टाद्वैतिनाम् । अन्यथा हि "योग्यानुपलब्ध्यैवाभावः समर्थित इत्युपशाम्यतु भवान्" इति जिज्ञासाधिकरणभाष्यादि दृष्ट्वा अनुपलब्धिरपि मानान्तरमेवेष्यताम् । एकस्यैव विधिरूपेण बोधनेऽन्यत् प्रामाणम्, निषेधमुखेन गमने तु मानान्तरमित्याद्युच्येत । तत्रान्यतात्पर्यकल्पने तु औचित्यात् प्रमाणत्रित्वमेव युक्तम् । अत एवोक्तयोग्यानुपलब्धिप्रस्तावाव्यवहितपूर्वमपि भाष्ये प्रत्यक्षानुमानशब्दमात्रनिर्देशः; न त्वर्थापत्त्यादेः । अत्र विषये अस्मदीया परमार्थप्रकाशिकापि द्रष्टव्या ।

## भेदकप्रमाणोदाहरणविमर्शः

(२०९ पु.) अयमभ्यासरूपभेदकप्रमाणस्योदाहरणतयान्तर्यामिब्राह्मणं प्रदर्शयति । तत्र, "एष त आत्माऽन्तर्याम्यमृतः" इति अभ्यासाद् भेद इत्याह । परंतु सद्विद्यायामपि "ऐतदात्म्यमिदं सर्वं तत् सत्यं स आत्मा तत्त्वमसि" इत्यभ्यासोऽस्ति । एवमपि तत्र विवेक्यमेवेष्टम् । यद्यपि सुबालोपनिषदि ईदृशस्थले भेद इष्यते, अथापि तत्र "सर्वभूतान्तरात्मा दिव्यो देवः" इत्युक्तस्यैव सर्वान्तरात्मत्वस्य क्वचिदुपास्याकारत्वेनेष्टस्यात्रापि स्वीकारेण तदुपपादनमेवेदं तत्र तत्र श्रुताविषद्धदेनेति किं न वक्तुं शक्यमिति विवेचनीयम् । एवं

संख्याप्रकरणान्तरादावपि उदाहरणसौष्ठवमवधाय विमृष्टव्यम् । नामातिदेशोदाहरणपरश्च आनन्दमयविद्यातोऽनिर्देशं सत्यत्वादिस्वरूपनिरूपकधर्माणां विद्यान्तरेषु आशङ्कापरिहारपूर्वकं स्थापयति । "इतरे त्वर्थसामान्यात्" इति सूत्रे धर्मिसामान्यात् धर्मितुल्यत्वात् धर्मिप्रतीतौ तदविशेषं नियमेन प्रत्येतव्यत्वात् सत्यत्वादीनामुपसंहार इत्युक्तम्, न पुनर्नामैक्येनातिदेश इत्युक्तम् । यथा सत्यत्वादीनां स्वरूपनिरूपकधर्मत्वावसाय औचित्यात्, तथा तेषां सर्वानुवर्तित्वमपि स्वरूपनिरूपकत्वादेव, न तु नामश्रवणात् । अतोऽत्र प्रकृतिविकृतिभावाप्रसक्तेरतिदेशवचनमपि न मुख्यं भवितुमर्हति ।

## प्रमेये अचेतनत्रैविध्याभावविमर्शः

"स्वधीनत्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदम्" इति चूर्णिकादर्शितरीत्या चेतन इवाचेतनेऽपि त्रैविध्यं साम्प्रदायिकसंप्रतिपन्नमद्यत्वे । अयं पुनर्ग्रन्थकारोऽचेतने त्रैविध्यान्वयमनिच्छन् प्रकृतिनित्यविभूतिरूपेण द्वैविध्यमेवाचेतने स्वीकरोति । तदिदं कालस्य पृथग्द्रव्यतायाः प्रागेव निषेधादुदितमेव ।

## एकोनविंशतिसंख्याविमर्शः

प्रकृतिप्राकृतगणनायां च "चतुर्विंशतिसंख्यातमव्यक्तम्" इति एतदुदाहृतजामन्त्राधिकरणभाष्यदर्शितश्रुतिवाक्यतोऽप्यवसीयते । तथैवाद्यत्वे सर्वे मन्यन्ते । परमयमेकोनविंशतिधैव गणयत्यत्र । तथा नयप्रकाशिकायामपि । तन्मात्राणि पञ्च न गण्यन्ते ।

"महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥"

इति गीतोक्तास्तावत् गोचराः शब्दादयो गुणा एवेति सत्त्वरजस्तमोगुणा इव नेह द्रव्यसंख्याने सह संख्येया भवन्तीत्येतदाशयः । श्रुत्यादिषु तन्मात्राण्यपि श्रूयन्ते, यथा "तन्मात्राणि भूतादौ लीयन्ते" इति सुबालोपनिषदादौ । तत्र श्रीश्रुतप्रकाशिकाचार्यभाष्यादौ विस्तरेण तत्प्रकरणार्थो वर्णितोऽस्तीत्यलमत्रातिविवेकेन ।

## एतन्मतं श्रीतत्त्वम्

श्रियः किं त्रिविधचेतनान्तर्गते नित्यविभागेऽन्तर्भावः, किं वा ईश्वरकोटौ प्रवेश इति विचिकित्सामूलो विचारश्चैतद्ग्रन्थेऽपि लक्ष्यते ।

जीवकोटावन्तर्भावं नित्यविशेषत्वमेव चैष संमन्यते । "यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम" इति विष्णुपुराणे(१-८ १७)विष्णुसाम्यस्य लक्ष्म्यामतिदेशात्, उपदेशस्थलादतिदेशस्थले न्यूनतायाः यथा चन्द्रस्तथामुखमित्यादौ संप्रतिपन्नतया, न्यूनत्वमेवेत्र लक्ष्मीः । अस्याः सर्वशरीरित्वमपि नास्ति । मातृत्वमप्यस्याः विष्णुपत्नीत्वप्रयुक्तं सर्वपत्नीसाधारणम् । मातृत्वपितृत्वादिकं सर्वं भगवत एव । "पिताऽहमस्य जगतो माता धाता पितामहः" इति चागायि । तदपि पितृत्वमातृत्वादिकं भगवति, लोके तत्तत्प्रजानिरूपितपितृत्वमातृत्वाश्रयचेतनविशेषान्तर्यामितानिबन्धनमेव । तदप्यस्या न भवति, सर्वशरीरित्वाभावात् । एवंभूतायाः पुरुषकारत्वादिकं भगवता स्वयमभिमानेन विश्राणितं वैभवम्, विष्वक्सेने विन्यस्तसमस्तात्मैश्वर्यवत् । अस्या अपि धर्मभूतज्ञानविभुत्वप्रयुक्तैव सर्वव्याप्तिरित्येतदुपपादनभङ्गी ।

## चतुःश्लोकीभाष्योक्तम्

अस्याः श्रियो विषये अणुत्वम्, अत एव जीवकोटिप्रवेशं चैतद्देश्याः केचिदभिप्रयन्ति । विभुत्वमेव परे । तत्र कतिपये अणुचेतनत्वरूपं जीवलक्षणमुपेक्ष्य परतन्त्रचेतनत्वमिति लक्षणकथनेन जीवकोटिप्रवेशं समर्थयन्ते । विभ्वी परतन्त्रा चेयं पतिपुत्रव्यावृत्तपत्नीन्यायेन जीवेश्वरकोटिविलक्षणेत्यपरे । विभूतिद्वयशेषित्वमीश्वरलक्षणमिति व्युत्पाद्य विभ्व्या अस्या ईश्वरकोटिप्रवेशमितरे । एतेषु चतुर्ष्वपि पक्षेषु पत्यावैश्वर्यविश्रमः । स्वतन्त्रपतिनित्येच्छासिद्धं पुनरस्याः सर्वमैश्वर्यम् । अन्ये पुनः सर्वभूतेश्वरत्वादिवचनसाम्यादस्याः पतिपारतन्त्र्यमुभयेच्छाप्रयुक्तमिति प्रतिपादयन्ति । चतुःश्लोकीभाष्ये च श्रीदेशिकचरणैरिमान् पक्षान् उपन्यस्योपादेशि,—

> "पक्षस्त्वेतेषु पक्षेषु कश्चिदेकः प्रमाणवान् ।
> सलक्ष्मीकस्य साम्राज्यं सर्वथा सुप्रतिष्ठितम् ॥
> इहैवं क्वचिदंशे तु संशयेऽपि विपश्चिताम् ।
> उपयुक्तांशवैशद्यादुपायफलसंभवः ॥"

इति । तत्त्वत्रयाधिकारादौ च पञ्चमे पक्षे स्वयमादरः प्रादर्शि ।

## न्यायसिद्धाञ्जनोक्तम्

न्यायसिद्धाञ्जने चेश्वरपरिच्छेदे—श्रियः श्रियःपतेश्च "ज्ञानानन्दाद्यत्यन्तसाम्यात् जगज्जनकत्वशेषित्वशरण्यत्वप्राप्यत्वादिसाम्याच्च साम्यगिरः

निर्वाहो व्यक्तः । एकत्ववादा अप्येवं द्वन्द्वरूपेणात्यन्तसमतया प्रकारैक्येन समस्तात्महविः प्रति उद्देश्यैकदेवतात्वादिविषेण वा निर्वाह्याः" इत्यादिना जगत्कारणत्वोपायत्वादिकं स्वाभिमतं स्पष्टमदर्शि श्रीदेशिकचरणैः ।

## श्रीविष्णुपुराणगतः

"पुंनामा भगवान् हरिः । स्त्रीनाम्नी लक्ष्मीर्मैत्रेय नानयोर्विद्यते परम्" इति श्रीविष्णुपुराणे नामभेदमात्रकृतो विभाग इत्यवगमादविशेष उभयोरिष्टः प्रतीयते । एवमत्र 'नानयोः'इति वाक्यस्य अनयोर्मध्ये परम् उत्कृष्टमेकं न विद्यते इत्यर्थाभिधायकतया तौल्यमेव दम्पत्योर्विज्ञायते । न हि आभ्यामन्यत् पर नास्तीत्येतादृशार्थप्रसक्तिरिहास्ति; उदक्षरत्वात् । एवमर्थवर्णनेऽपि एनयोर्मध्ये यत् परम, ततः परमन्यन्नास्तीति वक्तव्ये उभौ युगपद् गृहीत्वा आभ्यां परं नास्तीति वचनमेनयोः परत्वं तुल्यरूपमिति दर्शयेदेव ।

उपदेशस्थलादतिदेशस्थलस्य न्यूनत्वं यदत्र ग्रन्थे निरदेशि, नूनमिदमेव वा एतदनुरूपैकदेशिकथितं वा श्रीमति रहस्यत्रयसारे तत्रानूद्य तात्पर्यमदर्शि, "अत्र दण्डधरत्वं पुरुषकारत्वादयश्च भगवतो लक्ष्म्याश्च स्वकीयतया विभक्ता व्यापाराः । 'उपदिश्यमानधर्माधारापेक्षया अतिदिश्यमानधर्माधारस्य विशेषः (वैषम्यं) स्वतः प्राप्तः' इति मध्यस्थैरपि एवं विभागप्रयुक्ते वैषम्ये तात्पर्यम् । इदं 'युवत्वादौ तुल्येऽपि' इति श्लोके निर्णीतम" इति ।

## विष्णुचित्तीयम्

अतिदेशवचनं तावत्, "यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम", "नित्यं तद्धर्मधर्मिणी' इत्यादि । तत्र प्रथमवचनव्याख्याने श्रीविष्णुचित्तीये सर्वांशातिदेशाभिप्रायेण, "सर्वगतो विष्णुः यथा—यत्स्वभावः, इयमपि तथा—तत्स्वभावेति सर्वगतत्वसत्यज्ञानादिस्वरूपकल्याणगुणादीनामतिदेशः" इति प्रथमं व्याख्याय, पश्चात् स्वरसगतिमनुरुध्य, "अथवा भगवान् विभुत्वेन सर्वगतः; इयं च सर्वगता" इति व्याख्यायि । "यो लोकत्रयमाविश्य" इत्यादाविव व्याप्तिवचनमिदं, व्याप्तेर्नियमनार्थतया नियमनस्यापि प्रतिपादकम । अत एव 'यथा सर्वगतः' इति वाक्यस्य उभयोरैकाभिप्रायतापरत्वं सिद्धोपायशोधनाधिकारेऽभिमतमासीत् । "अर्थो विष्णुरियं वाणी" इत्यादीन्युपरितनानि वचनानि अस्यार्थस्योपपादनाय प्रवृत्तानीति चक्षुष्मतां सुदर्शम् । इदमपि व्याख्याने प्रादर्शि, "तयोः सर्वात्मकत्वम्, अनपायित्वं चोपपादयति अर्थ इति" इत्यवतरणमुखेन ।

## तदर्थविमर्शः

तत्र प्रघट्टके स्त्रीलिङ्गनिर्दिष्टानामियमात्मा, पुंलिङ्गनिर्दिष्टानां भगवानात्मेति प्रतिपन्नम् । न केवलमेतत्; एकमेव वस्तु पुंलिङ्गेन निर्दिश्य भगवदात्मकम्, स्त्रीलिङ्गेन निर्दिश्य लक्ष्म्यात्मकं चावाचि । यथा "नीतिरेषा नयो हरिः" इत्यादि । अत्राप्यर्थभेद एवेति चेत्, काममत्र प्रयतयताम् । यावदुक्तपदार्थनिरूपितमात्मत्वं तावत् श्रिय एष्टव्यम्, आनुरूप्यात् । इदं चात्मत्वं शेषित्वाभावे कथं स्यादिति शेषित्वम्, तदविनाभूतमाधारत्वं नियन्तृत्वं च निर्विचिकित्समभ्युपेत्यम् । यदा तु शब्दभेदमात्रेणैष विभागः, शोधने तु सर्वात्मत्वमेवोभयोरनयोर्भङ्ग्या निरूपयिष्यत इति विमृश्यते, तदा सर्वशेषित्वमपि सुस्थम् । नूनं शरीरवाचकानां शब्दानां शरीरिपर्यन्तत्वात् दिव्यदम्पत्योश्चाविशेषेण सर्वशरीरित्वात् तत्र शब्दोपात्तपुंस्त्वस्त्रीत्वैकत्वान्वयानुकूलं दम्पत्योरेकतरस्य शब्दतो विवक्षितत्वमस्तु । अन्यतरलाभस्तु तयोर्गाढोपगूढत्वादार्थिकः स्यादवश्यमपेक्षायाम्' इति बोधयितुमेवं विभागेन भाव्यमित्यप्यालोचनीयं भवति । एवंच भगवद्विशेषमियमप्याराध्यापि भवतीत्याद्यन्यदेतत् । एवं स्त्रीणां तदभिमन्यमानत्वं वस्तुतः पुंसां भगवदभिमन्यमानत्वं च तत्र तत्र स्त्रीत्वपुंस्त्वप्रयुक्तप्रदिमस्वातन्त्र्यादिगुणजातसंपत्त्यर्थमित्यपि स्यात् । तथा चोपरि विष्णुपुराणग्रन्थे विभागप्रदर्शनात् तदनुरोधेन श्रीदेशिकचरणैर्मध्यस्थवचनस्य विभागविषयकत्वतात्पर्यं वर्णितम् । अत्र मध्यस्था इत्युक्त्या त एवं वक्तारः संप्रति एतद्देशप्रसिद्धस्वसंबन्धिश्रीवैष्णवसंप्रदायैकदेशिसंप्रदायोभयसंबन्धिगुरुपरम्पराद्वयेऽप्यनिविष्टा इति विवक्षितमिव । स्वरूपरूपादिषु एनयोरतिगाढः संश्लेषविशेषश्च, "व्यापकावतिसंश्लेषादेकतत्त्वमिवोदितौ" इति प्रमाणसिद्धः श्रीदेशिकचरणै ख्यापितः । अयमतिसंश्लेष एव नित्यसूरिनिवहापेक्षया अस्या वैलक्षण्योपयोगि विभुत्वं व्यनक्ति । "सर्वाणि तान्याहुः स्वैरनुरूपरूपविभवैर्गाढोपगूढानि ते" इति इदमदर्शि श्रीभगवद्यामुनमुनिभिः । श्रुतिष्वेकतत्त्वतया व्यवहारः अत्यन्तावैलक्षण्यप्रयुक्त इति खल्वत्र "एकतत्त्वमिवोदितौ" इत्यनेन प्रत्यबोधि ।

## उपदेशातिदेशवैषम्यविचारः

उपदेशादतिदेशे वैषम्यमितीदमपि तावद्विमर्शमर्हति । उपमानापेक्षयोपमेये आधिक्यसद्भावेऽपि, 'यथातथा' प्रयोगो दृश्यते । 'इन्दुवद्भ्राजति सविता' इति हि प्रयुक्तम् । 'समुद्र इव गाम्भीर्ये' इति श्रीरामो वर्ण्यते । 'राजीवलोचनः'

इत्यादि च । एवम्भूतस्थलेषु हि उपमेये उत्कर्षो निर्विवादः । एवमपि दृष्टान्त-प्रदर्शनं बुद्ध्यारोहाय । विवक्षितांशे दिक्प्रदर्शनमात्रमेतत् । अतोऽतिदेशे निकर्ष एवेति न नियमः । यत्र तावत् कर्मविधिषु प्रकृतिविकृतिभाव इष्टः, तत्रातिदि-श्यमानधर्माधारे उपदिश्यमानधर्माधारापेक्षया औपदेशिकानेकविशेषान्तराणामपि सद्भावान्मुखान्तरेण प्रकर्ष एव निष्प्रकर्षोऽस्ति । अतः श्रुतिषु परमपुरुषस्यैव विशेषतः श्रावितत्वात्, ज्ञातं वस्तु यथेति प्रदर्श्य ज्ञापनीयस्य तथेति प्रतिबोधनमित्यस्य निश्चप्रचत्वात्, तत्साम्यं लक्ष्म्या बोध्यते पुराणादिषु श्रुत्यन्तरमूलेषु । पतिपत्नीभावादिमूलस्वातन्त्र्यपारतन्त्र्ययोः स्वयमेव तयोरिष्टत्वात् श्रुतिः परमपुरुषं प्राधान्येन निर्दिशति दम्पत्योर्वक्तव्ये ईश्वरद्वित्वादिदोष-शङ्काप्रसङ्गपरिहाराय । "पुम्प्रधानेश्वरेश्वरीम्" इति भगवन्तं प्रति ईश्वरत्वं प्रणयित्वनिबन्धनं सर्वेष्टम ।

यदि पुनः 'यथा विष्णुः तथेयम्'इत्यतिदेशप्रकारं विहाय प्रकारान्तरेण श्रीरियं विशेषेण वर्ण्येत,—सर्वज्ञा सर्वव्यापिनी, सर्वकारणमित्यादिरीत्या, तदा अनन्तगरुडब्रह्मरुद्रेन्द्रनयेनेयमपि स्तूयत इति केचिन्मन्येरन्, तदा चास्या यथावस्थितं माहात्म्यमनभ्युपगतं भवेदिति बिभ्यदेव विष्णु-पुराणादिकमस्या भगवत्साम्यं पुष्कलमवगमयितुम, 'यथा विष्णुस्तथेयम्; न पुनरत्रौपचारिकार्थग्रहणं युक्त'मिति प्रतिबोधयितुमेवातिदेशप्रणालीमाद्रियत इति सहृदयैर्भाव्यम् । न च स्तुतिवचनानां स्वार्थे तात्पर्यं नास्तीति वयं वक्तुं प्रभवामः । कबन्धमीमांसकमतं हि तत् । असति बाधे यथाश्रुतार्थपरत्वं हि स्तुतिवचनानां भगवद्भाष्यकृदिष्टम । व्यक्तमिदं देवताधिकरणे । न ह्यसता गुणेन कथितेन नुतिर्भवतीति नः सिद्धान्तः ।

अस्य ग्रन्थकृतः परमाचार्याः श्रीराममिश्रा एव "उभयाधिष्ठानं चैकं शेषित्वम्" इति यदेव शेषित्वं भगवति, तदेव देव्यामस्यामपीति दर्शयन्तः, तस्यैकस्य शेषित्वस्य भगवतीव लक्ष्म्यामप्यात्मत्वप्रयोजकत्वमाविष्कुर्वन्ति । अन्यथा हि विष्णुपुराणादिकृताः समानाधिकरणनिर्देशाः सर्वे कदर्थिताः स्युः । उत्पादकत्वविशिष्टपुंस्त्वरूपं पितृत्वं परस्य पुंसः, तादृशस्त्रीत्वरूपं च मातृत्वमस्या मुख्यमेव भवितुमर्हति ; न पुनरन्यादिव्यमहिष्यविशेषमौपचारिकं मातृत्वमित्यपि विभाव्यम् । अधिकमन्यत्र । श्रीप्रभावविषये भगवद्भाष्यकाराणामाशयं तन्निरन्तरपरिचरणपरायण - सार्वकालिकसंनिधानभाग्यधन्य- वेदान्तोदयनोपाख्या-विद्यातवैदुष्यातिशयश्रीमदात्रेयप्रणतार्तिहराचार्यवर्यमुखात् यथावदधिगन्तुं

श्रीपराशरभट्टार्यप्रधानशिष्याणां श्रीनञ्जीयरप्रभृतीनामाचार्याणां यत् सौकर्यम्, तन्मन्ये देशविप्रकर्षादिना एतद्ग्रन्थकारपूर्वपुरुषाणां नासीदिति । अथवा पूर्वपुरुषाणां तदासीदेव; यतः श्रीराममिश्रसूक्तिर्मितगम्भीरा न्यायसिद्धाञ्जने निर्णयायोदाहारि । श्रीतत्त्वसिद्धाञ्जननामनि च निबन्धे साक्षात्स्वामीति विख्याते ज्ञानानुष्ठानवैराग्यशेवधिवेदान्तरामानुजयतीन्द्रैः श्रीमन्निगमान्तमहादेशिकाभिमतपक्षनिर्धारणं निष्प्रकम्पं निरटङ्कि ।

## कैवल्यम्

पुरुषार्थेषु अचिदनुभवरूपमैश्वर्यमिव, परिपूर्णब्रह्मानुभवरूपं निःश्रेयसमिव च आत्मानुभूतिरूपं कैवल्यमपि फलं सांप्रदायिकम । एवंच तत्त्वेष्विव तदनुबन्धिषु पुरुषार्थेष्वपि त्रित्वं साम्प्रतं वर्णितं भवति । तत्र कैवल्यमपि परममोक्षवत् स्थिरम; तदनुष्ठानस्य न पश्चान्निःश्रेयसप्रसक्तिरिति केचित् । प्रकृतेरिव आत्मनः स्थिरत्वेऽपि ऐश्वर्यमिव कैवल्यमप्यस्थिरमिति न्यरूपि श्रीमन्निगमान्तमहादेशिकैः । श्रीगीताभाष्ये सप्तमे, "आर्तो जिज्ञासुरर्थार्थी" इत्यत्र जिज्ञासुरात्मावाप्तिरूपकैवल्येच्छुरपि भगवद्भक्तो दर्शितः । तेन भक्त्या कैवल्यप्राप्तिरिति सिध्यति । कैवल्यकामस्यास्य पञ्चाग्निविद्योक्तकर्मणोपासनम्, अर्चिरादिगति, "स एनान् ब्रह्म गमयति" इत्युक्त्या ब्रह्मप्राप्तिः, अत एव ब्रह्मात्मकस्वात्मोपासनञ्चाष्टमे स्पष्टमभाषि । एवमपि त्रयोदशारम्भे अवतरणिकायाम्, "आत्मकैवल्यमात्रापेक्षाणाञ्च" इति कैवल्यमात्रस्य भक्तिसाध्यत्वमन्वभाषि । सति ब्रह्मानुभवे, कैवल्यमात्रेति मात्रशब्दप्रयोगो नूनम् 'प्रथमं कैवल्यमात्रानुभवः कञ्चित् कालम्, अथ ब्रह्मानुभवोऽपि' इत्यभिप्रायेणेति मन्ये विमृश्य कैवल्यस्यान्तरालिकफलत्वं श्रीदेशिकचरणैरदर्शि ।

## केवलकैवल्याक्षेपः

अत्रैवं विमर्श उदेति — एवं गीताभाष्यदर्शितान्तरालिककैवल्यातिरिक्तकेवलकैवल्यमात्रसाधक उपायोऽस्तीत्यत्र किं प्रमाणम्? न तावत् श्रुतिः; सा किं प्रजापतिवाक्यम्, किं वा भूमविद्यान्तर्गतप्राणविद्या, यद्वा "विज्ञानं ब्रह्म चेद्वेद" इति तैत्तिरीयम, आहो "अध्यात्मयोगाधिगमेन देवं मत्वा" इति कठोपनिषत्, अन्यद्वेति । आद्यं दहरविद्याशेषभूतं परभक्त्युपयोग्यात्मावलोकनसाधनपरमिति भाष्ययोः स्पष्टम् । अतस्तत्र ऊर्ध्वलोके प्रेत्य प्रत्यगात्मानुभव उच्यत इत्यत्र न किंचिद्गमकमस्ति । किंच तत्र अपहतपाप्मत्वादिसत्यकामत्वसत्यसंकल्पत्वविशिष्टजीवोपासनस्यैव विहितत्वात्

तत्क्रतुनयेन तावद्धर्मगतिरूपफलस्यावश्यकत्वेन तस्य चापवर्ग एव संभवेन केवलकैवल्यप्राप्तिस्ततो न घटते । न च प्राणविद्या; तत्र श्रुतौ नामाद्युपासने-ष्विव फलविशेषस्याकीर्तनात् तस्या अपि सत्यभूतपरमात्मोपासनाङ्गत्वस्यैवाव-धारणात् । नापि तैत्तिरीयम्; तत्रापि "शरीरे पाप्मनो हित्वा" इति मुक्ति-कथनात् तदुपासनस्य तच्छेषत्वात् । न च ब्रह्मदृष्ट्योपासनस्यैव तत्र, "विज्ञानं ब्रह्म चेद्वेद" इत्यनेनोक्तत्वात् कथं दृष्टेर्मुक्तिरिति शङ्क्यम्; फलस्योक्त-त्वादेव दृष्टिविधित्वस्वीकारात्; पञ्चाग्निविद्यावदेव तदर्थोपपत्तेः । कठश्रुतिस्तु अङ्गभूतात्मोपासनपरेति व्यक्तम् । अन्यदपि वचनमीदृशमेव संभाव्यते । श्रीगीताप्रथमषट्कोक्तकर्मयोगाद्यनुरोधेन स्मृत्यनुमेया श्रुतिरपि न केवलकैवल्यं साधयेत् । अनुमापकस्मृतिवचने पूर्वषट्क ऐहिकादात्मावलोकनादन्यस्य तादृश-फलस्य कीर्तनादर्शनात् । किंच श्रीकृष्णार्पणबुद्ध्या सात्त्विकत्यागपुरःसर-कर्मानुष्ठानस्यैव तत्र विधानात् तस्य भगवत्प्राप्तौ पर्यवसानमेव साम्प्रतम्; न तु कैवल्यमात्रे विश्रमः । अतो मा भूत् केवलकैवल्यमिति ।

## तत्स्थापना

अत्रोच्यते— सर्वतीर्थकरसंमतस्य केवलकैवल्यस्य सिद्धान्तेऽपि स्वीकारे न काचित् क्षतिः । "कैवल्यं भगवन्तं च मन्त्रोऽयं साधयिष्यति" इति वचनात् श्रीमदष्टाक्षरस्य कैवल्यमपि फलं स्वीकार्यम् । श्रीभगवद्यामुनमुनिभिश्च "आत्मार्थी चेत् त्रयोऽप्येते तत्कैवल्यस्य साधकाः" इति कर्मयोगादिमात्रसाध्यं कैवल्यमपि समग्राहि । अत एव श्रीगीतास्वपि तादृशं फलमभिमतमिति स्वीकारो वरम् । चतुर्दशाध्यायान्ते च,

"ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥"

इति चकारत्रयसूचितं क्रमात् कैवल्यैश्वर्यापवर्गरूपफलत्रयमिति यथावद् भाष्येण सह परामृशतां सुगमम् । परमा गतिः कैवल्यरूपेति, "अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम्" इत्यत्र विदितम् । अत ऐहिकस्यात्मानुभवस्यैव पूर्वं प्रायो ग्रहणेऽपि षष्ठनिगमने, "अनेकजन्मसंसिद्धस्ततो याति परां गतिम्" इति तत्पदप्रयोगात् ऐहिकशुद्धात्मानुभववत् आमुष्मिकतदनुभवोऽपि विवक्षितुं युक्तः । अतस्तदनुरूप उपाय उन्नेयः । अविद्वत्कर्तृकः कर्मयोगः, विद्वत्कर्तृककर्मयोगेऽपि, "मयि सर्वाणि कर्माणि संन्यस्य" इति भगवदर्पणबुद्धेस्त

इव "गुणा गुणेषु वर्तन्ते" इति गुणेषु कर्तृत्वारोपघटितोऽपि कश्चिदुक्तोऽस्ति । श्रीमद्रहस्यत्रिकायां च प्रथमद्वितीयपञ्चमगाथाव्याख्याने, (१ २-५ 'विषयसङ्गत्यागे प्रकृतिविनिर्मुक्तः सुखरूप आत्मा अनुभूयत एव । स्थिरपुरुषार्थलिप्सायां तु आदौ विषयसङ्गवेलायामेव भगवन्तमाश्रित्य विषयास्त्याज्याः' इत्युपदिष्टम् । भगवदाश्रयणं विनापि वैराग्यपूर्वकं किञ्चिदनुष्ठाने कैवल्यमुक्तिर्भवतीत्यर्थस्यैतोऽवगमात् तदनुष्ठानम्, "गुणा गुणेषु वर्तन्ते" इत्युक्तरीत्या स्यादिति भाव्यते । अस्तु तावदविशेष एव कर्मयोगाद्यनुष्ठाने; कैवल्यसिद्धये अमानित्वादेरिव, "मयि चानन्ययोगेन भक्तिरव्यभिचारिणी", "मां च योऽव्यभिचारेण भक्तियोगेन सेवते" इत्यविशेषेण भगवद्भक्तेरप्यावश्यकत्वस्य, प्राधान्यस्यैव वा प्रतीयमानत्वात् । अतो गाथा-तद्भाष्यदितात्पर्यं तावत् न भगवदाश्रयणं विनापि कैवल्यं सुलभमित्येवंरूपम्; किंतु आकर्षके आत्मानुभवे यथा मे न पातः स्यात्, तथा मुख्यमोक्षे मां प्रेरयेति विशिष्य भगवदाश्रयणमादौ कार्यमित्येवेति । अथापि केवलकैवल्य कामस्यात्मस्वरूपचिन्तने सर्वजीवात्मसाम्यजीवपरमात्मसाम्याद्यनुसंधानसध्रीची-नेऽपि परमात्मशेषत्वाद्यनुसंधानासंवलनाद् भेदो भवितुमर्हति । कति कति सन्ति कर्मकाण्डविहितानि कर्माणि, यानि अङ्गोपाङ्गप्रधानांशेष्वनुष्ठाने मात्रयापि भेदवैधुर्येऽपि कामनाभेदमात्रेण विचित्रं फलन्ति । अतो विनियोगपृथक्त्वबलात् सर्वं संपद्यत इति किमत्र बहुना !

मा भूत् प्रजापतिवाक्यमत्र प्रमाणम्; प्राणविद्या तु भवितुमर्हति; पूर्वपूर्वोपासनेषु फलश्रवणादत्रापि तदौचित्यात् । अत एव "विशेषं च दर्शयति" इति सूत्रे भाष्ये प्राणविद्याया अप्यन्यत् फलं श्रुत्यभिमतत्वेन भावितम् । "अतोऽन्यदार्तम्" इति तत्र श्रुतिवाक्ये तत्फलमपि संगृहीतं मन्तव्यम् । शेषं तत्रास्मदीयोपनिषद्भाष्यपरिष्कारे । तैत्तिरीयवाक्येऽपि "तस्माद्येन प्रमाद्यति" इति श्रवणात्, यदि प्रमादेन भगवत्प्राप्तिमनुद्दिश्य विज्ञानब्रह्मोपासनं कुर्यात्, स न मुक्तिं लभेतेत्यवगमनात् कैवल्यमात्रफलकं द्रष्टव्यपासनादिकमिति सूचितं भवति । एवंभूतोपासनस्थितिश्च कार्याधिकरण-भाष्य एव व्यक्ता । अतोऽस्त्येव केवलं कैवल्यमपि ।

## पुनर्गीतामवलम्ब्यैवाक्षेपः

अथ स्यात्—द्विविधो जीवात्मानुभवः ऐहिक आमुष्मिकश्च । उभयोऽपि आत्मप्राप्तिरिति व्यवह्रियते गीतासु । अष्टादशे हि—

"ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥"

इति भगवद्भक्त्यङ्गभूतमात्मावलोकनं ब्रह्मभूयायेत्यादिशब्देन निरदेशि ततः प्राक्, "सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे" इति ब्रह्मप्राप्तिरूपमुक्तम् । सिद्धिश्च तत्रोक्ता नैष्कर्म्यसिद्धिः सर्वेन्द्रियकर्मोपरतिरूपध्यानयोगात्मिकेति तत्पूर्वश्लोकादवगम्यते । इयं सिद्धिः इयं ब्रह्मप्राप्तिश्चैव षष्ठान्तेऽपि "अनेकजन्मसंसिद्धस्ततो याति परां गतिम्" इत्यत्रोच्यत इति औचित्यादिसिद्धम् । एवंच ततः प्राक्, पञ्चमाध्याये च "ब्रह्मनिर्वाणमधिगच्छति" इत्यादिनोक्तमप्येवम्भूतमेवेति नूनमयमात्मानुभव ऐहिक एव स्थूलदेहेन ध्यानोपयुक्तेनैवोत्पाद्यमानः । अन्यस्तु आमुष्मिकोऽष्टमाध्यायतोऽवगम्यते । तत्र हि, "जरामरणमोक्षाय मामाश्रित्य यतन्ति ये" इति जरामरणमोक्षात्मकं कैवल्यं प्रस्तुत्य, "प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः" इति प्रायणकालिकयोगसाध्यत्वं तस्य यत् सप्तमे कीर्तितम्, तद्विवरणरूपेऽध्याये, "अन्तकाले च मामेव स्मरन् मुक्त्वा कलेबरम्" इत्यन्यभक्ताविशेषं जिज्ञासोरपि प्रायणकालिकभगवत्स्मरणमुपवर्ण्य, विशिष्य च "मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् । यः प्रयाति त्यजन् देहं स याति परमां गतिम्" इति परमगतित्वेन प्रसिद्धात्मानुभूतिः देहावसानानन्तरभाविनी निगदिता । तथा "यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः" इति गमनमार्गोऽप्यदर्शि ।

तत्रामुष्मिकस्यात्मानुभवस्य "यं प्राप्य न निवर्तन्ते तद्धाम परमं मम" इति अपुनरावृत्तिरूपत्वकथनात् जीवात्मनः परमात्मनो वा भवतूपासनम्, आमुष्मिकं फलमुभयत्राविशिष्टमिति ज्ञायते । अत एव सा 'परमा गतिः' इति गीयते । द्वादशे चाध्याये भगवदुपासकस्य जीवोपासकस्य वा योगवित्तमत्वमिति प्रश्ने समाहितम्—जीवोपसका ये, "ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः" इति । एवमुभयेषामपि भगवत्प्राप्तिमुक्त्वा "क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्" इति जीवोपासकस्य क्लेशाधिक्यमित्येतावदेव वैषम्यमदर्शि, न फले वैषम्यम् । अपहतपाप्मत्वादिसत्यकामत्वसत्यसंकल्पत्वपर्यन्तगुणविशिष्टजीवात्मध्यानरूपज्ञानयोगलम्भनीयश्चात्मप्राप्तिरूपोऽनुभव ऐहिको यद्यपि स्वरूपलाभात्मको मा भूत्, आमुष्मिकस्तु स्वरूपाविर्भावरूप एव युक्त इति कथं तस्याविर्भूतब्रह्मरूपस्य परममुक्तवैलक्षण्यम्? अतः

कैवल्यमिति पृथक्फलं किञ्चिदस्तीत्यत्र न प्रमाणम् । युक्तश्च प्रकृतेर्नित्यत्वेऽपि ऐश्वर्यस्य प्रकृतिपरिणामसाध्यत्वादनित्यत्वम् । न तु कैवल्यस्यापरिणतात्मगोचरस्येति—

## आक्षेपपरिहारः

उच्यते—कैवल्ये अपुनरावृत्तिश्रवणमात्रात् कैवल्यभगवत्प्राप्त्योरैक्यं कथं सिध्येत्? फलभेदेऽपि तत्संभवात् । परंतु अपुनरावृत्तिश्रवणस्य जिज्ञासुविषयकत्वात् जिज्ञासोश्च पञ्चाग्निविद्यानिष्ठत्वात् तस्य च ब्रह्मप्राप्तिः श्रुतौ स्पष्टतया तद्विषये श्रुत्युक्तैवापुनरावृत्तिरिहापि गीयत इति न दोषः । तर्हि ब्रह्मप्राप्तिसद्भावात् फलैक्यमेवेति चेत्. किमिदं गीताषष्ठान्ताध्यायकथितोपायनिष्ठविषये, उत सप्तमोक्तजिज्ञासुविषये? नाद्यः, तत्र परब्रह्मप्राप्तिरूपफलस्य ज्ञानयोगादिसाध्यत्वेनावर्णनात् । तत्र चतुष्प्रकारा विपाकदशा वर्णिता । ततो ज्ञानानन्दस्वरूपत्वम्, अपहतपाप्मत्वादि, असंकुचितज्ञानत्वम्, औपाधिकाकारानुपसृष्टत्वं चेत्यंशचतुष्टयवत्तया आत्मध्यानमवगम्यते, न तु परब्रह्मशेषत्वस्यापि ध्यानमावश्यकमिति । जिज्ञासुस्तु सप्तमोक्तः पञ्चाग्निविद्यानिष्ठो ब्रह्मशेषतैकरसस्वात्मानुसंधानपरो ब्रह्मप्राप्तिरूपफलभागिति संप्रतिपन्नम् । "यदक्षरं वेदविदो वदन्ति", "ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्" इति च व्यक्तमगायि तस्य भगवदुपासनमिश्रत्वम् ।

## पञ्चाग्निविदः फलवैलक्षण्यस्यावश्यकता

अस्तु तर्हि पूर्वषट्कोक्तोपायानुष्ठस्यैहिकात्मानुभवमात्रं फलम्; जिज्ञासोश्च भक्तान्तराविशेषं परममुक्तिरूपं कैवल्यगर्भं फलम् । ततश्च न पृथक् कैवल्यं नाम किञ्चिदस्तीति । न; उपासनवैलक्षण्यात् फलेऽपि वैलक्षण्यस्यावसायात् । ननु दहरवैश्वानरादिविद्यानामत्यन्तवैलक्षण्येऽपि "विकल्पोऽविशिष्टफलत्वात्" इति फलवैषम्याभावः संप्रतिपन्नः । सत्यम् । तत्र सर्वत्रोपासने विशेष्यभूतस्य ब्रह्मण एकत्वात् फलैक्यम्; इह तु विशेष्यं जीवात्मस्वरूपमिति विशेषात् फलवैलक्षण्यमेष्टव्यम् । कथं विशेष्यभेदोऽवसीयत इति चेत् "तद् य इत्थं विदुर्ये चेमे" इति पृथङ्निर्देशादित्युक्तमेव भाष्यादौ । ननु कस्याश्चिद् विद्यायाः प्रस्तावावसरे, 'य इमां विद्यां विदुः, ये चान्यामन्ये, ते उभये फलमिदं प्राप्नुवन्ति' इति वचनभङ्गीं विना कथमन्यथा सर्वविद्याकोटीकारेण वचनप्रवृत्तिः स्यात्? अतः पृथङ्निर्देशः एकस्या विद्यायाः प्रस्तुतत्वमात्रादुपपद्यत इति नेदमुपासनाविशेष्यभेदव्यवस्थापकमिति चेत्—

स्यादेवम् । यदि 'य इत्थं विदुः ये चान्यथा' इति निर्दिश्येत । इह तु परत्र, "श्रद्धा तप इत्युपासते", "श्रद्धां सत्यमुपासते" इति तपःसत्यपदद्वयाभिधेयस्य कस्यचित् कथनात् "तद्य इत्थं विदुः" इति पूर्ववाक्ये तपआदिपदवाच्यार्थविशेष्यकत्वाभावस्यावगमात्, किमन्यदुपास्यं स्यादिति विमर्शे जीवस्वरूपनिरूपणैदम्पर्यस्य पञ्चाग्निविद्यायां निर्धारितत्वात् जीवात्मविशेष्यकोपासनमत्रेत्यवसीयत इति । एवमपि ब्रह्मप्राप्तिरूपफलश्रवणाद् ब्रह्मणो जीवात्मविशेषणतयापि वा अन्ततः उपास्यत्वमूरीकर्तव्यमासीत् । अतः फलवैलक्षण्यं युक्तम् ।

तत्र जीवात्मप्रधानकोपासनरूपोपायानुरूपं तत्प्राप्तिरूपं फलमेवेष्यते । अर्चिरादिगत्यादिश्रवणाच्च परमं फलमपि पश्चादित्युच्यते । सर्वथैगपद्ये च पुनरविशेष एव स्यात् । अत एव त्रयोदशारम्भे गीताभाष्ये कैवल्यमात्रापेक्षाया जिज्ञासौ कीर्तनमपि प्रथमं कश्चित् कालं भगवदनुभवविधुरात्मानुभवचिकीर्षापरमुपपद्यते ।

ननु द्वादशे अक्षरोपासनस्य, 'ते प्राप्नुवन्ति मामेव' इति ब्रह्मप्राप्तिरेव फलं गीयते, एवकारात् । तत् कथं पृथक् कैवल्यमपि फलमिति चेत्—तत्र 'ते मां प्राप्नुवन्त्येव' इति हि योजना क्रियते । नन्वेवमपि केवलकैवल्यमात्रफलस्याभाव एव; अक्षरोपासनसामान्यस्य मामिति भगवत्प्रापकत्वावधारणादिति चेत् न; मामित्यस्य मत्सधर्माणं जीवात्मानमित्यर्थवर्णनात् तस्य चात्मानुभवस्य सर्वाक्षरोपासकसाधारणत्वात् ।

## द्वादशाध्यायप्रश्नविषयविवेकः

नन्विदं प्रकरणं न सर्वविधाक्षरोपासकविषयम्; शुद्धजीवोपासकस्य परमात्मोपासकस्य चोपास्यवैलक्षण्याधीनस्य तारतम्यस्य स्वत एव सुग्रहत्वात् । षष्ठान्ते, "स मे युक्ततमो मतः" इति कथितत्वाच्च, 'के योगवित्तमाः' इति कथं जिज्ञासा! अतः पञ्चाग्निविद्यानिष्ठविषयकत्वमेव "ये चाप्यक्षरमव्यक्तम्" इति प्रश्नस्य वक्तव्यम् । अत इह जीवात्मोपासकसामान्यग्रहणमयुक्तमिति चेन्न—उपास्यवैलक्षण्यप्रयुक्तस्य वैशेष्यस्य प्रागेव सिद्धत्वेऽपि किं जीवात्मोपासकस्य तत्फलं कैवल्यं शीघ्रं भवति, उत परमात्मोपासकस्य तत्फलं निःश्रेयसं शीघ्रमिति फलशैघ्र्यप्रयुक्ततारतम्यस्यैवात्र जिज्ञासिततया, तस्य च पूर्वमज्ञाततया प्रश्नोपपत्तेः । कथमिदमवगम्यत इति चेत्—समाधानग्रन्थे

"भवामि नचिरात् पार्थ", "क्लेशोऽधिकतरस्तेषाम्" इति शैघ्र्यविलम्बयोर्यथाक्रमं निर्देशात् । अन्यत्राप्येवंजातीयः प्रश्नो दृष्टचरः । यथा कर्मयोगज्ञानयोगयोर्मध्ये कर्मयोगस्य सुकरत्वाप्रमादत्वादिना ज्यायस्त्वस्य तृतीय एव व्यक्तत्वेऽपि, षष्ठे 'यच्छ्रेय एतयोरेकम्' इति पुनः प्रश्नः । तत्र "योगयुक्तो मुनिर्ब्रह्म नचिरेणाधिगच्छति", "संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः" इति फलशैघ्र्यतदभावयोर्यथाक्रमं कर्मयोगज्ञानयोगयोर्वर्णनात् प्रश्नस्तद्विषय इति यथा, तथेहापीति ।

## प्रश्नवैयर्थ्यशङ्का

ननु विषमो दृष्टान्तः । तत्र हि कर्मयोगापेक्षया ज्ञानयोगस्य शीघ्रफलत्वमुचितम् आत्मावलोकनस्य मनस्समाधानसाध्यतया तत्र चिन्तारूपज्ञानयोगस्य अञ्जसोपयोगादित्याशङ्कायाम्, ज्ञानयोगस्य दुःसाधत्वात् कर्मयोगस्य सुकरत्वाच्चात्रैव फलशैघ्र्यमिति प्रदर्श्य ज्ञानयोगत्यागेन कर्मयोगं पुरुषः प्रवर्त्यत इति युक्तम् । इह तु मुमुक्षोर्जीवात्मोपासनस्य भगवदुपासनस्य चोभयोरपि तत्तत्फलार्थमनुष्ठानं क्रमेणावश्यकमित्येकतरस्याप्यपरित्यागात्, फलशैघ्र्यनिर्णयेन कर्तव्यस्य कस्यचिदभावेन, उभयस्यापि शैघ्र्ये विलम्बे वा, एकतरस्य कस्यापि शैघ्र्ये विलम्बे वा सर्वथा उभयानुष्ठानस्यावश्यकतया तद्विचारो व्यर्थ एवेति ।

ताहि द्वादशाध्यायोपक्रमश्लोकस्य, किं भवद्भक्त्या कैवल्य लिप्सोः कैवल्यं शीघ्रं भवति, किं वा भवद्भक्तिं सर्वथा संत्यज्य अक्षरोपासनया तल्लिप्सोरित्यर्थः कैवल्यविषयोऽस्त्विति चेन्न—सर्वथा भगवन्तमपुरस्कृत्य उपासनपरस्य कैवल्यप्राप्तेरप्रामाणिकत्वात् । द्वादशे द्वितीयषट्कप्रस्तुतमोक्षतदर्थभक्तित्यागेनार्थान्तरवर्णने असामञ्जस्यात् । समाधानग्रन्थाञ्जस्याभावाच्च । अतः पूर्वरीत्यनुसारे तत्रापि विचारवैयर्थ्यमेवेति—

## (द्वादशाध्यायगत) प्रश्नतात्पर्यवर्णनम्

अत्रोच्यते—अयमत्र फलशैघ्र्यप्रश्नाशय उन्नेयः—ज्ञानयोगात् कर्मयोग एव ज्यायानिति तत आत्मावलोकनं संपाद्य भक्तियोगेऽवतरेदित्युच्यते । अल्पपुरुषार्थहेतुभूतस्य ज्ञानयोगस्यैव दुष्करत्वे महापुरुषार्थहेतुभूतस्य सुसूक्ष्मार्थविषयकस्य भक्तियोगस्य दुष्करतरत्वमेव स्थास्यति । एवञ्च ज्ञानयोगात् यावता विलम्बेनात्मावलोकनं फलम्, ततोधिकविलम्बेनैव स्यात् भक्तिफलम्, यदि तु कर्मयोगं विहाय ज्ञानयोग एवात्मावलोक-

नार्थेऽनुष्ठीयेत, तदा मनस्समाधानपाटवस्यादित एव संपादितत्वात् भक्तियोगः शीघ्रं फलं प्रसुवीत। एवञ्च, 'मत्कर्मकृन्मत्परमः' इत्युक्तरीत्या कर्मयोगपुरस्सर-भक्तियोगसाध्यं फलं ज्ञानयोगसाध्यात्मावलोकनापेक्षया यदि विलम्बेन भवति, तर्हि ज्ञानयोगेन तत् फलं संपाद्य मनस्समाधानसौकर्येण भक्तियोगं शीघ्रमनुष्ठाय तत्फलं त्वरया लभेत; न तु कर्मयोगस्य ज्यायस्त्वेपि तत्पूर्वक-भक्तियोगम्। अथवा ज्ञानयोगेन कर्मयोगानुष्ठानोपदेशवत् मनस्समाधानादि-सापेक्षभक्तियोगत्यागेन ज्यायोभूतस्योपायान्तरस्योपदेशः क्रियतां शीघ्रलब्धये। किञ्च कर्मयोगेऽवतीर्णस्य भक्तियोगः पृथगनुष्ठेयो भवति। ज्ञानयोगेऽवतरंस्तु प्रथमतः पञ्चाग्निविद्यारूपेणैव तदनुष्ठाने प्रवृत्तः सन् एकेनैवोपायेन प्रथममात्मावलोकनं क्रमेण भगवत्साक्षात्कारञ्च लभेतेति उपायद्वयस्यानुष्ठेयत्वा-भावात् सौकर्यातिशयोऽपीति।

## समाधानगतिः

अत्र समाधिर्द्वादशे उच्यते—ज्ञानयोगेनात्मावलोकनमतिक्लेशसाध्यम्। कर्मयोगेन शीघ्रमेवात्मानमवलोकितवता भक्तियोगे क्रियमाणे स भक्तियोगः स्वफलं शीघ्रमेव दास्यति; न तु ज्ञानयोग आत्मावलोकनमिव विलम्बेन। अतः केवलज्ञानयोगं वा पञ्चाग्निविद्यारूपमात्मोपासनं वा नानुष्ठेयं त्वरमाणेन; किंतु कर्मयोगः पूर्वम्, ततो भक्तियोगश्चेति। उद्घाटितपूर्वमेव प्रष्टुरिदयं मनसिकृत्य भगवान् उत्तरवचने, 'ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः' इति कर्मयोगं घटयति; ज्ञानयोगं च त्यजति। अशक्तस्याधस्तनपर्वणि स्थितिवर्णनावसरेऽपि ज्ञानयोगं परित्यज्य, 'सर्वकर्मफलत्यागं ततः कुरु' इत्यवोचत्। 'श्रेयो हि ज्ञानमभ्यासात्' इति श्लोकेऽपि कर्मयोगपश्चाद्भावी लक्ष्यभूतयोग एवोक्तः; न ज्ञानयोगः। 'भक्तियोगस्थाने कर्म किञ्चिदुच्यताम्, ज्ञानयोगस्थाने कर्मयोगवत्' इति प्रष्टुराशयं परिहर्तुमेव च, 'यद्यप्यस्ति मत्कर्मनामा पाञ्चरात्रादिप्रसिद्धः कश्चिदुपायः; सोपि अभ्यासनामकमन्यं द्वारीकृत्य व्यवधानेनैव भक्तियोगद्वारैव फलं दद्यात्; न कर्मयोगः आत्मावलोकनमिव परमात्मलाभं साक्षात्' इति प्रकाशयितुम्, 'अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय। अभ्यासेप्यसमर्थोऽसि मत्कर्मपरमो भव' इत्यगासीत्। मत्कर्म चेदम्, मत्कर्मकृदिति प्रागुक्तकर्मयोगो नेति संदर्भात्, उपरि, 'अथैतदप्यशक्तोसि—सर्वकर्मफलत्यागं ततः कुरु' इति एतत्कर्म विहाय कर्मयोगे प्रवृत्तिविधानाच्च स्फुटीभवति।

## प्रश्नाशयसारः

अतो द्वादशे प्रष्टुरर्जनस्यान्तराशयस्तावत्—कर्मयोगसाध्यस्य भक्तियोगस्य विलम्ब्य फलहेतुत्वात् तदनुष्ठात्रपेक्षया ज्ञानयोगानुष्ठायी योगवित्तरः; कर्मयोगानुष्ठात्रपेक्षया शीघ्रमात्मावलोकनरूपफलभाक्त्वाभावेऽपि तन्मूलभक्तियोगानुष्ठात्रपेक्षया शीघ्रं स्वफलभाक्त्वात्; एवम्भूतपुरुषानुष्ठेयस्य भक्तियोगस्य शीघ्रफलप्रदत्वसंभवाच्च। अतः कर्मयोगं विहाय ज्ञानयोगं ततो भक्तियोगश्चानुष्ठातुं साम्प्रतमिति।

ननु प्रारब्धकर्मावसानभाविनो भक्तियोगफलस्य ज्ञानयोगफलापेक्षया शैघ्र्यं किं नामेति चेत्—भक्तियोगफलमिति अनुपोष्यामृतत्वं प्रीतिरूपदर्शन समानाकारतारूपदशैव वाऽत्र विवक्ष्यते; न तु मोक्ष इति।

## वैयर्थ्यपरिहारोपसंहारः

एवञ्च प्रश्नस्य साभिप्रायत्वाद् विचारोऽस्य न व्यर्थः। एतद्विचारणैव पञ्चाग्निविद्यानिष्ठापेक्षयाऽपि भक्तिमार्गान्तरनिष्ठस्य योगवित्तमत्वमर्थसिद्धमिति न तत् पृथग्वक्तव्यम्। एवं सत्यपि पञ्चाग्निविद्यायाः कैश्चिदनुष्ठानम् अवान्तर-फलभूतकैवल्यालिप्सयेति तद्रीत्या तन्मात्रलिप्सायामन्तरात्मविषयकाचेतनभोग्य-रूपैश्वर्यानुभववत् केवलात्मानुभवोऽपि प्रमाणतर्कसंप्रदायसिद्धो न निषेध-मर्हतीत्यलं बहुना।

## ग्रन्थकारपक्षनिगमनम्

अत्रायं ग्रन्थकारो वाक्यार्थप्रदीपप्रकरणे स्वर्गादिविशिष्टब्रह्मण एव संसारिणः प्रति फलत्वेऽपि ब्रह्मांशज्ञानं तेषां नास्तीति निरूपणावसरे कैवल्ये प्रस्तुते, "वस्तुतो न कैवल्यस्य मोक्षत्वम्; भगवत्प्राप्तेरेव मुक्तित्वाभिधानात्। अत एव नार्चिरादिगतिस्तन्निष्ठस्य। 'स एनान् ब्रह्म गमयति' इति तस्या भगवद्गमयितृत्वश्रवणात्" इति वर्णयन् अर्चिरादिगतिचिन्तनप्रसक्तिरहितम् अत एव परमपदप्राप्तिविधुरं किञ्चिदस्तीति स्वाभिमतिमाविष्करोति यथा, तथा प्रमेयपरिच्छेदेऽपि (२५४. पु.) श्रीभाष्यगीताभाष्ययोः प्रदर्शनेन प्रागुक्तमनु-वर्णयति।

एवं कैवल्यं प्राप्तश्च न सर्वकर्मविनिर्मुक्त इति वेदार्थसंग्रहादवगम्यते। "सर्वकर्मविनिर्मुक्तात्मस्वरूपावाप्तिर्हि भगवत्प्राप्तिगर्भा; 'त इमे सत्याः काम

अनृतापिधानाः' इति भगवतो गुणगणस्य तिरोधायकत्वेन अनृतशब्देन स्वकर्मणः प्रतिपादनात्'' इति हि भगवद्गुणाननुभवः कर्मवेष्टननिबन्धन इति स्पष्टमभ्यधायि ।

नन्वेवमपि तत् कैवल्यं नित्यं किं न स्यात्; नित्यात्मानुभवरूपत्वेन नित्यत्वस्य युक्तत्वात् । यद्यप्यस्य नार्चिरादिगतिः; नतराञ्च परब्रह्मलोकप्राप्तिः— अथापि प्रकृतिमण्डलेऽपि नित्यकैवल्यानुभवस्वीकारे न किञ्चित् हीयते । तन्नित्यत्वपरस्य पौराणिकवचनस्य पूर्वैरनुदाहृततया प्रक्षेपशङ्कया प्रतिक्षेप्यत्वेऽपि तत्रतत्र गीताभाष्यस्वारस्यमप्रतिक्षेप्यम् । स्पष्टमेव च चतुर्दशारम्भे "यद् ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥ इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च'' इति कैवल्यानुभवस्य नित्यत्वमगायि । इदं हि संदर्भानुसारात् भाष्यबलाच्च कैवल्यपरमितीदमप्रकम्प्यम्; ब्रह्मसायुज्यरूप-श्रौतपरमसाम्यविलक्षणकेवलसाम्य-परत्वादस्य वचनस्य ।

अत्रायं श्रीदेशिकचरणानामाशयः—न खलु कैवल्यकाम आसुरप्रकृतिः; किंतु विशिष्टदैवसंपत्कः । नो खल्वतिघोरनरकयातनापादकदुष्कर्मपरीतानामपि कालक्रमेण परिपूर्णस्वानुभवरूपपरमसाम्यप्रदानपरः परमकारुणिको रमारमणो भगवान् योगभ्रष्टानपि यथायथमनुगृह्णन् प्राकृतभोगेषु दोषसमीक्षणेन परमुच्छ्रायं प्राप्तं कैवल्यविषये किञ्चिच्चलितचित्तमपि स्वभक्तं सर्वथोपेक्षिष्यते । अतः प्रकृतिनित्यत्वेऽपि प्राकृतानुभवादिव आत्मनित्यत्वेऽपि तन्मात्रानुभवरूपा-दल्पास्वादादवश्यमेव मोचयिष्यति । अवश्यञ्च पञ्चाग्निविद्याफलमान्तरालिकं कैवल्यमनित्यम् । स्मर्यते च, सर्वे च्यवनधर्माण इति । "जरामरणमोक्षाय," "सर्गेऽपि नोपजायन्ते" इत्यादिकं त्वस्य केवलस्य सूक्ष्मदेहमात्रभाजो महाप्रलयप्राप्तेः प्राक् देहेन्द्रियक्षयप्रसक्त्यभावात् स्थूलदेहसंश्लेषविश्लेष-रूपजननमरणभागिता ब्रह्मरात्रिभूतेष्ववान्तरप्रलयेषु सृष्टिमध्ये च न भवतीत्येवमर्थकम् । अत एव कैवल्यप्रस्तावे अपुनरावृत्तिपदं गीताभाष्ये अपुनरा-वृत्तिरूपमात्मानमिति आत्मविशेषणतयोपवर्ण्यते । ब्रह्माण्डादेरनित्यतया स्थल-विशेषावच्छिन्नात्मानुभवाभावेपि, आत्मानुभवं प्राप्तस्य, 'नेहाभिक्रमनाशोऽस्ति' इत्युक्तरीत्या मनस्समाधानेनानायासेनात्मानुभवस्य न कदापि भङ्ग इत्येतावतापि तन्नित्यत्वगिरां निर्वाहः स्यात् । अतोऽकृत्स्नानुभवस्तद्रूप एव सन्न नित्य इत्यलं विस्तरेण । अचर्वितस्याधिगमनार्थमेतावदुक्तम् । परत्र तु पराक्रान्तं पूर्वैरिति ॥

## दिव्यमङ्गलविग्रहः

परव्यूहविभवहार्दार्चाभेदेन भगवतः पाञ्चविध्यवर्णनं तदीयदिव्यमङ्गलविग्रहमादायेति सर्वसंप्रतिपन्नमेतत् । तत्र परवासुदेवरूपं परमे पदे स्थितं नित्यमित्यपि निर्विवादम् । तत एव सर्वेषां भगवद्रूपाणां प्रादुर्भावः । व्यूहरूपेषु पूर्वपूर्वमुत्तरोत्तरस्य कारणम् । 'कृष्णरूपाण्यनन्तानि', 'अर्चारूपी भगवान् आगमान्ताचार्यरूपेणाविर्बभूवे'त्यादिप्रमाणसंप्रदायबलात् अवताररूपाद्य्यनेकानि रूपाणि सति संकल्पे भवन्तीति ज्ञायते । तत्रात्र ग्रन्थे किञ्चिदुक्तमवधेयम्—"स नित्यः, 'सदैकरूपरूपाये'त्यादौ तद्रूपस्यैकरूप्यप्रतीतेः । (रूपशब्दद्वयप्रयोगात् वचनमिदं न स्वरूपविषयम्, किं तु दिवमङ्गलविग्रहविषयमित्याशयः । व्यक्तमिदं श्रुतप्रकाशिकायाम्) कृष्णाद्यवतारेष्वपि तद्देहस्याविर्भावतिरोधानमात्रम् । न च कथं विकाराद्यभावे रामादिनानारूपत्वमिति; तद्देहस्यापि शक्तिमयत्वेन सर्वप्रकारेण दर्शनयोग्यत्वात् ........ यथा धृतराष्ट्रार्जुनाभ्यां तद्देहस्यैव विश्वाधारत्वादिदर्शनम् ........अत एव हि, 'दर्शयामास पार्थाय परमं रूप'मित्युक्तिः । अन्यथा 'सृष्टवान्' इत्युक्तिः स्यात् । यथा विश्वाधाररूपस्य तिरोधानम्, तथा कृष्णाद्यवतारेष्वपि तिरोधानप्रकारविशेषाः........"इत्यादि । अनेन सर्वमपि रूपं नित्यमिति निरूप्यत इव । अर्चारूपविषयेऽप्येवमेवायं मन्ये मन्यत इति ।

## उपसंहारः ॥ श्रीराममिश्राः

एवं श्रीभगवद्रामानुजस्वामिपादसिध्दान्तप्रमेयनिरूपणप्रवणस्यास्य प्रायः श्रीराममिश्रनामधेयस्वपरमगुरुप्रदर्शितेन पथा संचरणमेव समीहितं लक्ष्यत इति अत्र ग्रन्थे तत्रतत्र, 'तदुक्त' मिति निर्दिष्टाः कारिकाः नूनं तदीया एव स्युः । ते च श्रीराममिश्राः श्रीभाष्यकृदन्तेवासिनः तन्नियमितेषु चतुःसप्ततिसंख्यातेषु सिंहासनाधिपतिष्वन्यतमभूता इति गुरुपरम्पराप्रभावग्रन्थतोऽवगम्यते । तत्र तेषां तनियन्श्लोक एवमदर्शि—

"नौमि लक्ष्मणयोगीन्द्रपादसेवैकधारकम् ।
श्रीरामं क्रतुनाथार्यं श्रीभाष्यामृतसागरम् ॥ "

इति । पीठाधीशानां सर्वेषां साधारणं तनियन्पद्यञ्च—

"रामानुजार्याच्छ्रुतिमौलिभाष्यमर्थं रहस्यं द्रमिडश्रुतीनाम् ।
संप्राप्य तेनैव गुरूकृतांस्तान् भजे चतुस्सप्ततिपीठसंस्थान् ॥"

इत्येवम् । एवं श्रीभाष्यकारेभ्योऽधिगतश्रीभाष्यार्थार्था एव सन्तस्ते श्रीराममिश्राः उभयवेदान्तसिंहासनाधीश-द्रमिडोपनिषद्भाष्यकार-श्रीयतिराजामृतोदधिचन्द्रभूत-श्रीकुरुकेश्वरश्रीपादसेवां विधाय, तेषु लघुनव्यग्राम (சிறுபுத்தூர்) निवासनिरतेषु, त्रिः श्रीभाष्यं ततः श्रुतवन्तः, तेषु तं देशं विहाय प्रस्थितेषु हितोपदेशं प्रार्थितवन्तः एवं तैरुपदिष्टाः, 'भाट्टप्राभाकरमीमांसा-प्रमेयनिरूपणनैपुणीं श्रीभाष्यार्थव्याख्याप्रपञ्चनपाटवञ्च स्वात्मन्यनुसंधाय समुन्नतिर्न वोढव्या । श्रीभाष्यकारचरणमेव शरणमिति दृढाध्यवसायेन भाव्यम्'' इति च कस्मिंश्चित् गुरुपरम्पराप्रभावग्रन्थे (१८२-पु) लिखितं लक्ष्यते। एवं श्रीराममिश्रविषय इव सर्वेषामपि गुरूणां विषये तैस्तैः पूर्वैर्हितोपदेशः ईदृश एव कृतस्तत्र निबद्धोऽस्ति । अनेन श्रीराममिश्राणां पूर्वमीमांसापारदृश्वता प्रस्फुटमवगम्यते; तथैव तदनुयायिनि प्रकृतग्रन्थकारेऽपि । अयं श्रीभगवद्रामानुजस्वामिपादप्रावण्ये सर्वान् अयमतिशिश्ये इति साम्प्रदायिकवाक्यतो विज्ञायते, यद् व्यलेखि द्रमिडभाषायाम्, "எம்பார், பட்டர், நஞ்சீயர், வடக்குத்திருவீதிப்பிள்ளை இவர்களும், 'சாமபர்வனிஷ்டர்களில் சோமாசியாண்டானுக்கு ஈடானவர்களில்லை. அவர் வாக்கால் எம்பெருமானார் என்றால் திருநாமம் நிறம் பெறும்' என்று பணிப்பார்கள்" इति । ईडुग्रन्थे च, "சோமாசியாண்டான் எம்பெருமானாரென்றால் திருநாமம் நிறம்பெறுமா போலேயும்" इति सूक्तिर्जागर्ति" इत्याहुः ।

श्रीकुरुकेश्वरदेशिकपदप्रावण्यञ्च तात्कालिकसर्वगुरुसाधारणम्; श्रीपराशरभट्टपादा अपि स्वशिष्येभ्यो वेदान्तियतिभ्यो भगवद्विषय इति प्रसिद्धां श्रीकुरुकेशप्रणीतां श्रीषट्सहस्रिकां सम्यगध्यापयामासुरिति, तेऽपि तत्र प्रवणा एव सन्तः नवसहस्रिकां निबबन्धुरिति च (२४१-पु.) तत एवावगम्यते । श्रीकुरुकेश्वराः श्रीक्रतुनाथार्यप्रभृतीनां सर्वेषां द्रामिड-सूक्त्यर्थोपदेष्टार इत्यत्र न कश्चिद् विवदेत ।

## श्रीदेशिकपरिचयः

सोमाशियाण्डान् इति द्रामिडोपनामधेयाः श्रीराममिश्रास्त इमे श्रीमद्वेदान्तदेशिकैः बहुत्र सप्रशंसं समुत्कीर्तिताः सन्ति । अभयप्रदानसारे (४),

"सकृदेव प्रपन्नाय तवास्मीति च याचते ।
अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम ॥"

इति श्रीमद्रामायणश्लोके 'सर्वभूतेभ्य' इतीदं पञ्चम्यन्तमिति केचिद्व्याचख्युः; (सोमाशियाण्डान्) श्रीक्रतुनाथपर्यन्तास्तु चतुर्थ्यन्तं निरवहन् । द्वयोरपि पक्षयोः स्थितानि गुणदोषतत्समाधानानि तत्तद्ग्रन्थत एव द्रष्टव्यानि । तत्र पञ्चमीपक्षे, प्रपन्नायेत्यस्य संकोचाभावात् प्रपत्तेः सर्वाधिकारत्वं सिद्ध्येत् । चतुर्थीपक्षे सर्वाधिकारत्वं कण्ठोक्तम्' इत्यादि वर्णयन्त एतत्पक्षे मनागादरमपि दर्शयन्तीव । चरमश्लोकाधिकारे, "अधिकारं पुरस्कृत्योपायस्य निरपेक्षताम् । एकशब्देन वक्तीति केचिद् वाक्यविदो विदुः" इतीदमपि स्यादेतदभिप्रायम् । इमे हि प्रसिद्धाः वाक्यविदः—मीमांसकाः । न्यायसिद्धाञ्जने च आकाशादिघट्टे, व्यष्टिशरीरप्रस्तावे, अनन्तत्वनिरूपणे, सुषुप्तिदशाधर्मभूतज्ञानविषये, स्पर्शप्रस्तावे, जातिघट्ट एवमन्यत्र च विवरणषडर्थसंक्षेपग्रन्थदर्शितार्थकीर्तनेन युक्तायुक्तवैशद्यमाविरकारि । विस्तरेण च श्रीविषये तेषामाशये षडर्थसंक्षेपग्रन्थं तथैवानूद्य ऐकरस्यं व्युदपादि । एवं ग्रन्थान्तरेऽपि ।

## मेघनादारिवंशः

एतद्वंशप्रसूतस्य प्रकृतस्य मेघनादारिसूरेर्विषये यावल्लाभं वैशद्यमधिगमयितु मुचितोऽयमवसर इति विभाव्य, तद्वंशीयाः संप्रति बेङ्गळूर्नगरादिषु नुग्गुहळ्ळि इति कुलव्यपदेशेन विलसन्तीति च विज्ञाय तेष्वन्यतमाः सर्वतोमुखवैदुष्याः बहोः कालात् परिचिताः श्री. उ. वे. श्रीनारायणार्या मया पत्रिकामुखेन एतद्विषये यावदधिगमं वैशद्यमधिगमयितुमभ्यार्थ्यन्त । तदात्वे तेषां तत्रासंनिधानं ग्रामान्तरगमनञ्च आवेदयतैव विद्वद्वरेण तेषां पुत्रेण महागुणेन विशदं पत्रं मह्यमलेखि । पुनश्च विशेषान्तराणि पुनः पृष्टवता मया तत एव पत्रिकामुखेन विदितानि । एवं ततः पत्रद्वयमुखेन समधिगतमर्थं तस्यैव विशदमधुरवाङ्मयमिश्रया सरण्या प्रियवाचकेभ्यो निवेदयन् प्रकृतनयद्युमणिकारविषये किमपि वैशद्यं विधित्सामि ।

## श्रीराममिश्रादिचरितम्

श्रीमदहीन्द्रपुराभ्याशे श्रीवैष्णवसम्पत्समृद्धिशालिनि श्रीमङ्गलाख्ये अग्रहारे (திருவஹீந்திரபுரத்திற்கு அருகில் திருமங்கலம்) भववर्षेऽवतीर्णः श्रीराममिश्रः । अस्य पिता आत्रेयान्वयतिलकः श्रीमान् यज्ञदीक्षितः । हारीतान्वयचन्द्रमसः सर्वक्रतुदीक्षितस्य केशवसोमयाजिनः (भगवद्भाष्यकाराणां पिता हारीतान्वय आसूरिकेशवसोमयाजीति सुप्रसिद्धमेतत् ।)

पुत्री श्रीमङ्गावल्ली अस्य जननी । वेदवेदाङ्गकाणादजैमिनादिदर्शनपारदृश्वान-मात्मनः कुमारं श्रीयज्ञदीक्षितः श्रीरङ्गमध्युषितवतोऽधिगतमातुलभावस्य भगवद्रामानुजाचार्यस्य संनिधिं प्रेषयामास परब्रह्मविद्याधिगमाय । पाण्डित्यं प्रतिभां प्रवचनप्रावीण्यञ्च प्रत्यक्षीकृत्य परमया प्रीत्या श्रीभाष्यस्य प्रवचने व्याख्याग्रन्थविधाने च भगवद्भाष्यकारनियुक्तः सन् यथानिदेशमनुतिष्ठन् विरराजैष सूरिः । आचार्यप्रेरणया श्रीकुरुकेश्वरस्य श्रीषट्सहस्रीसंख्यद्रमिडो-पनिषद्भाष्यकृतः संनिधौ अधीतद्राविडाम्नायसर्वार्थ एषः । आचार्याणामादेश-मवतंसितवानेष श्रीयादवाद्रौ (திருநாராயணபுரம்) भगवदालये दिव्यसूक्त्युपक्रम (திருப்பல்லாண்டு தொடக்கம்) कैङ्कर्यरतिरुवास । अद्यापि तद्वंश्यैः कैङ्कर्यमिदमविच्छिन्नं निर्वर्त्यते । शिष्यैर्भक्त्या परमया प्रशस्य मुक्ताकिरीटधारणमयं कारितो विशेषेण बहुमानित आसीत् । कदाचित् कावेरीपरिसरे विधिवदनुष्ठितक्रतुं श्रौतप्रक्रियायामपि परं नैपुणमधिगतवन्तमेन-माचार्याः क्रतुनाथ इति बिरुदेन संभावयामासुः । तदारभ्य सोमाशियाण्डान् इति द्रामिडनाम्ना प्रथां प्राप । वादाहवेषु विशेषतो जयसंपदा संभूषितमेनमनु-गृह्णाना आचार्याः क्षुद्रोपद्रवशमनचणं श्रीनारसिंहमन्त्रमुपदिश्य श्रीभूसहितां योगनृसिंहमूर्तिमदुः ; या तद्वंश्यैरद्याप्याराध्यमानाऽस्ति । एतद्विषयेऽनुसंधीयमानाः श्लोकास्तावत्—(मङ्गलमालिकायाम्)

> "श्रीभाष्यं शतशो येन सत्पात्रेषु प्रवर्तितम् ।
> यतीन्द्रशासनात् तस्मै श्रीरामायास्तु मङ्गलम् ॥"

> "शासनाद् यतिराजस्य स्थिताय यदुभूधरे ।
> षडर्थादिग्रन्थकर्त्रे श्रीरामायास्तु मङ्गलम् ॥"

> "भक्त्या शिष्यैः कृतं मुक्ताकिरीटममलं सदा ।
> प्रीत्या धृतवते तस्मै यज्ञनाथाय मङ्गलम् ॥ "

इति । अद्यापि श्रीराममिश्रविग्रहे किरीटरत्नं संदृश्यत इति चाहुः ।

एवञ्च गुरुतल्पजोऽयं श्रीराममिश्रः क्रतुनाथः सार्वभौमवैदुष्यसंपन्नो महानुभावो भगवद्भाष्यकारभागिनेयभावमान्यः इति, यथा श्रीकुरुकेश्वरदेशिको द्रमिडोपनिषद्भाष्यस्य प्रणेता, यथा मुदलियाण्डान् इति प्रसिद्धः श्रीदाशरथिः, यथा எங்களாழ்வான் इति प्रसिद्धः श्रीविष्णुचित्तः प्रमेयसंग्रहविष्णुपुराण-व्याख्यानादेर्विरचयिता, यथा च நடாதூராழ்வான் इति प्रसिद्धो वरद-

विष्णुमिश्रो मानयाथात्म्यनिर्णयस्य निर्माता, "ज्ञानोत्तमोद्धतिनिराकरण प्रतुष्यद्रामानुजार्यकरुणापरिणाहपात्रम् । वत्सान्ववायतिलकं वसतिं गुरूणां वन्दामहे वरदविष्णुगुरुं वरेण्यम्" इति तनियन्पद्यभाजनम्—तथाऽयं श्रीराममिश्रोऽपि तदात्वे सर्वमानितः सुप्रसिद्धश्चेति च प्रतिपन्नम् ।

अनेन निर्मिताश्च निबन्धाः—

१. श्रीभाष्यविवृतिः,
२. वेदार्थसंग्रहविवरणम्,
३. षडर्थसंक्षेपः,
४. तत्त्वसारः,
५. तत्त्वदीपिका,
६. वेदान्तसंग्रहः,
७. द्रमिडसंहिता,
८. यागनिर्णयः
९. आह्निकम्,
१०. श्रीभगवद्रामानुजदयाशतकम्,
११. गुरुगुणावली,
१२. गुरुपरम्परानुसंधानम्'
१३. प्रपन्नगायत्रीशतकम,
१४. रामानुजपदयुगली,
१५. रङ्गस्तुतिः
१६. शरणागतिशास्त्रम्

इति षोडशेत्याहुः । कतिपयदिव्यप्रबन्धविषये तत्तत्कर्तृविषयाणि तनियन्पद्यानि गाथात्मकानि प्रसिद्धानि अन्यानि चैतत्कृतानीति वदन्ति—यथा—गोदासूक्तेः 'கோலச்சுரிசங்கை' इति, महाश्रीसूक्तेः 'பாங்கத்தனியே' इति, இராமானுசநூற்றந்தாதிप्रबन्धस्य, இனியென் குறை' इति, श्रीविष्णुचित्तदिव्यप्रबन्धस्य च 'காட்டேடயசாடுகத்தின்?' इति ।

परंतु नैकोऽपि ग्रन्थ इदानीमुपलभ्यते । केवलं श्रीमद्वेदान्तदेशिकानूदित-कतिपयभागदर्शनेन ग्रन्थशैल्याः अवधारणं भवति । ततो गभीरसंक्षिप्तमहिष्ठ वचोगुम्भनोऽयमिति विज्ञायते ।

अस्य श्रीराममिश्रस्य पुत्रशिष्यपरम्परा चैवं प्रथते—

अस्य ज्येष्ठस्तनयः—
२. श्रीमान् वरददेशिकः
३. ,, पुण्डरीकाक्षः
४. ,, राममिश्राध्वरी
५. ,, श्रीरङ्गनाथः
६. ,, नाथार्यः
७. ,, मेघनादारिः
८. श्रीमान् नतार्तिहृद्देशिकः
९. ,, श्रीरामनार्यः
१०. ,, गोविन्दार्यः
११. ,, श्रीवासार्यः
१२. ,, श्रीनृसिंहार्यः
१३. ,, अप्पयार्यः
१४. ,, श्रीमान् रमावासार्यः

| | | | |
|---|---|---|---|
| १५. | श्रीमान् श्रीनिवासदेशिकः | २०. | श्रीमान् गोपालार्यः |
| १६. | ,, श्रीमल्लक्ष्मणयोगी | २१. | ,, श्रीवेंकटार्यः |
| १७. | ,, गोपालार्यदेशिकः | २२. | ,, जनार्दनार्यः |
| १८. | ,, श्रीशैलदेशिकः | २३. | ,, श्रीनिवासार्यः |
| १९. | ,, रमावासार्यः | २४. | ,, गोपालार्यः इत्येवम् । |

इतः, प्रकृतो मेघनादारिसूरिः श्रीराममिश्रात् सप्तम इति विज्ञायते ।

अनेन विद्वद्वरिष्ठेन विरचिताश्चत्वारः प्रबन्धा इति स्पष्टमाहुः,

| | | | |
|---|---|---|---|
| १. | नयप्रकाशिका, | २. | नयद्युमणिः, |
| ३. | श्रीभाष्यभावाङ्कुरः, | ४. | मुमुक्षूपायसंग्रहश्चेति । |

अन्ये च केचित् प्रबन्धाः प्राणायिषत; परं नाम्नापि न बुध्यन्त इति चाहुः । शरणागतिशास्त्रमेतत्कूटस्थकृतमेनेन साक्षादवालोकि न वेति न जानीमः । प्रपत्त्यादिविषये अस्याभिप्रायमेवं वर्णयन्ति—मोक्षसाधनविद्यात्वाविशेषात् भक्तिरिव प्रपत्तिरपि नियताधिकारिविषयैवेति त्रैवर्णिकानामेवाधिकारः; न सर्वेषाम् । त्रैवर्णिकस्त्रीणां पत्युरनुमतौ सत्यां विद्यास्वीकारो घटते । गार्गीमैत्रेयीप्रभृतयः स्त्रियो विद्याधिकृता हि श्रूयन्ते । नूनं प्रणवोच्चारणे तासामपि अधिकारो व्यवस्थापितः । दर्शपूर्णमासादिकर्मानुष्ठाने तासां मन्त्रोच्चारणाधिकारदर्शनात् अष्टाक्षरादिमन्त्रोच्चारणं न दुष्यति । प्रणवरहीनस्य चाष्टाक्षरादेर्मन्त्रत्वमेव न विद्यते । तदा च केवलभगवन्नामोपदेशः स्यादित्येवं भक्तेरिव प्रपत्तेरप्यसकृदनुष्ठेयतामयमातिष्ठते । अत एव मन्त्ररत्ने प्रपद्ये इति वर्तमाननिर्देशः । श्रीभगवद्रामानुजस्वामिपादैश्च, "द्वयमर्थानुसंधानेन सह सदैवं वक्ता" इति, "ततश्च प्रत्यहमात्मोज्जीवनायैवमनुस्मरेत्" इति च ह्यन्वग्राहि । अतो भक्तिविषये आवृत्तिपरं सर्वं शास्त्रमत्राप्यतिदेष्टव्यमिति एतन्निरूपणप्रक्रिया । सर्वमिदं मुमुक्षूपायसंग्रहे स्यात् । अत एव श्रीमति रहस्यत्रयसारे स्थिरीकरणभागादौ एवमादीन् विषयान् विचार्य स्वस्वपूर्वसिद्धान्तमाचार्याः प्रमाणपुरस्सरमुपापादयन्निति वक्तव्यं भवति ।

एतद्विषयं तानियन्पद्यं तावत्—

"आत्रेयनाथगुरुवर्यकृपात्तवेद-
युग्मान्तसारमतुलाद्भुतसच्चरित्रम् ।

टीकाकृतं यतिपुरन्दरभाष्यसूक्तेः
श्रीमेघनादरिपुसूरिमहं प्रपद्ये ॥ "

इति । अन्यच्च प्रशस्तिपद्यम्—

"मेघनादारिगुरवे करवाम नमस्क्रियाम् ।
यदुक्तिशरजालेन वादिशक्रारयो जिताः ॥ " इति ।

आञ्जनेयवन्दनमेतत्कृतं वैष्णवसंमतं न वेति विप्रतिपद्यन्ते । परमैकान्तिनां प्रपन्नानाममुमुक्षुजनवन्दनमनुचितमिति केचिन्मन्यन्ते । 'वैष्णवो वैष्णवं दृष्ट्वा दण्डवत् प्रणमेद् भुवि' इति वचने जागरूके मुमुक्षुबुभुक्षुभेदकल्पनया कतिपयवर्जनमनुचितम् । न चाममुक्षुराञ्जनेय इति सुसाधम् । भक्तिमार्गा अपि मधुविद्यादयोऽवान्तरैश्वर्यसंवलितममृतं फलन्ति । अन्यथा खलु भक्तप्रपन्न—आर्तदृप्तादिभिदाकल्पनयाऽपि वैष्णवाः केचिदपुरस्कार्याः स्युः । किं बहुना—सर्वसंशयितार्थस्थेयभूताः भगवद्भाष्यकारबहुमताः श्रीकूरनाथा एव आञ्जनेयं प्रणतवन्तोऽस्माकं मार्गदर्शिनो भवन्तीत्यन्येषामाशयः ।

एवं तावदस्य ग्रन्थकर्तुर्विषये यावदधिगमं वैशद्यं व्यधायि । एतत्संतत्यादिविशदावगमौपयिकपत्रिकाद्वयविलेखनेन सुबहूपकृतवति एतद्वंश्ये श्री. उ. वे. श्रीनिवासार्ये सुतरां कृतज्ञोऽस्मि । नूनं यथाधिगमं तत्तद्वंश्यपूर्वपुरुषवृत्तान्तं यदि श्रीवैष्णवाः, किमेवं संकोचेन, सर्वेपि तत्तत्संप्रदायस्थाः प्रचारयितुमद्य वा प्रवर्तेरन् विना वितथैतिह्यकल्पनं तत्त्वमात्रकीर्तनेन, तदा सनातनधर्मनिष्ठमहाजनचरित्रसेवनेन सर्वे धन्या भवेयुः ।

उक्तरीत्या श्रीभगवद्रामानुजार्यभागिनेयभूतात् श्रीराममिश्रतः सप्तमः श्रीमेघनादारिरयम् ; श्रीभगवद्रामानुजार्यप्रियभागिनेयस्य श्रीभाष्यसिंहासनाधिपतेः நடாதூராழ்வான் इति प्रथितस्य श्रीवरदविष्णुमिश्रस्य पौत्रात् नडादूर् अम्माल् इति सुप्रसिद्धात् श्रीवात्स्यवरदार्यात् अधिगतश्रीभाष्यस्य श्रीमदात्रेयवादिहंसाम्बुदाचार्यस्य श्रीरामानुजनामधेयस्य शिष्यश्च श्रीमद्वेदान्तदेशिक इति निरूपणे श्रीमेघनादारेः श्रीमद्वेदान्तदेशिकस्य च नातीव कालविप्रकर्षः—अथापि श्रीमेघनादारिः पूर्व इति पूर्वदर्शिताधिकरणसारावल्यादिभिरवगम्यते ।

अनेन च विस्तरेणैतस्स्थितिकालोऽपि ज्ञातप्राय एव । श्रीभगवद्रामानुजस्वामिपादा हि संयमिसप्तशत्या चतुःसप्ततिसंख्यकैश्च पीठैः संसेविताः श्रीरङ्गमध्यासतेत्याहुः । ततस्तदीयग्रन्थरत्नानामर्थवैशद्यविधानाय, वेदार्थव्युत्पादनायाङ्गोपाङ्गभूतानि विद्यास्थानानि विशिष्टानीव, विविधानि निबन्धनानि निखिलतन्त्रनिष्णातैः शिष्यैर्निबबन्धिर इति ज्ञायते । नैतच्चित्रम्, यत् श्रीभाष्यकृतामन्तेवासिनः तद्ग्रन्थानां सार्वभौमं प्रचारमध्यवसाय बहुप्रकारमुद्युयुजिर इति; यतः तदाचार्यतल्लजा अपि स्वात्मक्लेशमपि सोढ्वा श्रीभाष्यकृतामभ्युदये बद्धपरिकरा एव प्रथिताः, तथाच तदचार्यश्रीपराङ्कुशाभिधानमहनीय महापूर्णविषयो मान्यः श्लोकः—

"आचार्यात् यामुनेयादधिगतनिगमान्तार्थजातं प्रपत्तिश्चोपादिक्षद्रहस्यान्यपि यतिपतये किञ्च तद्रक्षणार्थम् ।
चोळेन्द्रं प्राप्य चोक्त्वा सदसि, 'परपुमान् श्रीपतिर्हि'ति पीडां
शारीरीं तत्कृताञ्चाप्यसहत, मनवै तं महापूर्णमार्यम् ॥" इति ।

श्रीमहापूर्णाः श्रीभाष्यकृतः प्राणापायशङ्कया स्थलान्तरं प्रस्थाप्य स्वयं तत्स्थाने स्थित्वा श्रीपतिपारम्यं शैवस्य राज्ञः पुरस्तात् प्रतिपादयामासुः, तन्मूलां दूराजकृतां हिंसाञ्च विषेहिरे । शारीरपीडामप्यनुभूय शारीरकपरमार्थस्थापनमादधिर इति ।

अत एव हि श्रीनिगमान्तमहादेशिकैरित्थमकथि—

"पत्युः संयमिनां प्रणम्य चरणौ तत्पादकोटीरयोः
संबन्धेन समिध्यमानविभवान् धन्यांस्तथान्यान् गुरून् इति ॥

यस्य बहुश्रुतस्य भगवद्रामानुजस्वामिपादसर्वप्रबन्धतदर्थसमग्रधारणसंपन्नस्य सर्वतन्त्रसार्वभौमविचारसरणिसञ्चरणचणस्य महनीयस्यास्य मेघनादारिसूरेः श्रीनामधेयमपि विशिष्टाद्वैतसिद्धान्तनिष्णातैरपि न सम्यगवधृतमासीत्—तथा ह्यधिकरणसारावलिव्याख्याने अधिकरणचिन्तामण्यादौ प्रसक्तनिर्देशमपीदं नामधेयं पश्चिमैर्मेघनाद इत्येवालेखि चामुद्रि च । तन्नूनमिन्द्रजितो राक्षसस्य नामेति निर्ज्ञाय दैवप्रकृतिकलोकधार्यतामसंभावितामालोचितवद्भिरिवान्यैः मेघनाथेति परिष्कृत्यामुद्रि—तत्र का कथा तस्य ग्रन्थदर्शने । केवलं पुनरस्मत्प्रियसुहृन्मुद्रितानवसितस्य सर्वव्याख्यासमेतश्रीभाष्यकोशस्य अदसीयनयप्रकाशिकाग्रन्थसहितस्य दर्शनाद्वा बहुलूर-

प्रान्तवासितद्वंश्यविद्वत्संसर्गवशाद्वा, एवम्भूतेन मार्गान्तरेण वा मेघनादारिरिति समग्रं नाम समधिगन्तव्यमासीत्—तस्यास्य श्रीमद्वेदान्तदेशिकचरणाद्या-चार्यानप्यपेक्ष्य प्राचीनस्य न्यायसुदर्शनकारवरदनारायणभट्टारकाद्यर्वाचीनस्य महात्मन इदं तादात्विकीं श्रीवैष्णवसिद्धान्तप्रचारपरिस्थितिं प्रत्यक्षयद् ग्रन्थरत्नं प्राच्यग्रन्थप्रकाशनपरमोत्साहैः मान्यैर्मद्रनगरराजकीयप्राच्यग्रन्थ-भाण्डागाराधिकृतैः परिष्कृत्य मुद्रयितुमिष्टं हस्ते मेऽर्पितमासीत्। अथ च तद्भाण्डागारस्थकोशद्वयम्, अडयारकोशालयस्थं कोशमेकञ्च मातृकां कृत्वा अप्रचारात् अत्यन्तं लेखकप्रमादाच्च अशुद्धिबहुलम् अनेकशास्त्रार्थ-विचाररूपतया दुरवगाहञ्च सदपि यथाशक्ति परिष्कृत्य संयोजितटिप्पणी-कमेवं प्राकाश्यं प्राप्यते; यत्र मे वेंकटाद्रिहराभिजना एतन्नगरवास्तव्याः विद्वद्वराः श्री. उ. वे. कृष्णमाचार्याः मङ्गलश्लोकनिर्माणेन टिप्पणमारभ्य कतिपयटिप्पणांशसंयोजनशोधनिकासमीक्षणादिना साचिव्यं विधाय सहैव सर्वं यथावन्निरवर्तयन्। अत्यन्ताशुद्धेषु स्थलेषु तत्तच्छास्त्रमर्यादानुरोधेन मनाक् स्वातन्त्र्यमवलम्ब्य शोधनं कर्तव्यमापतितं ग्रन्थसामीचीन्यसंपिपाद-यिषया नोपेक्षितम्; एवमपि यत्र क्लेशेनापि कथञ्चिदर्थवर्णनस्यावसरो ऽभ्यूहपदमासीत्, तत्र साहसं सर्वथा परित्यक्तमिति संतोष्टव्यम्। उभयोर्मुद्रयितृत्वाच्चोभयाभिमतमिवान्यतराभिमतमपि टिप्पणे संयोजितमेव। मातृकाभूतग्रन्थलेखकोऽपि सुबहु परिश्रम्यालेखीदिति अन्ते तेन कृतविनिहितः कश्चन श्लोक एव नः प्रतिबोधयति, योऽप्यन्ते टिप्पण्यामस्माभिः समयोजि। सर्वशास्त्रवैदुष्यसमृद्धस्याप्यस्य ग्रन्थकृतो निर्णयाः केचिदर्वाचीनैरभिज्ञैर्नातीवाऽऽ-दृता इति, एतस्य कालात् पश्चादत्र विशिष्टाद्वैतसिद्धान्ते कियती अभिवृद्धि-रासीदिति चात्र भूमिकायां यथामति विज्ञापितवानस्मि। प्राज्ञाः प्रमाणम्।

तदिह भगवान् श्रियःपतिः स्वप्रेरितप्राज्ञमहाजनपुरस्सरः सुप्रीतः स्यादित्याशास्यत इति शम्।

राजकीयप्राच्यकोशभाण्डागारं समेधताम्।
भारतप्राच्यसिद्धान्तसमाचारप्रचारकम्॥

इति वीरराघवार्यः कृतनयतन्त्रागमान्तनैककृतिः।
श्रीरङ्गलक्ष्मणमुनेः शिष्यो व्यमृशन्नयद्युमणिम्॥

उत्तमूर् - ति. वीरराघवाचार्यः

॥ श्रीः ॥

# ॥ विषयानुक्रमणिका ॥

## १. शरीरलक्षणम्



## २. अध्ययनविधिः

## ३. स्वतः प्रामाण्यम्

## ४. वाक्यार्थप्रदीपः

## ५. अन्विताभिधानम्

## ६. शब्दनिरूपणम्



## ७. श्रुतिलिङ्गादिनिरूपणम्

## ८. यथार्थख्यातिनिरूपणम्

पु.



## ९. उपोद्घातनिर्णयः



## १०. कालनिरूपणम्



## ११. प्रमाणनिरूपणम्

## १२. प्रमेयनिरूपणम्

॥ शुभमस्तु ॥

श्रीः

# नयद्युमणिः

## मेघनादारिसूरिकृतः

### १. शरीरलक्षणनिरूपणम्

आस्येन संदर्शयता हयाभा[1]-
माकण्ठमासादितपौरुषेण ।
वाणी मदन्तः परमेण पुंसा
संलापमुल्लोलमुरीकरोतु[2] ॥

[3]सूक्ष्मस्थूलचिदचिच्छरीरं ब्रह्मैव कारणं कार्यं चेति दर्शनम् । तत्र सांख्या[4] आत्मादेर्ब्रह्मशरीरत्वेऽनुपपत्तिमाविष्कुर्वाणाः प्रत्यवतिष्ठन्ते । तथाहि—

1. हयाङ्ग. A. 2. मुपातनोतु. M.

श्रीः

नमस्कृत्वा हयवदनं
लक्ष्मणमुन्यादिदेशिकांश्चापि ।
टिप्पणिरेषा लघ्वी
क्रियते विशदाऽधिनयद्युमणि ॥

ग्रन्थेऽस्मिन् पश्चिमग्रन्थमतभेदप्रदर्शनम् ।
दुर्बोधबोधं चोद्दिश्य टिप्पण्येषा प्रवर्त्यते ॥

3. सूक्ष्मेत्यादि । सूक्ष्मचिदचिच्छरीरकं ब्रह्म कारणम् । स्थूलचिद-चिच्छरीरकं ब्रह्म कार्यमिति सिद्धान्त इत्यर्थः ।

4. सांख्या इति । शरीरलक्षणम् "चेष्टेन्द्रियार्थाश्रयः शरीरम्" इति न्यायदर्शने सूत्रकृता निरुक्तम् । अनूदितं च तदनुयायिभिः "चेष्टाभोगेन्द्रियाश्रयः शरीरम्" इति । अत्र लक्षणत्रयं विवक्षितम् । प्रथमं चेष्टाश्रयत्वं प्रयत्नाधीनक्रिया-विशेषसमवायित्वरूपम् । द्वितीयमिन्द्रियाश्रयत्वम् । तृतीयमर्थाश्रयत्वम् । तत्र रूपरसादीन्द्रियार्थाश्रयत्वस्य शरीरेऽसंभवात्, तदधीनसुखदुःखभोगद्वारा तदा-श्रयत्वस्यापि भोक्तरि जीव एव संभवात् अन्याहशं भोगायतनत्वं तदवच्छेदकत्व-रूपमेष्टव्यम् । तदिदं लक्षणत्रयं दुष्टमिति तदेव परिष्कृतं समुदितं लक्षणमिति सांख्यानां मतमिति तद्ग्रन्थदर्शनेन विभाव्य तन्मतं दूषयितुं प्रवर्तितम् ।

आत्मादेर्न शरीरत्वम, तल्लक्षणविरहात् । यस्य पुण्यादिफलसुखादिभोगसाधनमिन्द्रियाश्रयः पञ्चवृत्तिप्राणाधीनधारणः [1]पृथिव्यादिभूतसंघातविशेषो यो येनैवाधिष्ठितः, तत् तस्य शरीरमिति हि शरीरलक्षणम् । भूतसंघातविशेषो येनाधिष्ठित इत्युक्ते, अधिष्ठेयवास्यादेस्तक्षादिशरीरत्वप्रसक्तिः । तन्निरासाय इन्द्रियाश्रय इत्युक्तिः । तद्गोलकेष्वतिव्याप्तिपरिहाराय पञ्चवृत्तिप्राणाधीनधारण इति पदम् । अन्यशरीरस्यापि तथात्वादन्यप्रेर्यत्वसंभवादन्यशरीरत्वप्रसक्तौ तत्परिहाराय यस्य पुण्यादीत्यादि । पित्रादिपुण्यार्जितोक्तलक्षणपुत्रादिशरीराणां पित्रादिशरीरत्वव्युदासाय एवकारः ।

[2]न च चाक्षुषाचाक्षुषपृथिव्याकाशाद्यारब्धत्वे शरीरस्य वायुवनस्पतिसंयोगादिवदचाक्षुषत्वापत्तिरिति वाच्यम्, तस्य कारणपृथिव्यादिद्रव्यावस्थाविशेषत्वात् पृथग्द्रव्यत्वेनारब्धत्वाभावात् । न च [3]लक्षणशरीरस्य स्थावरशरीरेष्वव्याप्तिः; वेदनधर्मास्फूर्तेस्तेषां शरीरत्वाभावात् । मृग(त)गोविषाणादेर्भूम्यादिसंयोगात् शिखारोपणवत् स्थावराणां प्ररोहः स्वाभाविकः । "पञ्चभूतात्मकं वपुः" इत्यादौ च तादृशस्यैव शरीरत्वस्मरणम् ।

न ह्यात्मादीनामेतल्लक्षणम् ।

[4]न चान्त्यावयवविभोगायतनत्वस्य तल्लक्षणता; निरतिशयानन्द-

---

1. पृथिव्यादिभूतसंघातेति । अनेन देहस्य पाञ्चभौतिकत्वमुक्तम् । तार्किकास्तु तन्न मृष्यन्ति । यदाह कणादः—"प्रत्यक्षाप्रत्यक्षाणां संयोगस्याप्रत्यक्षत्वाच्छरीरं पञ्चात्मकं न विद्यते" इति ।

2. न चेति । संयोगस्य केवलमवस्थारूपत्वात् अप्रत्यक्षता युक्ता । शरीरस्य तु प्रत्यक्षाप्रत्यक्षभूतानेकद्रव्यकार्यत्वेऽपि द्रव्यत्वात् अव्यक्तजन्यव्यक्तविशेषस्येव प्रत्यक्षत्वं घटते । अप्रत्यक्षानेकद्व्यणुकारब्धस्यापि त्र्यणुकस्य द्व्यणुकपारस्परिकसंयोगस्येवाप्रत्यक्षत्वाभाव इष्यते परैः । प्रत्यक्षाप्रत्यक्षवस्तुद्वयोपादानकद्रव्यस्य प्रत्यक्षत्वं तर्हि कैमुत्यसिद्धम् । सर्वत्रानुभव एव हि परमं शरणमिति भावः ।

3. लक्षणशरीरस्येति । लक्षणस्वरूपस्येत्यर्थः ।

4. एव लक्षणविशेषनिर्वचनदलकृत्यप्रदर्शनाभ्यां चेष्टाश्रयत्वादेः पृथक् पृथक् लक्षणत्वमाक्षपादाभिमतं प्रतिक्षिप्तमेव । अथ किंचित् परिकृत्य भोगसाधनत्वादेर्लक्षणत्ववर्णनमपि दूष्यते । श्रीभाष्ये नविलक्षणत्वाधिकरणे अपीतिसूत्रे **भोगसाधनभूतेन्द्रियेति** भोगसाधनत्वस्येन्द्रियविशेषणत्वेन निर्देशात् साक्षाद् भोगसाधनत्वस्य लक्षणत्वाविवक्षायां दूषणस्यानुक्तत्वं विभाव्य पृथक् तद्दूषणं यत् विहितम्, तदत्र प्रदर्श्यते । अत्र तु ग्रन्थे, **भोगसाधनमिन्द्रियाश्रय** इति

परमात्मनो [1]भोगाभावेनासंभावितत्वात् । आत्मनामवयवित्वाभावात् अव्याप्तेश्च[2] । लोकसिद्धशरीरेष्वपि न तल्लक्षणसंभवः, वेश्मादिष्वतिव्याप्तेः । यत्र वर्तमानस्यैव सुखाद्युपभोग इति विशेषणोपादानेऽपि नाश्वासः, [3]पिशाचादिनाविष्टशरीरस्य तच्छरीरत्वप्रसङ्गात् । न चास्त्विति वाच्यम्, तन्मोक्षे तस्य विशीर्णत्वप्रसङ्गात् । तच्छरीरेष्वपि पिशाचादेर्भोगो मान्त्रिकदर्शने भीत्यादिलिङ्गात् सिद्धः ।

[4]ननु प्रयत्नवदात्मसंयोगासमवायिकारणक्रियाश्रयः शरीरनिरपेक्षोऽन्त्यावयवीत्यस्य तल्लक्षणत्वम् । तत्र प्रयत्नवदात्मेत्यनेनादृष्टवदात्मसंयोगासमवायिकारण[5]क्रियाधारदहनोर्ध्वज्वलनादीनां निरासः । क्रियाश्रय इति प्रयत्नवदात्मेश्वरपरमाण्वादिसंयोगासमवायिकारणसंयोगाश्रयद्व्यणुकादिनिरासः[6] । शरीरनिरपेक्षेति प्राणाख्यवायोः, अन्त्यावयवीति चरणादीनामपि निरास इति सुस्थं लक्षणमिति चेत्—तन्न । न हि समुदितस्य तल्लक्षणत्वम्, इन्द्रियेष्वतिव्याप्तेः ।

---

भोगसाधनत्वं साक्षाद् विशेषणमिष्टमित्यन्यदेतत् । तत्र हस्तपादादेः शरीरत्वापत्तिपरिहारायान्त्यावयवित्वविशेषितं तत् तेषामिष्टम् । यदाहोदयनः किरणावल्याम्—"यदवच्छिन्न आत्मनि भोगस्तदन्त्यावयवि शरीरम्" इति । तद् दूष्यते—न चान्त्येत्यादिना ।

1. भोगाभावेनेति । अतस्तल्लक्षणमादाय चिदचिच्छरीरकत्वस्य ब्रह्मण्युपपादनमपि दुष्करमिति भावः ।

2. अवयवित्वाभावादिति । अन्त्यावयवित्वं नामावयव्यनारम्भकत्वविशिष्टमवयवित्वम् । अवयवित्वं चावयवसमवेतद्रव्यत्वम् ।

3. पिशाचादिनेति । ननु पिशाचस्यैकजीवशरीर इव जीवान्तरशरीरेऽपि सुखादिसंपत्तिदर्शनात् 'यत्र वर्तमानस्यैव' इति कथं प्राप्नोतीति चेत्, तर्हि जीवस्यैकैकस्यापि परःशतशरीरग्राहितया एकैकशरीरेऽपि तदनन्वयादसंभव एवेति ।

4. अथ चेष्टाश्रयत्वस्य परिष्कृतस्य दूषणम्—नन्वित्यादिना । असमवायिकारणेत्यन्तं बहुव्रीहिवृत्तं द्रष्टव्यम् ।

5. क्रियाधारदहनेत्यादि । "अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनमणूनां मनसश्चाद्यं कर्मादृष्टकारितम्" इति कणादसूत्रे दहनोर्ध्वज्वलनस्यादृष्टवदात्मसंयोगासमवायिकारणकत्वमुक्तम् ।

6. निरास इति । कारणाकारणसंयोगाधीनकार्याकार्यसंयोगाश्रयान्त्यावयविनिरास इत्यर्थः । शरीरनिरपेक्षेति । नन्वेवं शरीरलक्षणे शरीरप्रवेशे आत्माश्रयः ।

न च सर्वभोगायतनं शरीरम्, कस्यापि शरीरस्य सर्वभोगायतनत्वादर्शनात् तल्लक्षणस्यासंभावितत्वात्। न च [1]स्वनामार्हं शरीरम्; परमात्मशरीरत्वेन श्रुतानामात्मनां तथात्वानङ्गीकारात्।

अतो यस्य पुण्यादीत्युक्तमेव लक्षणं साध्विति—

नैतदुपपन्नम्; यस्य पुण्यादीत्यादेर्दुष्टत्वात्; कर्मरहितमुक्तपरमात्मनो-र्देहेष्वव्याप्तेः। "स एकधा भवति" "हिरण्यश्मश्रुर्हिरण्यकेशः" इत्यादौ तयोः शरीरित्वश्रवणात्। "पुण्यपापे विधूय" "अपहतपाप्मा" "न मां कर्माणि लिम्पन्ति" इत्यादौ तयोः कर्माभावश्च सिद्धः।

परशरीरस्य च न भूतसंघातत्वमपि, "न भूतसंघसंस्थानो देहोऽस्य परमात्मनः" इत्यादिस्मृतेः। परमात्मशरीरतया श्रूयमाणात्मादीनां पुण्यादि-फलभोगसाधनत्वाभावात्[2] स्थावरशरीराणां पञ्चवृत्तिप्राणाधीनधारणत्व-क्रियाश्रयत्वयोरभावादव्याप्तेश्च। स्थावराणामपि चेतनशरीरत्वम् "आण्डजं जीवजमुद्भिज्जम्" "याति स्थावरताम्" इत्यादिश्रुतिस्मृतिसिद्धम्। चैतन्यास्फूर्तिस्तु देहविशेषसंबन्धनिबन्धना। चैतन्यतारतम्यं च पश्वादौ दृश्यते। शरीरशब्दश्च न गवादिशब्दवत् [3]आकृतिविशेषवाचकः; अननुवृत्ताकार-कीटपश्वादिषु तद्दर्शनात्; आत्मादेरपि शरीरत्वश्रवणाच्च।

---

न; एतच्छरीरपदेन प्रयत्नवदात्मसंयोगासमवायिकारणकक्रियाश्रयान्त्यावयवीत्ये-तावन्मात्रविवक्षणात्। प्राणरूपावयविनिष्पत्तिस्तु शरीराधीनेति तद्व्युदासः।

1. स्वनामार्हमिति। शरीरशब्दवाच्यत्वं शरीरशब्दप्रवृत्तिनिमित्त-मित्यर्थः। परैरात्मनः शरीरत्वानङ्गीकारात्परमात्मेत्युक्तिः। यद्वा 'देवदत्तो गच्छतीत्यादौ देवदत्तादिपदस्य शरीरे प्रयोग उपचारात्' इति वदता कणादमहर्षिणा देवदत्तादिपदानामात्मवाचित्वं साक्षात्, उपचारात्तु शरीर-परत्वमित्यभिप्रेतत्वात् देवदत्तादिशब्दरूपात्मनामार्हत्वं शरीरस्येति तदेव लक्षणमिति पूर्वपक्ष्याशयः। सिद्धान्ते परमात्मशरीरत्वस्य जीवेष्विष्टत्वात् तत्र परमात्मशब्द-प्रयोगस्याप्रसिद्धया नेदं सिद्धान्तिसंमतमपि भवितुमर्हतीत्युपेक्षणीयमिति खण्डयि-तुराशयः। अत्र, 'परमात्मशरीरत्वेन भुतत्वात् आत्मनां भूमानंगीकाराच्च' इति पा०। तत्तत्त्वं विमृश्यम्।

2. भोगसाधनत्वाभावादिति। लीलारससाधनत्वेऽपि न भोगसाधनत्वम्, नतरां पुण्यादिफलभूतसुखादिभोगसाधनत्वमिति भावः।

3. आकृतिविशेषः संस्थानविशेषः।

अतो [1]नित्यत्वादिवदुपाधित्वाच्च तच्छब्दप्रवृत्तिः । अतो यस्य चेतनस्य यद् द्रव्यं सर्वात्मना स्वार्थे नियन्तुं धारयितुं च शक्यं तच्छेषतैकस्वरूपं च, तत् तस्य शरीरमिति लक्षणम् । [2]न च हस्तपादादिष्वतिव्याप्तिः, पृथिव्याद्यवस्थाविशेषहस्तादेरेव शरीरत्वात् । अवस्थाविशेषापन्नकारणस्यैव हि कार्यत्वम्; तदतिरिक्तवस्त्वन्तरानुपपत्तेः; अवस्थाभेदेनैव व्यवहारान्तरादेरुपपत्तेः ।

'यस्य चेतनस्य यद् द्रव्यं तत् तस्य शरीरम्' इत्युक्ते अनियम्यगृहादिष्वतिव्याप्तिः । तन्निवृत्त्यै नियन्तुं शक्यमित्युक्तिः । यथेष्टं प्रवर्तकत्वं नियन्तृत्वम् । तथापि पुरोहितादिभिः परार्थनियम्यस्य राजादेः पुरोहितादिशरीरत्वापत्तिः । तन्निरासाय स्वार्थे इति पदम् । स्वार्थे—स्वप्रयोजनायेत्यर्थः । [3]प्रथमसूत्रभाष्ये "मनुष्यादिशरीराणामप्यात्मैकाश्रयत्वतदेकप्रयोजनत्व" इत्यत्र तत्प्रयोजनत्वोक्तिः । तथाविधस्वार्थनियाम्यगर्भदासादीनां स्वामिशरीरत्वप्रसङ्गात् तन्निरासाय धारयितुमित्युक्तिः । शेषतैकस्वरूपमिति परमात्मनः स्वस्वरूपेऽतिव्याप्तिपरिहाराय । न हि स्वस्वरूपस्य स्वशेषत्वम् । तच्छेषतैकस्वरूपमिति पिशाचाविष्टदेहस्य पिशाचादिशरीरत्वनिरसनाय; आविष्टदेहस्य पिशाचादिशेषतैकस्वरूपत्वाभावात् । [4]सर्वात्मनेति अयावद्द्रव्यभाविष्वनियम्येष्वतीन्द्रियेष्वतिव्याप्तिवारणाय । यावद्द्रव्यभावित्वं च संस्थानविशिष्टाकारस्यैव । [5]अतश्चेतनविशिष्टदेहाकारपरिणतपृथिव्यादिषु नातिव्याप्तिः । [6]आत्मज्ञाने द्रव्यत्वादियुक्तेऽतिव्याप्तिपरिहाराय आत्मन इत्यल्पाक्षर-

---

1. नित्यत्वादीति । नित्यत्वं हि ध्वंसाप्रतियोगित्वम् । नाकृतिविशेष इति भावः ।

2. **न च हस्तेति** । अवयवातिरिक्तस्यावयविन आरम्भणाधिकरणनिरस्तत्वात् हस्तपादादिकमपि लक्ष्यमेवेति भावः । **अनुपपत्तेरित्यत्र अनुपलब्धेरिति पा०** ।

3. **प्रथमसूत्रभाष्ये** । जिज्ञासाधिकरणभाष्ये अथातःशब्दव्याख्यानान्ते ।

4. **सर्वात्मनेति** । अनेन पदेन यावद्द्रव्यभावित्वं विवक्षितम् । तेन यत् द्रव्यं यावत्स्वसत्त्वं येन नियम्यते ध्रियते च, तत् द्रव्यं तस्य शरीरमिति सिध्यति । जीवोत्क्रमणानन्तरं तच्छरीरस्य विशीर्णतया तत्सत्तानङ्गीकारात् न लक्षणहानिरिति वक्ष्यते । एवं चेदं पदं कदाचिदेव धार्ये नियम्ये, अन्यदा अधार्ये अनियम्ये च क्वचिदतिव्याप्तिपरिहारायेति भावः ।

5. **देहाकारेत्यादि** । देहाकारपरिणतेः पूर्वं तादृशपरिणतिहानेरूर्ध्वं चेत्यर्थः । अतः सर्वात्मनेत्यस्य तादृगवस्थासद्भावं यावदित्यर्थः ।

6. **आत्मज्ञान इत्यादि** । न हि ज्ञानं ज्ञानविशिष्टवेषेणात्मना धार्यं नियम्यं चेति भावः ।

पदोपेक्षयानेकाक्षरपदोपादानम् । चेतनस्य; ज्ञानगुणविशिष्टस्येत्यर्थः । तद्विशिष्टाकारेणैव हि शरीरस्य नियाम्यत्वादिः । न हि ज्ञानगुणविशिष्टाकारेण ज्ञाननियमनादिः । शरीरशब्दस्य पुत्रादिशब्दवत् ससंबन्धिकत्वात् यस्येत्युपादानम् ।

न च मृतशरीरेऽव्याप्तिः; चेतनवियोगसमय एव तस्य विशीर्यमाणत्वेन शरीरत्वाभावात् । तत्र शरीरशब्दस्तु गौणः । रुग्णशरीरस्यापि नियमनार्हत्वान्न तत्राव्याप्तिः । तदर्हत्वादेव हि तत्र रोगमोक्षोत्तरकालनियमनम् ।

न च परस्य परिपूर्णस्य शरीरसाध्यप्रयोजनाभावात् तादृतरस्य न तच्छरीरत्वमिति वाच्यम्; लीलाप्रयोजनसद्भावात् । न च—द्रव्यपदप्रक्षेपात् क्रियागुणेष्वव्याप्तिः; "यज्ञेषु तिष्ठन्" इत्यादौ तेषामपि शरीरत्वं सिद्धमिति वाच्यम्—तेषां शरीरत्वाभावात् । "यज्ञेषु तिष्ठन्" इत्यादयस्तु यज्ञादिक्रियाश्रयद्रव्याभिप्रायाः । अत एव हि यज्ञशरीरिणो भगवतो वराहस्य प्राग्वंशाद्यवयवव्याप्तिः पुराणादौ प्रसिद्धा । क्रियाः स्वद्रव्याश्रयैकस्वभावाः । जातेर्गुणेष्वेवान्तर्भावान्न तत्राव्याप्तिशङ्का । शक्तिसंख्यासादृश्यानि च गुणेष्वन्तर्भूतानि[1] । द्रव्यनियमनादौ च गुणादेर्नियम्यत्वादिः सिद्धः ।

"पञ्चभूतात्मकं वपुः" इत्यादयस्तु विरक्तिजननाय मनुष्यादिशरीरस्वभावकथनपराः । "अपाणिपादः" इत्यादयस्तु परस्य कर्माधीनशरीराभावख्यापनपराः । अतः परमात्मनः स्वव्यतिरिक्तचेतनाचेतनद्रव्यशरीरकत्वं सिद्धम् ।

ननु शेषशेषित्वमेव दुर्निरूपम् । अतो न लक्षणस्य सौस्थ्यम् । न च परोद्देशप्रवृत्तकृतिव्याप्त्यर्हत्वं शेषत्वम्; तत्प्रतिसंबन्धित्वं शेषित्वमिति सुनिरूपं तदिति वाच्यम्; कृतेः कृत्यन्तरव्याप्त्यनर्हत्वेन कृत्यादिशेषत्वाभावापत्तेः । न चान्योद्देशप्रवृत्त्यर्हत्वं शेषत्वमिति वाच्यम्; प्रधानस्यापि भृत्योद्देशेन प्रवृत्तिदर्शनात् तच्छेषत्वापत्तेः । न च प्रधानस्यापि भृत्यपोषणप्रवृत्तिः स्वोद्देशेनैवेति न वैपरीत्यमिति वाच्यम्; भृत्यस्यापि स्वोद्देशेनैव प्रवृत्तेः समत्वादिति चेत्—

---

1. गुणेष्वन्तर्भूतानीति । सिद्धान्ते उपसर्जनत्वातिरिक्तं तार्किकपरिभाषितं गुणत्वं नेष्यत इति भावः ।

## १. शरीरलक्षणनिरूपणम्

तत्र; परगतातिशयाधानेच्छयोपादेयत्वमेव यस्य स्वरूपम्, स शेषः; परः शेषीति [1]व्याप्तलक्षणसद्भावात् तस्य सुनिरूपत्वात्। फलयागयोरपि शेषशेषित्वे फलसिद्धीच्छया यागस्योपादीयमानत्वान्नाव्याप्तिः; फलार्थतयैव यतस्तदुपादानम्।

न च गुणेष्वव्याप्तिः, तेषामपि पुरुषविशेषणत्वे सत्यतिशयाधानेच्छयोपादीयमानत्वात्। परिकरादपि स्वामिन्यतिशयाधानं लोकसिद्धम्। [2]उपादेयता च ज्ञेयता। अनुष्ठानं तत्फलम्। एवं सर्वमपि चेतनजातं परमात्मन्यतिशयाधायकतयैव तज्ज्ञेयमिति तच्छेषमेव। यद्यपि परमात्मनः स्वतःसिद्धातिशयस्य नाधेयातिशयत्वम्, तथापीश्वरत्वादिज्ञानस्य चिदचिदीशितव्याधीनत्वेन धीरञ्जकतयोपासनादिषु तयोरुपादीयमानत्वान्न दोषः। विशिष्टत्वज्ञानं हि विशेषणाधीनमेव। लोके छत्रादयोऽपि च्छत्रित्वाद्यतिशयाधानपराः।

न च परत्वमेव दुर्निरूपमिति वाच्यम्, फलदातृत्वादिना तस्य सुनिरूपत्वात्। अतः शेषशेषिभावोऽपि सुनिरूप इति सुस्थं शरीरलक्षणमिति।

इति
श्रीमदात्रेयनाथसूरिसूनुना मेघनादारिसूरिणा विरचिते
नयद्युमणौ
शरीरलक्षणनिरूपणं नाम प्रथमं प्रकरणम्।

1. व्याप्तलक्षणेति। सर्वलक्ष्यव्यापिलक्षणेत्यर्थः।

2. उपादेयता चेति। गुणादेर्हस्तादिनोपादानायोगात् उपादेयत्वमन्यादृशमिह विवक्षितम्। तच्च ज्ञानमेवेति भावः। अत्रेदमवधेयम्—एतल्लक्षणघटकयोरिच्छाज्ञानयोर्यत्र शेषभूतपुरुषे संभवः, तत्र लक्षणगतिः सुलभा। अचेतनस्य यत्र शेषित्ववत् शेषत्वमपि तत्र, बद्धानां परमात्मशेषत्वविषये च ज्ञानेच्छयोरुपपादनं परमात्मादिपुरुषान्तरज्ञानेच्छाग्रहणेन कार्यम्। अत्र परगतातिशय एव परमप्रयोजनं यस्य, स परं प्रति शेष इत्यभ्युगम्य प्रधानभूतपरोपकारार्हत्वं शेषत्वमिति निष्कृष्टं लक्षणं ज्ञेयम्।

श्रीः

## २. अध्ययनविधिनिरूपणम्

श्रियःपतिर्हयग्रीवो मृणालस्वच्छविग्रहः ।
आकल्पं भजतामीशः सर्वतो विजयश्रियम् ॥
मारुतिश्च चिरं जीयात् सीतावल्लभकिंकरः ।
रामावरजयोगी च नाथार्यश्चात्रिगोत्रवान् ॥
श्रीमद्रामानुजाचार्यसंमतोऽर्थो निरूप्यते ।
स्वाध्यायविधिवाक्यस्य शास्त्रारम्भप्रसिद्धये ॥

भगवता भाष्यकारेण भाष्ये पूर्वोत्तरमीमांसयोरैकशास्त्र्यादिप्रतिपादनावसरे अध्ययनस्य पैरन्यथा निरूपितत्वात्[1] सम्यक् तदर्थः संक्षेपेण

1. अन्यथा निरूपितत्वादिति । प्राभाकरैः स्वाध्यायस्यार्थपरत्वमुपपादयद्भिः पूर्वपक्ष एवं प्रवर्तितः—यूपाहवनीयादिशब्दवदाचार्यशब्दोऽप्यलौकिकधर्मविशिष्टवाची । स चाचार्यकरूपोऽलौकिकधर्मः सनियमाध्ययनजन्यः । अध्यापनस्योपनयनमङ्गम् । उपनीतेन चाध्ययने क्रियमाणेऽध्यापनं संपद्यत इत्यध्यापनविधिप्रयुक्तमुपनयनमध्ययनं च । तत्रोपनयनमध्यापनस्याङ्गम् । अध्ययनं तूपकारकमात्रमिति विशेषः; 'अध्ययनेनाध्यापनं भावयेत्' इति विध्यदर्शनेन तदङ्गत्वायोगात् । तर्हि "स्वाध्यायोऽध्येतव्यः" इति स्वाध्यायस्य कर्मत्वश्रवणात् अध्ययनस्य स्वाध्यायं प्रत्यङ्गत्वमस्त्विति चेत्—तन्न; तव्यप्रत्ययेन विधिना अध्ययनस्यापूर्वार्थत्वावगमात् । अतोऽपूर्वार्थाध्ययनाङ्गं स्वाध्यायः । एवं चाध्ययनस्यार्थज्ञानार्थत्वाभावात् स्वाध्यायो नार्थपर इति मीमांसा नारम्भणीयेति । सिद्धान्तस्तु—अध्यापनविधिप्रयुक्तत्वेऽप्यध्ययनस्याध्येतृमाणवकार्थत्वे संभवत्यध्यापकगताचार्यकरूपबहिरङ्गकार्यार्थत्वायोगात् माणवकार्थत्वे सिद्धे 'अध्येतव्यः' इति शब्दबलादपूर्वार्थत्वमिवार्थज्ञानार्थत्वमप्यर्थाद्भवन्न निवार्यमिति स्वाध्यायोऽर्थपर इति ।

भाट्टैस्तु-आचार्यकं नालौकिकधर्मः । अध्ययनमपि नाध्यापनविधिप्रयुक्तम् । किंतु "स्वाध्यायोऽध्येतव्यः" इति स्वविधिप्रयुक्तम् । तदध्ययनमेवोपनयनाङ्गकम्, उपनयनसंस्कृतमाणवककर्तृकत्वात् । स चाध्ययनविधिर्नियमविधिरिति वदद्भिः प्राभाकरसरणिपरिहाणेनाध्ययनविधिः स्वर्गार्थ इति पूर्वपक्षं प्रवर्त्य, 'दृष्टफलसंभवेऽदृष्टकल्पनायोगादध्ययनविधिरर्थज्ञानफलकः । अतश्च स्वाध्यायोऽर्थपर' इति निर्णीतम् ।

प्रदर्शितः[1] । स च विवृतोऽस्माभिः नयप्रकाशे । तथापि सुग्रहत्वायात्र प्रकरणे पृथगुच्यते—अध्ययनविधिर्नियमपरः । स च वेदाख्याक्षरराशिग्रहणमात्रपर्यवसायी । अध्ययनं चाचार्यरागप्रयुक्तम् । तच्च स्वाध्यायसंस्कारः । उपनयनं च माणवकसंस्कारद्वारा अध्ययनाङ्गम् । रागतो मीमांसाप्रवृत्तिरिति च दर्शनस्थितिः । तथाहि—

> नियमार्थो विधिर्नैव वैयर्थ्यं नियमे सति ।
> अधीतवेदसाध्यं यत् तदेव फलदं यतः ॥
> उपायान्तरसद्भावाद्वेदाप्तेस्तन्निवृत्तितः ।
> नायुक्तं नियमार्थत्वमध्येतव्य इति श्रुतेः ॥
> स्वाध्यायशब्दवाच्यत्वाद्विशिष्टाक्षरसंहतेः ।
> तद्वर्णमात्रग्रहणे तद्विधिः पर्यवस्यति ॥
> स्वशाखाध्ययनं चापि गुरुरागप्रचोदितम् ।
> प्रतिग्रहो यथा लिप्सोरध्यापनविधिर्यतः ॥
> स्वाध्यायकर्मताबुद्धेरधीतिस्तस्य संस्क्रिया ।
> युक्ता संस्कार्यता कात्स्न्र्याज्जपादौ विनियोगतः ॥
> उपनीतिरधीत्यङ्गं योग्यतापादिका यतः ।
> अध्येतुरन्तरङ्गत्वात् कर्मत्वश्रवणादपि ॥
> अङ्गैः षड्भिरधीतत्वादीषदर्थावबोधतः ।
> वेदस्यार्थविचारेऽपि रागादेव प्रवर्तते ॥

---

1. प्रदर्शित इति । भाट्टकृतं प्राभाकरदूषणमङ्गीकृतमेव भगवता भाष्यकृता । परं तु अर्थज्ञानार्थं स्वाध्यायाध्ययनविधिरिति यत् प्राभाकराणामिव भाट्टानां निगमनम्, तन्नाङ्गीकृतम्; "अध्ययनमात्रवतः" इति वदता बादरायणेनाध्ययनविधेरक्षरराशिग्रहणमात्रार्थतायाः अङ्गीकृतत्वात् । अतः स्वाध्यायप्राप्त्यर्थमेवाध्ययनम्, स्वाध्यायस्य कर्मत्वावगमात् । तत्राधीतस्य स्वाध्यायस्य नार्थे उपयोगः, सर्वस्य तस्यार्थपरत्वाभावात्, उक्तस्यार्थस्य सर्वस्य सर्वोपयोगित्वाभावाच्चेति जपे पारायणे चोपयोग इति मीमांसा नारभ्येति पूर्वपक्षः प्रवर्तनीयः । शब्दानामर्थपरत्वस्वाभाव्यात् तदर्थोपबृंहणार्थमेवाङ्गोपाङ्गभूतस्मृत्यादिप्रवृत्तेश्च स्वाध्यायस्यार्थपरत्वमवर्जनीयमित्यर्थनिर्णयाय शास्त्रमारम्भणीयमिति सिद्धान्त इत्यभिसंहितमित्यर्थः । अत्रेदमवधेयम्—अध्ययनं स्वविधिप्रयुक्तमिति यदुक्तं भाट्टैः, तदनेन ग्रन्थकर्त्रा नेष्यते । किंत्वाचार्यरागप्रयुक्तमित्युच्यते । अन्यैस्तु श्रीभाष्यव्याख्यातृभिर्भाट्टैरिव स्वविधिप्रयुक्तत्वमेवाध्ययनस्यादृतमिति ।

जपादिविनियोगस्यासंभवान्न प्रयोजनम् ।
वेदस्यार्थावबोधित्वायुक्तो रागो विचारणे ॥

ननु प्रागध्ययनात् विध्यर्थानवगमात् माणवकं प्रत्यध्ययनविधिनियमोऽनुपपन्न इति चेत्; तन्न; [1]अवगततद्विध्यर्थमाणवकहितप्रवृत्तपित्रादितस्तन्नियमात् प्रवृत्त्युपपत्तेः; पक्षान्तरेऽप्यस्य चोद्यस्य समत्वाच्च । पुस्तकपाठादिना स्वाध्यायाप्तेः संभावितत्वेन निर्णयसंभवात् तन्निवृत्तिफलको नियमश्चात्रोपपन्नः । न च दुःखरूपाध्ययनस्यापुरुषार्थत्वादननुष्ठेयता; अध्ययनेनैव प्रवृत्तस्वाध्यायस्य पुरुषार्थसाधनजपादिद्वारा पुरुषार्थत्वेनानुष्ठेयत्वात् ।

[2]ननु "अध्येतव्यः" इत्यस्य न नियमपरता, तव्यप्रत्ययादेः स्वतोऽपूर्वपरत्वात्[3] । न च "अवहन्ति" इत्यादिवत् [4]क्रत्वादिविध्यनुवादकता, तद्विधीनां दूरस्थत्वात् । [5]न च स्वाध्यायस्यार्थावबोधकत्वेन क्रत्वव्यभिचारात् तत्पदोच्चारणे क्रतुविधायकत्वेनानुवादोपपत्तिः, स्वाध्याये निरर्थकहुमादीनामपि सद्भावात् तद्व्यभिचारादित्यपूर्वपरत्वमेवास्येति चेत्— तन्न, [6]हुमादेः सामान्तर्गतत्वात् तस्य च क्रत्वव्यभिचारात् जपादौ कृत्स्नस्य स्वरूपेणाव्यभिचाराच्च स्वाध्यायपदात् तत्प्रत्यभिज्ञोपपत्तेः । प्रधानापूर्वपरत्वं त्वनन्तरमेव निराकरिष्यते ।

---

1. **अवगततद्विध्यर्थेति** पित्रादिविशेषणम् ।

2. प्राभाकरपक्षमुपक्षिपति-**नन्वध्येतव्य इति** ।

3. **अपूर्वपरत्वात्** । तन्मते नियोगो विध्यर्थः । नियोगश्चापूर्वमिति तैर्निष्कृष्टम् ।

4. **क्रत्वादिविध्यनुवादकतेति** । "व्रीहीनवहन्ति" इत्यादेर्दर्शपूर्णमासप्रकरणगतत्वात् प्रधानविध्यनुवाद इति तैरिष्टम् ।

5. "स्वाध्यायोऽध्येतव्यः" इति वाक्यमनारभ्याधीतमपि पर्णतान्यायेन प्रधानविध्यनुवादकं स्यादित्याशङ्क्य परिहरति—**न च स्वाध्यायस्येति** । अत्र 'न च स्वाध्यायस्य कर्मबोधकतया कर्माव्यभिचारात् कर्मविध्यनुवादकतेति वाच्यम; [म्'इत्येवमादिस्तोभाक्षराणां कर्मबोधकत्वव्यभिचारात्' इति नयप्रकाशिकोक्तार्थोऽनुसंधेयः ।

6. **हुमादेरिति** । साम्नां क्रत्वङ्गत्वात् तदन्तर्गतहुमादेरपि तदङ्गत्वसिद्धया स्वाध्यायस्य शब्दस्वरूपेण वा अर्थद्वारा वा क्रत्वादिसंबन्धात् अध्येतव्य इति विधिना क्रतुजपादिसर्वविध्यनुवादसंभवे तत्खण्डनं कथमिति भावः । सिद्धान्ते अध्येतव्य इत्यत्र क्रतुविध्यनुवादः संमतो न वेत्यन्यदेतत् । प्राभाकरयुक्तिखण्डनमात्रेऽत्र तात्पर्यम् ।

न च—तर्हि जपादिशेषताऽध्ययनस्य ; शेषत्वे च न प्रमाणमिति वाच्यम् ; शेषत्वाभावेऽप्यग्न्यर्थार्जनोपायाधानयाजनादेरिव विद्यार्जनोपायाध्ययनस्यापि जपाद्युपकारकत्वोपपत्तेः । धनाग्निमतामिव विद्यावतामेव हि क्रतावधिकारः ।

नन्वेवं जपादिप्रयुक्तता अध्ययनस्य ; क्रतुप्रयुक्तता चाधानस्य । तदङ्गीकारे च शूद्रादेरप्यध्ययनापत्तिः । विधितस्तत्प्रवृत्तौ च पुरुषार्थशूद्राध्ययन-निषेधस्यानवकाशः, विहिताग्नीषोमीयालम्भेन "न हिंस्यात्" इत्यस्येव । शूद्रविषयाध्ययननिषेधस्तु रागतः प्रवृत्तपरत्वेनापि हिंसानिषेधवत् योजयितुं शक्य इति चेत्—न, जपादिविधेस्तत्प्रयोजकत्वाभावात् ; धनादिलिप्स्वध्या-पकरागप्रयुक्तत्वात् । रागप्रयुक्तिसद्भावे विधेर्न प्रयुक्तिगोचरत्वम् । अध्यापनमपि याजनादिवद्धनार्जनोपायतया विहितं शास्त्रेषु । अतः कामात्[1] तेनोपायान्तर-प्रयुक्तिरित्यार्जनोपायतया रागादध्यापनप्रवृत्तौ,

"उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम् ।
वेदमध्यापयेदेनं शिष्टाचारांश्च शिक्षयेत् ॥"

इति नियमशास्त्रानुरूपमेवाध्यापनं प्रयुञ्जानोऽध्ययनं प्रयोजयति; अध्ययनव्यतिरेकेणाध्यापनानुपपत्तेः ।

नन्वध्यापनव्यतिरेकेणाध्ययनासिद्धेर्व्यत्यासात् प्रयोजकता किमिति न स्यादिति चेत्—न, अध्ययनस्य दुःखरूपत्वात् स्वतोऽपुरुषार्थत्वेनाप्रयोज-कत्वात् । पुरुषार्थसाधनजपादिद्वाराऽध्ययनप्रयुक्तिस्तु रागाद्विलम्बिता । ततः[2] प्रवृत्तिसंभवे तु न विधौ तत्कल्पनागौरवं च ।

नन्वध्ययनाक्षिप्तमेवाध्यापनम् । स्वाध्यायप्राप्ताध्ययनस्यैवोपायतया विहितत्वादर्थार्जनोपायतया याजनादेः संभवात् नाध्यापन एव नियमात् प्रवृत्तिरित्य-ध्ययनस्यैव तत्प्रयोजकत्वमिति चेत्—न; प्रतिग्रहयाजनयोर्दोषबाहुल्यसंभवात् भृतकाध्यापननिषेधात् तत्राप्रवृत्तावप्ययाचितैरपि शिष्यैर्गुरुप्रीत्यर्थ-मर्थप्रदानोपपत्तेः तद्ग्रहणे च निषेधाभावात् शुश्रूषालोभाधिक्याच्च

1. कामादिति । विकल्पादित्यर्थः ।
2. ततः प्रवृत्तिसंभवे आचार्यरागत एव प्रवृत्तिसंभवे ।

तत्र प्रवृत्त्यौत्कट्यात् । "दध्ना जुहोति" "पयसा जुहोति" इतिवदनेकनियमोपपत्तिश्च । तत्र रागप्रवृत्तावेव स्वापेक्षितार्थसिद्धेर्नियमविधिश्चोदासीनः[1] । अध्यापकस्य[2] तदुपकारता तु निवार्यते । सनियमकाध्यापन एवाध्यापकस्यार्थादिसिद्धिः ।

एतेनाचार्यकरणविधिप्रयुक्तिपक्षोऽपि प्रत्युक्तः; रागात् तत्प्रयुक्तेरुक्तत्वात् । न च तद्विधिसद्भावः । न च,

"उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः ।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥"

इत्यत्र तत्सद्भावः; तस्याचार्यलक्षणकथनमात्रपरत्वात् । न ह्यत्राचार्यत्वस्य भावना । य इति प्रसिद्धवन्निर्देशाच्च न तत्सद्भावधीः । न च विधित्वतात्पर्यावधृतौ "यदाग्नेयोऽष्टाकपालः" इत्यादिष्विव यच्छब्दस्य न विधिव्याघातकता; आग्नेयादेः प्रमाणान्तराप्राप्तत्वात् तत्राव्याघातकत्वात् । "अष्टवर्षं ब्राह्मणम्" इत्यादावध्यापनं प्राप्तम् ।

ननु च "उपनयीत" इत्यात्मनेपदश्रवणात् तस्य च "संमाननोत्सञ्जनाचार्यकरण–" इति सूत्रबलादाचार्यकरणार्थत्वात् विधिरेवेति चेत्— न, "अकर्त्रभिप्रायार्थोऽयमारम्भः" इति तत्सूत्रोपोद्घातवृत्तावात्मनेपदस्य कर्त्रतिरिक्तसंस्कार्यमाणवकगामित्वविवक्षया तत्सूत्रेण विहितत्वाभिधानात् । न चोपनेतुरकर्त्रवस्थया तत्फलभागित्वपरा सा वृत्तिरिति वाच्यम्; तादृशानेकवृत्तीनामपि[3] फलस्य तादृगवस्थायोगित्वपरत्वापत्तेः । 'माणवकमुदानयते' इत्यादिभिरुत्सञ्जनादीनामुदाहरणम् । माणवकगामि ह्युत्क्षेपणक्रियाफलम्, नोत्क्षेप्तृगामि । एवमितरोदाहरणेष्वपि स्पष्टम् । अकर्त्रभिप्रायार्थोऽयमिति चानेकसूत्रेषु[4] दृश्यते । न च तथेष्यते ।

1. नियमविधिश्चोदासीन इति । अध्ययननियमविधिर्नाध्ययन प्रयुङ्क्ते । आचार्यरागाधीनप्रवृत्त्यैव स्वापेक्षितस्याध्ययनस्य निष्पन्नत्वादित्यर्थः ।

2. एवमध्यापकरागप्रयुक्तमप्यध्ययनं न प्राभाकरमत इवाध्यापकापेक्षिताचार्यकार्यम्; किंतु माणवकार्थम्, अन्तरङ्गत्वादित्याह—**अध्यापकस्येति** ।

3. **तादृशानेकवृत्तीनामपि** । फलस्याकर्त्रभिप्रायार्थत्वपरानेकवृत्तिग्रन्थानामित्यर्थः ।

4. **अनेकसूत्रेष्विति** । अनेकसूत्रवृत्तिग्रन्थेष्वित्यर्थः ।

किंच 'आचार्यकं कुर्वन्' इति वर्तमाननिर्देशानुपपत्तिश्च । साङ्गाध्यापनजन्यादपूर्वात् कालान्तर एवाचार्यत्वोत्पत्तिरभिमता गुरुमते । आचार्यकरणस्मृतिस्तूपनयनकर्तृत्वनिमित्ता । किंच अध्यापनाङ्गत्वेनोपनयनमात्रे श्रूयमाणमात्मनेपदं साङ्गाध्यापनफलार्थत्वेन नान्वययोग्यम्, फलाश्रवणात् । फलकल्पनायामपि सर्वार्थस्वर्गादेरेव विश्वजिन्न्यायात् कल्पनं युक्तम्; न त्वङ्गे श्रूयमाणफलस्य । अध्यापनस्य काम्यद्रव्यादिफलसद्भावात् फलान्तराकाङ्क्षाभावाच्चार्थार्जनोपायतया स्यादध्यापननियमः ।

न चार्थलाभायाचार्यत्वमेवापूर्वादुत्पादयितव्यमिति वाच्यम; आचार्यत्वस्य लौकिकत्वेनापूर्वोत्पाद्यत्वाभावात् । उपनयनादिक्रियाकारकत्वमात्रादाचार्यादिपदप्रवृत्त्युपपत्तेरदृष्टार्थकत्वकल्पनायां[1] प्रमाणाभावाच्च । यौगिकश्चाचार्यशब्दः । नैयोगिकत्वपक्षे तु योगवृत्तिर्न युज्यते । योगवृत्तिश्च,

[2]"आशब्दादाप्तिरित्युक्तश्चार्यशब्दश्चरेदिति
आप्तौ चरति यो नित्यमाचार्यः सोऽभिधीयते ॥"

इति स्मरणात् ।

ननु 'वेदाध्ययनसमाप्तावाचार्याय वरो देयः' इति स्मरणात् क्रियाननुवृत्तौ कारकत्वाननुवृत्तेराचार्यत्वमलौकिकमेव फलम्; न तूपनयनादिक्रियाफलम् । न च भूतपूर्वगत्या पाचकादिवत् तद्व्यवहार इति वाच्यम्; अध्यापकगतत्वेनोपलक्षकधर्माप्रत्यक्षत्वादिति विध्यर्हमेव तदिति चेत्—न; पाचकादिष्वपि धर्माप्रत्यक्षत्वस्य समत्वात् । न हि पाचके [3]तदुपलक्षकधर्मप्रत्यक्षता । पित्रादिष्वप्येवं निषेकादिनिमित्तत्वेन भूतपूर्वगत्यैव पित्रादिव्यवहारः । तावतैव तत्परशास्त्रप्रवृत्त्युपपत्तिः । किंच आचार्यत्वस्य लौकिकत्वात्, स्वर्गादिवत् सुखत्वाद्याकारेणाप्यज्ञातत्वात्, [4]तज्ज्ञापनया नाध्यापने प्रवृत्त्युपपत्तिः । अतो न विध्यर्हताचार्यत्वस्येति न तत्सद्भावः ।

---

1. अदृष्टार्थकत्वेति । आचार्यपदस्येति शेषः ।

2. आप्तिः शास्त्रार्थसाक्षात्कारः ।

3. तदुपलक्षकधर्मेति । भूतपूर्वयद्धर्ममादाय तस्य पुरुषस्योपलक्षणं क्रियते, तस्येत्यर्थः ।

4. तज्ज्ञापनयेति । न ह्यज्ञातमाचार्यकमुद्देश्यत्वेन ज्ञापयितुं शक्यमिति भावः ।

तदुक्तम्—

"नैतद्युक्तं मतं रागप्रवृत्तौ विधितो न सा ।
साध्व्यधीतेर्न चाचार्यत्वं च नैयोगिकं फलम् ॥
किंतु क्रियाफलं तच्च लौकिकैरुपनेतरि ।
प्रयुज्यते त्वयं शब्द उपनीतिक्रियाफलम् ॥
संमाननादिसूत्रे तत् पाणिनिः प्राह च स्फुटम् ।
यौगिकत्वेन तच्छब्दं प्राहुश्चाद्यास्तथा स्फुटम् ॥
आशब्दाददसिरित्युक्तश्चार्यशब्दश्चरेदिति ।
आसौ चरति यो नित्यमाचार्यः सोऽभिधीयते ॥
[1]इति नैयोगिके पक्षे योगवृत्तिस्तु दुर्घटा (दुर्भणा) ।
क्रियायां हि समाप्तायां फलं नैयोगिके यतः ।
अतो विध्यर्हता नास्त्येत्ययं पक्षो न युक्तिमान् ॥"

इति । [2]न चार्थज्ञानरागाद्विधित एवाध्ययनप्रयुक्तिः, द्रुमादेरर्थाभावादव्यापकत्वेन कृत्स्नशाखाध्ययनासिद्धेः । अनधीतवेदस्यार्थज्ञानाभावान्न कामनोपपत्तिश्च । न ह्यनुपलब्धस्येषिविषयता । न वेदादन्यतो वेदार्थस्य चोपलब्धिः । न च ज्ञातवेदार्थपुरुषात् तदर्थज्ञाने[3] तत्कामनेति वाच्यम्, अज्ञातेऽर्थे तत्कामनानुपपत्तेः । न च तज्ज्ञात् सामान्यतो ज्ञातस्य विशेषतो ज्ञानकामनोपपत्तिः । 'अर्थोऽस्ति' इत्येतावन्मात्रात् कामनानुपपत्तेः । विशेषतो ज्ञात एव हि कामनया महाप्रयासाध्ययनप्रवृत्तिः । कथं तर्हि रागतोऽर्थज्ञानप्रवृत्ती राद्धान्त उच्यते ? न हि मीमांसाश्रवणात्पूर्वं विशेषतो वेदार्थज्ञानमिति चेत्—न, तत्र न्यायरूपसहकार्यभावादर्थानिर्णयेऽपि संशयग्रस्तत्वेनानियततया विशेषत एवार्थज्ञानसद्भावात् । न हि तादृशं सामान्यज्ञानम् । 'अर्थोऽस्ति' इत्येतावन्मात्रमेव हि तज्ज्ञानम् ।

---

1. इति नैयोगिक इति । इतिशब्दः प्राहुरिति पूर्वान्वयी । पूर्वश्लोकस्य स्मृतिवाक्यतया तदनुवादोपरतौ इतिः । नैयोगिके पक्षे योगवृत्तिर्न घटत इत्युपरितनेनान्वयः ।

2. अध्ययनस्य स्वविधिप्रयुक्तत्वं खण्डयति । तत्र 'स्वाध्यायोऽध्येतव्यः" इत्यस्यार्थज्ञानार्थमध्ययनविधायकत्वं स्वीकुर्वाणैर्भाट्टैः फलरागात् प्रवृत्तिरिति वक्तव्यम् । तन्न घटत इत्याह—न चार्थेति ।

3. तदर्थज्ञाने—तस्यार्थोऽस्तीति ज्ञाने ।

न च वेदार्थेऽभ्युदयकारकत्वाकारेण पुंवाक्यात् ज्ञाते कामना, कृत्स्नवेदस्याभ्युदयकारकत्वाभावात् । न हि नित्यादीनां स्वर्गाद्यभ्युदयार्थता । परोक्तिमात्रात् पुरुषार्थतया कामनोदयोऽप्यनुपपन्नः, पुरुषवचसां स्वतः प्रामाण्याभावात् । [1]प्रमाणोपलब्धौ तु प्रवृत्तिरनुपपन्ना (रुपपन्ना) ।

ननु—पुरुषार्थत्वाकारेण वेदार्थे ज्ञाते कामनोपपत्तिः; कृत्स्नवेदस्य पुरुषार्थपरत्वादिति चेत्—न, श्येनादिभागस्यापुरुषार्थपरत्वात् ।

अथ ज्ञातस्यापि स्वाध्यायेनैव ज्ञानकामनोपपत्तिरिति चेत्—न, स्वाध्यायादन्यतस्तदर्थावगत्यभावात् . निवर्त्याभावान्नियमानुपपत्तेः; पुंवाक्यादर्थनिश्चयो मूलवेदानुमानादेवेति न तावन्मात्रात् । [2]न च ज्ञातस्याप्यर्थस्याध्ययनगृहीतादेव स्वाध्यायात् ज्ञानकामनोपपत्तिः, कामनाप्रयुक्तत्वे शूद्रादेरप्यापत्तेः । न हि केवलार्थज्ञानमात्रं पुरुषार्थः । किंतु क्रतुसाध्यस्वर्गादिरेव पुरुषार्थः । तथा क्रतुविधिरेव प्रयोजकः । वेदोदिताश्च सर्वेऽर्था नानुष्ठीयन्ते, ब्राह्मणादीनामश्वमेधादिष्वनधिकारात् । केषांचिदसामर्थ्यादिभिरचिकीर्षितत्वान्नानुष्ठानमिति न कृत्स्नवेदाध्ययनसिद्धिश्च ।

न च—जपफलकामनाप्रयुक्तत्वमध्ययनस्य; ततः कृत्स्नाध्ययनसिद्धिरिति वाच्यम्; शूद्रादेरपि प्रसक्तेरित्युक्तत्वात् । अध्ययनवाक्ये न फलं श्रुतमिति स्वविधितः प्रयुक्तिश्चानुपपन्ना । कल्पनायां चार्थज्ञानस्यादृष्टफलत्वाभावादवघातादिजन्यवैतुष्यादिवत् विषयस्वभावतो योजनान्न कर्तृविशेषणतोपपत्तिश्च । जपादिविधितः प्रवृत्तावपि फलरागव्यतिरेकेणाध्ययनासिद्धेः, रागप्रवृत्तेः शैघ्र्याच्च गुरुरागप्रयुक्तत्वमेव युक्तमिति न स्वविधिप्रयुक्तत्वम्[3]; न च क्रतुविधिप्रयुक्तत्वम्; नाप्याचार्यकरणविधिप्रयुक्तत्वम् ।

---

1. **अनुपपन्नेति** । प्रमाणतोऽर्थनिश्चये जाते अर्थनिश्चयकामनया प्रवृत्तिर्दुर्वचेत्यर्थः । **उपपन्नेति**पाठे तु प्रमाणतः संशयग्रस्तविशेषज्ञाने सति कामनया प्रवृत्तिर्भवतीत्यर्थः ।

2. स्वाध्यायातिरिक्तस्योपायत्वं मा भूत् । प्रकारान्तरगृहीतात् स्वाध्यायादर्थज्ञाने जातेऽप्यध्ययनगृहीतस्वाध्यायादर्थज्ञानकामना भवितुमर्हतीति शङ्कां परिहरति—**न च ज्ञातस्यापीति** ।

3. **न स्वविधिप्रयुक्तत्वमिति** । **तत्त्वटीकादौ** तु—"अध्ययने तु बालस्यासप्रेरणादिभिः साफल्यानुमानात् प्रवृत्तिर्युक्ता । अत एव द्रव्यार्जनादिलुब्धाचार्यरागप्रयुक्तमध्ययनमिति यत् केश्चिदुक्तम, तत् स्वविधिप्रयुक्त्यसंभवेऽप्यध्यायनविधिप्रयुक्तिस्तावदयुक्तेति स्थापयितुम्" इत्येवमेतदनादरेण स्वविधिप्रयुक्तिरेव

अध्ययनस्याचार्यकरणविध्यभावादेवोपनयनस्य तदङ्गतापि निरस्ता । किंतु 'ब्राह्मणम्' इति द्वितीयाश्रुत्या [1]माणवकस्यैवोपनयनसाध्यत्वप्रतीतेरध्ययनस्य तस्याध्ययनकर्तृगतत्वेनान्तरङ्गत्वात् अध्ययनशेषतैव युक्ता ।

आचार्यकरणविधिसद्भावाङ्गीकारेऽपि न तद्विशेषणत्वे प्रमाणम् । न च 'उपनीयाध्यापयेत्' इति मानम्, तद्वचनस्य स्मृतित्वेन "अष्टवर्षं ब्राह्मणम्" इत्यादिश्रुतेर्विलम्बितत्वात् । किंच माणवकस्य तदासत्तेर्वाऽध्ययनशेषत्वम् । अतस्तद्द्वाराऽध्यापनशेषत्वनिर्वाहोपपत्तिश्चोपनयनस्य । न ह्यशेषभूतं द्वारं दृष्टम् । प्रत्युतासत्तिद्वाराऽध्यापनमेवाध्ययनाङ्गम् । अध्यापकोऽपि ऋत्विग्वत् शुश्रूषादक्षिणादानाद्यानतः ।

किंच क्त्वातोऽङ्गता प्रकारान्तरेणापि विलम्बिता । क्त्वातः समानकर्तृकत्वम्; ततः प्रयोगैक्यम्; ततश्चाङ्गाङ्गित्वम् । तच्च लिङ्गमिति । "ब्राह्मणम्" इति श्रुतिः । अध्ययनाङ्गत्वे तु क्त्वा पूर्वकालतामात्रपरो भवति, "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इत्यादाविव ।

एवंच स्मृतिपूपनयनस्य पुरुषसंस्कारान्तरतुल्यन्यायतया पाठश्चाप्युपपन्नः । अध्यापनशेषत्वनिश्चये दैवादध्यापननिवृत्तावध्यापकान्तरेणाध्यापनप्रवृत्तौ पुनरुपनयनप्रसङ्गश्च; प्रधानावृत्तावङ्गावृत्तेर्न्याय्यत्वात् । माणवकशेषत्वे तु कर्तृसंस्कारत्वेनाध्यापकभेदादध्ययनभेदेऽपि नावृत्तिः; सर्वार्थत्वादाधानवत् तत्संस्कारस्य । तदुक्तम्—

"उपनीतेर्न चाङ्गत्वमध्यापनविधिं प्रति ।
प्रमाणाभावतस्तत्र स्मृतेर्नापि प्रमाणता ॥
उपनेयश्रुतेः शैघ्र्याल्लिङ्गं चान्यद्विलम्बितम् ।
समानकर्तृताबुद्धिरुपनीयेति हि ल्यपा ॥
समानकर्तृकत्वेन प्रयोगैक्यं प्रतीयते ।
अङ्गाङ्गिता तदैक्ये चेत्युक्ता तस्याः प्रमाणता ॥

स्वीकृता । अकरणे प्रत्यवायमाप्तमुखादाकर्ण्य नित्ये स्वाध्यायाध्ययने प्रवर्तेत इत्यपि स्वविधिप्रयुक्तत्वं सुवचम् । एवमधीतस्य स्वाध्यायस्याङ्गाध्ययनबलादर्थप्रतीतिकरत्वे सति रागादेव निर्णयार्था प्रवृत्तिरिति पूर्वमर्थपरत्वाज्ञानेऽपि न दोष इति ।

1. माणवकस्यैवेति । माणवकस्य यदुपनयनम्, तत्साध्यत्वेनाध्ययनस्य प्रतीतत्वादित्यर्थः स्यात् । "ब्राह्मणमिति द्वितीयायाः श्रुतत्वात् उपनयनस्याध्येतृमाणवकद्वारा अध्ययनशेषत्वप्रतीतेः" इति नयप्रकाशिका ।

सुस्पष्टो हि विधिश्चात्र त्वष्टवर्षमिति श्रुतिः ।
अधीतिशेषतैवात्र कर्तृद्वारा प्रतीयते ॥
अध्येतृगतसंस्कारो नाध्यापकसमन्वयी ।
नाध्यापनोपकारित्वमध्येतुर्नेह(र्नहि)शेषता ॥
किंचाध्ययनशेषत्वं दक्षिणाद्यानतस्य हि ।
अध्यापकस्य शेषत्वं क्रताविव महर्त्विजाम् ॥
तस्य चाध्यापनाङ्गत्वे स्यात् प्रयोगोऽपवर्जितः ।
यथा च सिन्धुदेशादिगमनेन पुनःक्रिया ॥
उपनीतिं पुनस्तत्र निर्विशेषं स्मरन्ति हि ।
अध्यापनाङ्गे संस्कारे चोपनीतौ ल्यपः श्रुतेः ॥
अध्यापकस्य भेदेऽपि स्वाङ्गोपनयनक्रिया ।
प्रधानभेद उक्तत्वादङ्गावृत्तेः क्रताविव ॥"

इति । अतोऽध्ययनाङ्गत्वमेवोपनयनस्येति सिद्धम् ।

अध्ययनविधिश्च वेदाख्याक्षरराशिग्रहणपरः; नार्थज्ञानपरः, तज्ज्ञानस्य स्वाध्यायशब्दवाच्यत्वाभावात्; साङ्गाध्ययने विषयस्वाभाव्याज्जायमानस्याविधेयत्वात् ।

ननु—न ज्ञानस्य विधेयत्वमुच्यते; किंतु निश्चयात्मकस्य । तत्तु न विषयस्वभावजम्; किं तु मीमांसाजम् । तस्य च विधिव्यतिरेकेण प्रवर्तकाभावाद् विधिव्यापारस्तत्राङ्गीकरणीय इति चेत्—न, [1]विषयस्वाभाव्यात् पुरुषार्थानामाभासतोऽवगतौ तन्निर्णये रागादेव प्रवृत्तेः ।

किंच गुरुमतेऽध्ययनविधेर्न शास्त्रश्रवणप्रयोजकत्वम्, शास्त्रश्रवणस्य तदनुपकारकत्वात् । न ह्याधानादिवद्वा प्रयाजादिवद्वा शास्त्रश्रवणात् तदपूर्वोपकारः । न ह्यनुपकारकस्य प्रयोज्यत्वम् ।

न चाध्ययनविधिना स्वविधेयत्वसिद्धये स्वाध्यायस्यार्थपरता आकाङ्क्ष्यतेति तदर्थनिर्णयाय शास्त्रप्रयुक्तिरिति वाच्यम्; [2]अर्थपरत्वविहतिनिवृत्तिमात्रादपि

---

1. विषयस्वाभाव्यादिति । विषयस्वभावादित्यर्थः । प्रियतद्धिता दाक्षिणात्याः ।

2. विहतिनिवृत्तिमात्रादपीति । स्वाध्यायस्यार्थपरत्वाभावे तदन्तर्गतस्याध्ययनविधेरप्यर्थपरत्वाभावात् अध्ययनविधानमेव न स्यादिति स्वाध्यायस्यार्थपरत्वमावश्यकमिति मीमांसकोक्तं न युक्तम् । अध्ययनविधिः स्वसिद्धये 'स्वाध्यायस्यार्थपरत्वं नास्तीति न' इत्येतावदेवाक्षिपेदित्याशयः ।

तद्वाक्यस्यार्थपर्यन्त(थग्रहा ृ्वपर)त्वासिद्धस्तदप्रयोजकत्वात् । न हि शास्त्रप्रयुक्त्य-भावे तद्विधिवैयर्थ्यम्, स्वविषयानुष्ठानमात्रादेव तत्सिद्धेः ।

न च—तदनुष्ठानवचनमर्थज्ञानापेक्षम् ; यतः प्रागध्ययनात् स्वाध्या-यान्तर्गताध्ययनवाक्यविचारश्चानुपपन्न इति । अतोऽननुष्ठानलक्षणाप्रामाण्याभावे च न ततः शास्त्राक्षेपः । किंच [1]आचार्यत्वादिप्रयोजनात् स्वाध्यायस्यान्यपरत्वाभावे स्वपरवाक्यस्यान्तर्गतत्वाविशेषात् स्वपरत्वहान्यापत्तौ तद्विधेः स्वाध्यायस्यार्थ-परत्वविहतिनिवृत्तिमात्रमेवापेक्षितम् । तद्विहतिनिवृत्तौ च शब्दस्वभावादेवार्थ-परता सिद्धा । स्वतः सिध्यतोऽर्थस्य च न विधेयता । रागाच्च शास्त्रप्रवृत्तिरित्य-क्षरराशिग्रहणव्यतिरेकेण न क्वचिद्विधिस्पर्शापेक्षा ।

[2]अध्ययनस्य नार्थज्ञानकरणतोपपन्ना; तस्यापूर्वकरणत्वाभिधानात् । न च—विषयानुष्ठानेऽर्थज्ञानमर्थजातं स्वीकृतं विधिना; न तदर्थत्वं तदनुष्ठानस्येति वाच्यम्—आचार्यत्वस्याप्यध्ययनफलत्वेन स्वीकारापत्तेः । अध्ययनस्याध्यापनोप-कारकता गम्यते । न चैकस्याध्ययनस्याचार्यमाणवकपुरुषद्वयोपकारकत्वानु-पपत्तेरन्यतरनिर्धारणाय अर्थज्ञानोपकारस्याध्येतृगतत्वेनान्तरङ्गत्वात् माणवको-पकारकत्वाध्यवसाय इति वाच्यम्—अर्थाज्जायमानोपकारस्य युक्त्याद्यनियम्यत्वात् । विधिज्ञापितत्वे हि विरोधः, युगपदुभयोपकारकत्वप्रतिपादनानुपपत्तेः । एकस्यानेकोपकारकत्वं चाधानादौ दृश्यते । आधानादेरुपकारकत्वं चाऽऽर्थमेव क्रतूनाम् । न हि आधानोपकार्यता तेषां शाब्दी । अध्ययनं चाध्यापनोपकारकम्, तद्व्यतिरेकेणाध्यापनासिद्धेः । एवमुभयार्थत्वे च संशयानतिरेकः । आचार्यमाण-वकान्यतरपर्यवसानानिश्चय एव संशयः । न चोभयार्थत्वस्य निश्चितत्वान्न संशय इति वाच्यम् ; माणवकैकार्यत्वात् स्वाध्यायस्यार्थपरतेति सिद्धान्तहानेः ; 'आचार्यत्वैकपरता' इति पूर्वपक्षासिद्धेश्च ।

अध्ययनविधेरर्थपरत्वाङ्गीकारादेतत् दूषणजातमुक्तम् । न तु वस्तुतस्त-त्परतैव, विषयनियोज्याभावात् । नियोज्यश्रुतावध्ययनकृतिसाध्यत्वकृत्युद्देश्यत्वा-भ्यामेव हि कार्यत्वावगतिः । ते च नियोज्याधीने । तदभावे च कार्यत्वा-प्रतीतेर्नानुष्ठानोपपत्तिः ।

---

1. आचार्यत्वादिप्रयोजनात् । आचार्यत्वसिद्ध्यादिरूपं प्रयोजनमादाय । **स्वपरवाक्यस्येति** । स्वाध्यायाध्ययनपरवाक्यस्येत्यर्थः ।

2. "अध्येतव्यः" इति वाक्ये अध्ययनस्यार्थज्ञानं प्रत्यपि करणत्वं प्राभाकरोक्तं खण्डयति—**अध्ययनस्येत्यादिना** ।

न च—अन्यतः प्रयुक्तौ न नियोज्यापेक्षा, अनुष्ठानार्थत्वात्तदपेक्षाया इति वाच्यम्; अधिकारपरत्वस्याप्यनपेक्षत्वापत्तेः। 'अध्ययने नियोज्यो नास्ति! अधिकारी विद्यत' इति हि वो दर्शनम्। [1]अधिकारापेक्षानुष्ठानाच्चान्यतो लब्धमिति तदाकाङ्क्षावैयर्थ्यम्। (अधिकारापेक्षाया अनुष्ठानार्थत्वात्; तच्चान्यतो लब्धमिति तदाकांक्षावैयर्थ्यात्।)

ननु—कार्यरूपो विधिरेव हि प्रवृत्तिहेतुः। कार्यं च कृतिप्रयोजनं पुरुषार्थः। कार्यस्य कृतिप्रयोजनता च स्वावसाने यागादौ पुरुषैश्वर्यहेतुत्वात्; नान्यथेति विधित्वायाधिकारिपर्यवसानापेक्षा—इति चेत्-न, तत्पर्यवसानापेक्षाया अप्यनुष्ठानार्थत्वात्। यदि नरैश्वर्यहेतुत्वाभावे विधित्वासिद्धिः, तर्हि स्वस्य कृतिसाध्यत्वकृत्युद्देश्यत्वे नाभिकांक्ष्ये। कांक्ष्यते तु प्रेरकत्वम्। विधित्वञ्च। न हि प्रेरकत्वानभिज्ञाने प्रवृत्त्युपपत्तिः। कार्यस्य स्वकीयत्वात् साधनेऽपि नैश्वर्यतार्थीः। "नियोज्यः स च कार्यं यः स्वकीयत्वेन बुध्यते" इति हि नियोज्यलक्षणम्।

अतो वेदलोकयोराचार्यशब्दः प्रयुज्यत इति लोकसिद्धार्थाचार्यपदबोध्यं लौकिकमाचार्यत्वम्। आहवनीयादिस्तु आधानपवमानादिकमलौकिकविशेषमभिनिविशमानः अलौकिकार्थ इति युक्तम्। आचार्यशब्दस्तूपनयनपूर्वं वेददातर्युपचरितः। सांदृष्टिकमेव शिष्योपाध्यायपदार्थवद्, नालौकिकम्, आचार्यत्वम्। अपिच प्रवृत्तं प्रति निविशमानो लौकिकार्थ इति युक्तम्। आचार्यो लोके अनन्यशास्यो धनार्थया नन्वनु प्रवर्तत इति किं तद्विधिना। अतः शून्यहृदयैर्व्याहृतमेवेदमुक्तमर्थसिद्धकर्तव्यतावतोऽध्ययनविधेः प्रयोजकमिति। अध्यापनं हि अध्ययनमन्तरेणानुपपद्यमानं लौकिकेन रूपेणाध्ययनमात्रं प्रयुञ्ज्यात्। अतोऽन्यपरत्वात् स्वाध्यायविधेर्नाविवक्षिततया शक्यमपूर्वाध्यापनेनाचार्यत्वं भावयेदिति श्रुतेरनुमातुम्।

अत्र च—[2]क्त्वाश्रुतेराचार्यकभावनासमानकर्तृकमुपनयनमवगम्यते। न च प्रयोगैक्यादृते समानः कर्ता संभवति; न च तदङ्गाङ्गि-

---

1. अधिकारापेक्षानुष्ठानाच्चान्यत इति। आचार्यकरूपाधिकारसापेक्षानुष्ठानादध्यापनादेवाध्ययनानुष्ठानमपि लब्धमिति अधिकाकाङ्क्षा व्यर्थेत्यर्थः। पाठान्तरे चार्थः स्पष्टः।

2. क्त्वाश्रुतेरिति। "समानकर्तृकयोः पूर्वकाले" इति स्मरणादिति भावः।

भावात्[1] । तत्र केन द्वारेणोपकुर्यादिति चिन्तायाम्, उपनेयासादनमेवे-त्युपनयनस्वभावालोचनाभिज्ञो देवानांप्रियः[2] । न अनेनाचार्यकं भावयेदिति श्रूयते । किं त्वष्टवर्षमध्यापयेदिति । सत्यम्, प्रयोजकव्यापारगोचरा अपि विधयः प्रयोज्यव्यापारपरा दृष्टाः, यथा "एतयाऽन्नाद्यकामं याजयेत्" इति । किंतु "उपनयीत" इत्याचार्यकरणे नयतेरात्मनेपदमिति उपनयनेनाचार्यकं निर्वर्तयेदिति । [3] नैवाचार्यार्थमुपनयनमात्मनेपदादवगम्यते । अपितु माणवकार्थादुपनयनादानुषङ्गिकमाचार्यकार्थत्वमभिप्रेत्य नयतेरात्मनेपदविधानम् । आचार्यार्थत्वे तूपनयनस्य कर्तारमेव क्रियाफलमभिप्रेयात् । अतोऽष्टवर्षमिति नायमाचार्यकरणविधिः ।

अथ मतम्—अनुमास्यामहे वयमाचार्यकरणविधिम् । स्मर्यते हि—

"उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम् (वेदमध्यापयेद्द्विजः ?) ।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥"

इति । तस्याः स्मृतेर्मूलभूतः 'उपनीय वेदाध्यापनेनाचार्यकं भावयेत्' इति विधिरनुमास्यत इति—तन्न, स्मार्तवाक्यसदृशरूपं हि मूलवाक्यमनुमीयते ।.... ....विषयश्चानुमीयते । न चेहोपनयनादिना आचार्यकं कुर्यादिति स्मृतिवचनम् ।

एवम्, 'अर्थपरत्वाभावान्न मीमांसाप्रवृत्तिः,' 'अर्थज्ञानस्याध्येतृगतत्वे-नान्तरङ्गत्वात् माणवकार्थत्वेन स्वाध्यायस्यार्थपरत्वात् मीमांसाप्रवृत्तिर्विधीयत' इति प्राभाकराभिमतपूर्वोत्तरपक्षौ चानुपपत्त्युक्त्या निरस्तौ; उपनयनस्या-ध्यापनाङ्गत्वायुक्तिरपि ।

अतोऽध्ययनस्य माणवकाधिकारत्वे, आचार्यरागप्रयुक्तत्वे, स्वाध्याय-संस्कारत्वे, अध्ययनविधेर्नियमपरत्वे, उपनयनस्याध्ययनाङ्गत्वे, विषयप्रयोजनज्ञाने च सिद्धे विचारस्यावकाशः । उपनयनस्याध्येतृद्वारा अध्ययनशेषत्वम् "न ब्रह्म व्याहरेत् तावत् स यावन्नोपनीयते" इत्यादिस्मृत्या च सिद्धम् ।

अस्मद्विचारप्रक्रिया तु—किमध्ययनसंस्कृतस्वाध्यायस्य जपपारायणे एव प्रयोजनम्, उतार्थज्ञानमपीति संशयः । अत्र पूर्वः पक्षः—न तावदर्थज्ञानम्,

---

1. भावादिति । एतदुपरि, 'ऋते समानः कर्ता संभवति' इति अनुषञ्जनीयम् ।
2. देवानां प्रिय इति तदालोचनस्याशक्यत्वमभिधीयते ।
3. सत्यमित्यारभ्य, किंत्वित्यादिनोक्तस्य नैवेत्यादिना दूषणम् ।

हुंफडादेरर्थाभावादव्यापकत्वेनार्थज्ञानस्य कृत्स्नशाखाध्ययनासिद्धेः । हुंफडादयो हि सामाङ्गपरिपूरकतया निरर्थका एव प्रयुक्ताः । [1]अनधिकृताश्वमेधाद्यचिकीर्षितपुरुषमेधादिविषयार्थज्ञानस्य प्रयोजनाभावाच्च न कृत्स्नाध्ययनम् । अनुष्ठानाय ह्यर्थज्ञानम् । किंतु जपपारायणे एव, तयोश्च कृत्स्नस्वाध्यायव्यापित्वात् ततः कृत्स्नसंस्कारसिद्धिश्च ।

न चार्थज्ञानमपि प्रयोजनम् : उभयोर्व्याहतत्वेनोभयपरत्वानुपपत्तेः । [2]जपो हि चातुःस्वर्येण निरर्थकपदोच्चारणमात्रम् । अर्थपरत्वे चानुष्ठेयार्थप्रकाशकता स्यात् । स्वाध्यायस्यानुष्ठेयार्थश्च जपपारायणे एव । ते प्रकाशानर्हे । यथा "बर्हिर्देवसदनं दामि" इति मन्त्रेण बर्हिर्लवनप्रकाशः, न हि तथा जपपारायणे प्रकाश्येते स्वाध्यायेन । तत्र त्वन्य एवार्थाः प्रकाश्यन्ते । तात्पर्याभावे प्रतीतानामपि तेषामभानमेव । जपस्य च जप एव तात्पर्यम्, विनियोगात् । नार्थेषु जपवद् विनियोगः । जप्यानि च निरर्थकानि दृश्यन्ते विषहरणादीनि वाक्यानि । अर्थपरत्वे च न जपपरत्वमिति परस्परव्याहतेर्नोभयपरत्वोपपत्तिः । जपपारायणाभ्यामेव कृत्स्नस्वाध्यायसंस्कार्यत्वोपपत्तौ न प्रयोजनान्तरकल्पनाकाङ्क्षा च । "वेदमेव जपेन्नित्यम्", "त्रिः स्वाध्यायं वेदमधीयीत" इत्यादिना जपादौ च विनियुक्तः स्वाध्यायः । स्वाध्यायशब्दार्थश्च स्वशाखा कृत्स्नैव; नैकदेशः ।

न च साङ्गाध्ययनात् धर्मादिपुरुषार्थप्रतीतेः लिङ्गादर्थेऽपि विनियोग इति वाच्यम्, तस्य लिङ्गत्वेन जपश्रुतिबाधितत्वात् । एवं स्वाध्यायस्यार्थपरत्वाभावेऽर्थनिर्णयाय मीमांसाप्रवृत्तिरागो विच्छिन्न इति न मीमांसारम्भ इति । तदाह—

"एवं स्थिते विचारोऽत्र—न प्रवर्त्या विचारणा ।
स्वाध्यायस्य जपार्थत्वादर्थतात्पर्यभङ्गतः ॥
न त्वर्थो न च तात्पर्यं तदभावाद्धुमादिषु ।
नोभयत्रापि तात्पर्यं द्विपरत्वविरोधतः ॥

---

1. अनधिकृतेति । ब्राह्मणस्याश्वमेधेऽनधिकारात तद्विध्यर्थज्ञानस्यानुपयोगात् तद्विधिपरश्रुत्यध्ययनं न स्यादित्यर्थः ।

2. जपो हीत्यादिना व्याहतत्वोपपादनम् ।

विनियुक्ता जपे कार्त्स्न्यान्नार्थज्ञानं भवेच्छ्रुतेः ।
निरर्थकपदोक्तिर्हि नाविरोधोऽनयोरतः ॥
लिङ्गादर्थप्रतीतिर्या सा जपश्रुतिबाधिता ।
अतत्परत्वेऽवसिते स्याज्ज्योऽर्थोऽवगतोऽप्यतः
आम्नायार्थविचारे च छिन्नो राग इति स्थितम् ।"

इति ।

राद्धान्तस्तु—अर्थज्ञानमपि प्रयोजनम्, शब्दानामर्थपरत्वस्य स्वाभाविकत्वात् । अन्यथा स्वाभाविकार्थपरत्वहानिः । न च जपपरत्वादर्थपरत्वहानिरिष्टेति वाच्यम्; जपाध्ययनविध्योरपि वेदान्तर्गतत्वेनार्थपरत्वाभावापत्तावननुष्ठेयतापत्तेः । चक्रकापाताच्च—"त्रिः स्वाध्यायं वेदमधीयीत" इत्यादिविधेरर्थवत्त्वे स्वाध्यायो नार्थपरः । ततो वेदान्तर्गतत्वेन जपविधिरपि नार्थपरः । अस्यार्थपरत्वाभावे स्वाध्यायोऽर्थवान् । ततस्तदन्तर्गतत्वेन तद्विधिरप्यर्थवान् । तस्यार्थपरत्वे च पुनः स्वाध्यायो नार्थपर इति अतो जपाध्ययनविध्योः स्वसिद्ध्यर्थं स्वाध्यायस्यार्थपरत्वमाकाङ्क्षितमेव ।

न च जपस्य निरर्थकपदोच्चारणरूपत्वात् जपार्थपरत्वयोर्वस्तुविरोध इति वाच्यम्, जपो निरर्थकपदोच्चारणरूप इत्यत्र प्रमाणाभावात् । न चार्थपरत्वेऽनुष्ठेयजपस्यैव प्रकाश्यत्वापत्तेः, तस्य च प्रकाश्यत्वाप्रतीतेर्न जपपरत्वेऽर्थपरत्वमिति वाच्यम्; मन्त्राणामनुष्ठेयार्थप्रकाशनस्याव्यापकत्वात्; दक्षिणाग्न्यन्वाधानकरणत्वेन विवक्षितस्य "मयि देवा द्रविणमायजन्ताम्" इति मन्त्रस्य यथा नानुष्ठेयार्थप्रकाशकत्वम् । न हि तत्रान्वाधानं प्रकाश्यते ।

अथ देवतापरिग्रहपरत्वादन्वाधानस्य तत्प्रकाशको मन्त्र इति—तन्न; तस्याप्यप्रकाशकत्वात् । न हि तत्र देवतापरिग्रहः प्रकाश्यते । अथ 'देवाः' इत्यंशतः कथंचित् तत्प्रकाशकत्वमिति चेत्, तर्हि तादृक् प्रकाश्यत्वं जपस्यापि संभवति; जप्यस्वाध्यायान्तर्गतेन "यं यं क्रतुमधीते तेन तेनास्येष्टं भवति" इत्याद्यंशेन जपस्यापि प्रकाश्यमानत्वात् । किंच एतद्वाक्यादेव स्वाध्यायस्यार्थपरता सिद्धा, क्रतुशब्देन क्रतुपरब्राह्मणमन्त्राणां विवक्षितत्वात् । तच्च न क्रियात्मकक्रतोः, अध्येतव्यत्वाभावात् । अध्येतव्यत्वं च शब्दात्मकवेदस्यैव । न च (तु) केवलशब्दस्य क्रतुशब्दाभिधेयत्वम् ।

किंच, "सौरीं जपेद्वारुणीम्" इत्यादौ जप्यमन्त्राणामपि सूर्याद्यर्थपरत्वावगतेश्च। सूर्याद्यर्थपरत्वादेव हि सौरीत्याद्यभिधानम्। एवंच सावित्र्यादीनां जपे तदर्थानुसंधानशास्त्रवैयर्थ्यम्। निरर्थकपदोच्चारणरूपत्वेऽपि जपकालेऽर्थाविवक्षामात्रावगमादप्युपपत्तिः। न हि स्वाभाविकार्थपरत्वं विनैव जपेन भाव्यमिति नियमः, विध्याकाङ्क्षितत्वेनार्थपरत्वस्वीकारात्। न च द्विपरत्वविरोधोऽपि, प्रसिद्धशेषभावपदार्थस्य हि शेषत्वम्[1]। प्रसिद्धशेषभावपदार्थप्रसिद्धिश्च जपविधेरर्थपरत्वे। अन्यथा स्वाध्यायस्य शेषिणोऽविनियुक्तत्वेनाप्रसिद्धिः।

न चाध्ययनविधिशेषिस्वाध्यायस्य जपमात्रविनियोगादपि निरूढिसिद्धेर्नार्थेऽपि विनियोगापेक्षेति वाच्यम्, जपविनियोगसिद्ध्यर्थं वेदैकदेशजपविधेरर्थपरत्वस्य तावदपेक्षितत्वात्। अध्ययनविधेश्च स्वसिद्धये कृत्स्नस्वाध्यायस्यार्थपरताप्यपेक्षितैव। अन्यथा वेदान्तर्गतत्वेन स्वपरवाक्यवन्नार्थपरत्वम्।

न चार्थपरत्वस्याव्यापकत्वान्न स्वीकार्यतेति वाच्यम, विध्याकाङ्क्षितत्वेन स्वीकार्यत्वात्। किंच हुंफडादेर्गानांशपरिपूरणतयैवाध्ययनम्; नार्थपरतया। न च स्वाध्यायस्य न प्रयोजनैक्यसिद्धिरिति वाच्यम, आधानसंस्कृताग्निष्वपि चोद्यस्य समत्वात्। तस्मादविवक्षितावान्तरभेदेन स्वाध्यायसाध्यस्य सर्वस्य प्रयोजनत्वेन स्वीकारः। अनेकप्रयोजनलाभे चाध्ययनप्रवृत्तिशैघ्रयम्। एवं स्वाध्यायस्यार्थपरतानिर्णयान्मीमांसाप्रवृत्तिरागाविच्छेदात तदारम्भ इति। तदाह—

"राद्धान्तस्तु—प्रवर्त्या सा स्वार्थतात्पर्यनिश्चयात्।
स्वाभाविकार्थपरता शब्दानां हीयतेऽन्यथा॥
न तत् स्याच्चक्रकापातादाम्नायान्तर्गतत्वतः।
अतत्परे जपविधौ स्वाध्यायेऽर्थपरे पुनः॥
तद्विधेरप्यर्थवत्त्वे पुनर्वेदोऽप्यतत्परः।
आनर्थक्यं ततः प्राप्तं पुनर्जपविधेरिति॥
स्वाध्यायस्यार्थपरता संमता तद्विधेरपि।
न च वस्तुविरोधोऽस्ति न जपार्थपरत्वयोः॥
जपानुष्ठानकालेऽर्थविवक्षाभावमात्रतः।
उपपत्तेर्न चाव्याप्तेस्तत्परत्वस्य निग्रहः॥

1. पा०. 'प्रसिद्धशेषभावपदार्थस्य हि शेषत्वं प्रसिद्धशेषभावपदार्थं प्रति। प्रसिद्धिश्च'

विधेराकाङ्क्षितत्वेन न नानार्थविरोधिता ।
किंच वेदस्य यत्साध्यं तस्य सर्वस्य तद्विदा ॥
प्रयोजनतया युक्तमविविच्य परिग्रहात् ।
यथाहितानामग्नीनां सर्वे यज्ञाः प्रयोजनम् ॥
अतो न रागविच्छेदस्तत्प्रवृत्ताविति स्थितम् ॥

ननु "अथातो धर्मजिज्ञासा" इत्यत्र मीमांसाप्रवृत्तियुक्तेर्निरूपितत्वादत्र पुनरुक्तिः किमर्थेति चेत्—सम्यगर्थाभिधानायेति ब्रूमः ।

ननु—अर्थज्ञानपर्यन्तत्वे वेदान्तानां कर्मकर्तृजीवपरत्वापातात् तज्ज्ञानस्य च कर्माङ्गत्वापत्तौ न ब्रह्मपरत्वेन विचार इति तदर्थमेव "पुरुषार्थोऽतः" इत्यत्रोक्तन्यायाभिधानमिति—तन्न; भाष्यादौ "पुरुषार्थोऽतः" इत्यस्य शास्त्रारम्भपरत्वाप्रतीतेः । तत्र हि पुरुषार्थावाप्तिः किं कर्मणः? उत विद्यातः? इति निरूपणम् । किंच कर्तृजीवपरत्वेनापि वेदान्तविचारारम्भसिद्धिः । तत्परत्वेऽपि हि वेदान्तवाक्यार्थनिरूपणं संगच्छते, सर्ववाक्यानां जीवपरत्वासिद्धेः; "पृथगात्मानम्" इत्यादौ च परस्यापि प्रतीयमानत्वात् । जीवात्मनोऽर्थवित्तिषु भासमानत्वेन, अर्थपर्यन्तत्वेऽपि वेदान्तैकगम्यता नेष्टा । अध्ययनविधेरर्थज्ञानपर्यन्तत्वादिना कथंचन तत्परत्वापादनेऽपि न मनाक् तदारम्भाक्षेपसिद्धिः । अत एव हि "अध्ययनमात्रवतः" इति सूत्रे अध्ययनविधेरर्थज्ञानपर्यन्तत्वमभ्युपेत्याप्यङ्गत्वपरिहारोक्तिर्भाष्ये । यद्यर्थज्ञानपर्यन्तत्वेऽनारम्भः स्यात्, तदा न तथोक्तिः स्यात् । अर्थज्ञानपर्यन्तत्वानारम्भयोश्च न व्याप्तिः । अत एव जीवातिरिक्तपरमात्मपर्यन्तत्वेऽपीति न तस्यारम्भपरिपन्थिता ।

न चार्थज्ञानपर्यन्तत्वे जीवपरत्वापादनमपि वेदान्तानाम् । स्वाध्यायविधेरर्थज्ञानपर्यन्तताऽस्तु; तथापि श्रुतिस्वारस्यात् परं ब्रह्मैवापातप्रतीतमस्तु । तत्परत्वेनापि विचारारम्भे को विरोधः? किंच उत्तरमीमांसारम्भे सिद्धार्थे व्युत्पत्त्यभावादिविषयैव भाष्यादावुक्तिः[1]; न त्वर्थज्ञानपर्यन्ततया । अतः "अध्ययनमात्रवतः" इति सूत्रोक्तसम्यगर्थप्रदर्शनद्वारा शास्त्रारम्भसाधनपरत्वेनैवाध्ययनविधेः पुनर्निरूपणम् । ननु तद्वाक्यार्थभाष्ये न पूर्वपक्षसिद्धान्तोक्तिर्दृश्यत इति—तन्न; सिद्धान्तोक्तौ सामर्थ्यात्

1. उक्तिरिति । उत्तरमीमांसारम्भावसरे तद्विषये आक्षेपोक्तिरित्यर्थः ।

पूर्वपक्षोन्नयनस्य शक्यत्वादित्यनुक्तत्वात् । वेदस्यार्थपरत्वाभावशङ्कायां ह्यर्थपरता वर्णनीया । अत एव हि वेदान्तसारे "एवं वेदस्यार्थपरत्वे" इत्युक्तिः ।

ननु अध्ययनस्याचार्यप्रवृत्तिप्रयुक्तत्वोक्तिर्न भाष्य इति—तन्न; "अष्टवर्षं ब्राह्मणमुपनयीत" इत्यादिभाष्यादेव, "सत्संतानप्रसूत—" इत्यादिभाष्याच्च तत्प्रतीतेः । अचार्यप्रवृत्तिपुरस्कारेण प्रयुक्तिरुक्ता तत्र । अन्यथा तदुक्तिवैयर्थ्यम् । आचार्यप्रवृत्तिश्च न विधित इत्युक्तम् । अतो रागसंभवश्चोक्तः ।

ननु "अध्ययनेनैव वेदाढ्य" इति भाष्यादध्ययनस्य विधिप्रयुक्तताधीः । विधित्वं नाम साध्यत्वम् । तस्यैव प्रेरणत्वात् प्रयोजनत्वमपि युक्तम् । तादृशप्रेरकत्वज्ञापकत्वमेव हि श्रुतेर्विधायकत्वम् । न हि पुरुषवत् प्रेरयति श्रुतिः । अतः स्वविधिप्रयुक्तत्वमेवाभिमतमिति—तन्न; अध्ययनस्य स्वाध्याय-निष्ठत्वेन संस्कारकत्वाभिधानात् स्वतः साध्यत्वाभावात्; स्वाध्यायस्य जपादिसाधनत्वात् । जपादिप्रयोजकत्वे तु शूद्रादेरपि प्रयुक्तिरित्युक्तम् । तद्भाष्ये विधिप्रयुक्तिस्स्वनीप्सिताध्ययनसाध्यपरा । स्वाध्यायादीप्सितसाध्य-त्वाभिधानात् आचार्यरागप्रवृत्तिरेवाभिमता । श्रीराममिश्राचार्यैरुक्ता च । अतः, "अध्ययनं किंरूपम्" इति ग्रन्थस्याप्ययमेवार्थः[1] ।

(अत्र ग्रन्थपातः)

1. अयमेवार्थ इत्येतदुपरितनोऽध्ययनविधिप्रकरणभागो लुप्तः । तृतीय-प्रकरणं स्वतःप्रामाण्यनिरूपणपरम् । तस्याप्यादिमो भागो लुप्तः ।

श्री:

## ३ स्वतःप्रामाण्यनिरूपणम्

(अत्र ग्रन्थपातः)

....व्यभिचारिधर्मत्वादप्रामाण्यवदित्यनुमानात तत्सिद्धिरिति—तन्न; विकल्पासहत्वात् । एतदनुमानं स्वतः प्रामाणम्, परतो वेति । आद्ये, हेतुरनैकान्तिकः । द्वितीये त्वनवस्था, तदनुमानप्रामाण्यस्यापि प्रमाणान्तरगम्यत्वात् ।

किंतु प्रामाण्यं स्वत एव; प्रामाण्यं ज्ञानसत्ताप्रतीतिकारणादेव कारणवत् अनुपलभ्यमानकारणत्वे सति सकारणत्वात ज्ञानवदित्यनुमानात् । न च चक्षुरादेरेव ज्ञानकारणत्वात् तत्प्रामाण्यस्याञ्जनादिकारणजन्यत्वात् हेतुर्विशेषणासिद्ध इति वाच्यम; चक्षुषोऽञ्जनादिगुणाधानेऽपि भ्रान्तिज्ञानजनकत्वदर्शनात् अञ्जनादेरकारणत्वात । [1]अदृश्यमानगुणकल्पनायां च न प्रमाणम् । अस्मिन् मते स्वशब्द आत्मीयपरः । न च—चक्षुरादेः स्वभावतः प्रामाण्यहेतुत्वेऽप्रामाण्योत्पत्तिरेव न स्यात ; जायते च ततस्तदिति वाच्यम्; सहकारिविशेषादेवोभयकारणत्वोपपत्तेः । सहकारी च कारणकोटिप्रविष्ट इति ।

एतदपि न सहन्ते तार्किकाः । किं प्रामाण्यं सर्वत्रोत्पाद्यम्? किं वा क्वचित्? अथ सर्वत्र ज्ञेयम्? उत उभयतोऽपीति । न तावदाद्यः; वेदप्रामाण्यस्य नित्यत्वेनाजन्यत्वात । न च वेदाख्यकरणजज्ञानमेव प्रमाणम्, न वेद इति वाच्यम; वेदस्यापौरुषेयत्वेन प्रामाण्यसाधनवैयर्थ्यात्[2] । अपौरुषेयत्वं च शब्दसंनिवेशविशेषः[3] । वाच्यवाचकसंबन्धे च ज्ञानप्रामाण्यवादिनः करणप्रामाण्यमपीष्टम । नापि द्वितीयः, प्रामाण्योत्पत्तिसाधनस्याव्यापकत्वात्[4] । नापि तृतीयः; उत्पत्तिसाधनवैयर्थ्यात् । नापि

---

1. अदृश्येत्यादि । प्रामाण्यं प्रतीत्यादिः ।

2. वैयर्थ्यादिति । अपौरुषेयत्वाद् वेदः प्रमाणमिति हि सिद्धान्तिसंमतम । तच्च न स्याद् वेदस्य करणस्य प्रामाण्यास्वीकारे इति भावः ।

3. संनिवेशविशेष इति । न तु ज्ञानधर्म इति भावः ।

4. अव्यापकत्वादिति । उत्पत्तिरूपं साध्यं पक्षैकदेशे बाधितम् । हेतुश्च भागासिद्ध इति भावः ।

चतुर्थः; पूर्ववद्दोषेणापि व्याप्त्यसंभवात् । अतो ज्ञायमानत्वमेव स्वतः साध्यत्वेनावशिष्टम् । करणस्य प्रामाण्यं नामाव्यभिचारिज्ञानजनकत्वम् । अबाधितव्यवहारहेतुत्वमेव ज्ञानस्य प्रामाण्यम् ।

तत्किं स्वतःप्रामाण्यं स्वरूपमेव? उत शक्तिर्वा? नाद्यः; प्रमाणभूतेन्द्रियस्य स्वरूपग्राहक[1]ज्ञानकार्यत्वानुमानादव्यभिचारिज्ञानजनकत्वाप्रतीतेः । मिथ्याज्ञानकार्यत्वस्यापि चक्षुराद्यनुमापकत्वात् ततोऽपि प्रामाण्यज्ञानापत्तेश्च[2] । नापि शक्तिः; तस्या अतीन्द्रियत्वात् अन्याश्रितत्वात् अनुमानाद्धर्म्यवगत्युत्तरकालमनुमानान्तरेणानुमेयत्वेनैककारणजन्यत्वाभावात् । एवं च प्रतीति[3]कारणादेव कारणवदित्यनुमानवैयर्थ्यम् । अनुपलभ्यमानेत्यादिविशेषणासिद्धिश्च, प्रामाण्यं प्रति कारणोपलम्भात् ।

ननु तत्रापि प्रमाणानुमापकज्ञानाख्यकार्यादेवानुमानमिति — तन्न; कार्यादिभेदेनैककारणजन्यप्रतीत्यभावस्योक्तत्वात् । कारणमेव पूर्वं कार्यादनुमीयते । ततस्तच्छक्त्यनुमानं तु पश्चादेव । एवमनुमानेऽपि धूमः प्रत्यक्षः । तस्य वह्निज्ञानजनकता तु ज्ञानकार्येण वा अन्वयव्यतिरेकाभ्यां वा गृह्यत इति कारणतत्प्रामाण्ययोर्नैककारणवेद्यता । एवं शब्दतत्प्रामाण्ययोरपि प्रत्यक्षानुमानवेद्यत्वेन नैकप्रमाणवेद्यता । न च — न कारणप्रामाण्यमिष्टम्; अतो नास्मन्मतविरोध इति — वाच्यम्; वेदाख्यकारणप्रामाण्यस्याङ्गीकृतत्वात् ।

ज्ञानप्रामाण्यपक्षेऽपि ज्ञानस्य यत्प्रमाणाद् ग्रहः, न तत्प्रमाणादेव अबाधितव्यवहारहेतुत्वाख्यं प्रामाण्यमपि गृह्यते ।

किंच मायावादिनो ज्ञानस्य स्वयप्रकाशत्व हीष्टम् । तथात्वे कारणान्तरवेद्यत्वोक्तिर्वक्ष्यम्, स्वशब्दस्यात्मीयवचनतापरित्यागात् । तस्यास्वयंप्रकाशत्वेऽप्यबाधितव्यवहारहेतुत्वाख्यप्रामाण्यं तु व्यवहाराबाधेन प्रमाणान्तरावगतेन गम्यते (कल्प्यते) इति नैकप्रमाणवेद्यता । प्रमाणान्तरेणानुभूतिप्रामाण्य-

1. ज्ञानकार्यत्वानुमानादिति । ज्ञानगतकार्यत्वरूपहेतुबलादित्यर्थः । ज्ञानकार्यकत्वरूपहेतुनेति वा । आद्ये ज्ञानं प्रमाणभूतेन्द्रियजन्यं कार्यज्ञानत्वादित्यनुमानम् । अन्त्ये इन्द्रियमव्यभिचारिज्ञानजनकं ज्ञानकार्यकत्वादिति ।

2. ज्ञानापत्तेरिति । मिथ्याज्ञानादपि प्रामाण्यानुमानापत्तेरित्यर्थः ।

3. कारणादेवेति । ज्ञानकारणातिरिक्तकारणकत्वेन, 'प्रतीतिकारणादेव कारणवत्' इति पूर्वोक्तं साध्यं दुर्घटमिति भावः ।

स्वतस्त्वसाधनेऽपि नाप्रामाण्यवैषम्यं च, सर्वप्रमाणानामपि भेदवासनामूलविषयत्वेन मिथ्यार्थविषयत्वाभिधानात् । सन्मात्रविषयत्वसाधने तु प्रमाणविषयघटादिवत् सतोऽपि मिथ्यात्वापत्तिः । प्रमाणप्रमेययोः सत्त्वाङ्गीकारे द्वैतसिद्धिरिति न कथंचिदपि स्वतःप्रामाण्यसाधनं मिथ्यावादिनः । ततः स्वमतानुसारतः स्वतोऽप्रामाण्यसाधनमेव युक्तम्; वास्तवप्रमाणप्रमेययोरनङ्गीकारात् । व्यावहारिकसत्यपदार्थसिद्धिस्तु परतः प्रामाण्येऽपि, सौगतमतवत् । सौगतैर्हि ज्ञानस्यार्थाव्यभिचारानिश्चयादप्रामाण्यमेव स्वतः; कारणगुणार्थक्रियासंवादज्ञानैः प्रामाण्यं तु परत एवेत्युक्तम् । एवंविधप्रामाण्यं च व्यावहारिकसत्यत्वहेतुः; न परमार्थसत्यत्वहेतुरिति चोक्तम् । मिथ्यावादिपक्षेऽपि प्रमाणज्ञानानां वस्तुतो मिथ्यात्वाभिमानादप्रामाण्यमेव । स्वतःप्रामाण्यं तु भ्रान्त्येति परत एवेति साधनीयम् । अथ [1]तदेव मतमस्माकमपि वस्तुतः; ततः को दोष इति—उच्यते । कारणगुणज्ञानादेरपि ज्ञानत्वाविशेषात् प्रामाण्यसिद्ध्यर्थं गुणज्ञानपरम्परायामनवस्थेति ।

नन्वस्तु मिथ्यावादिप्रक्रियया न स्वतः प्रामाण्यसिद्धिः, तत्साधनवैयर्थ्यादिति । भाट्टप्रक्रियायां तु न कश्चिद्दोषः । तथाहि—तन्मतेऽपि व्याख्यातृविप्रतिपत्त्या यद्यपि प्रक्रियाबाहुल्यम्; तथाप्येकमतावलम्बात् प्रक्रियान्तराण्युत्सार्योच्यते—

[2]"आत्मवाची स्वशब्दोऽयं स्वतो भाति प्रमाणता ।
अर्थस्य च तथाभावः प्रामाण्यमभिधीयते ॥"

"तस्मात् स्वतः प्रमाणत्वं सर्वत्रौत्सर्गिकं स्थितम् ।
बाधकारणदुष्टत्वज्ञानाभ्यां तदपोद्यते ॥"

इति ।

[3]ज्ञानस्यार्थप्रकाशोपक्षीणत्वात् स्वगतप्रामाण्यावगत्यनुपपत्तेः । स्वेन स्वाग्रहणे च न स्वगतप्रामाण्यधर्मग्रहः । स्वग्रहे च कर्मकर्तृत्वविरोधः । प्रमाणान्तरेण ग्रहणे चानवस्था ।

---

1. तदेवेति । सौगतोक्तमेवेत्यर्थः ।

2. आत्मवाचीति । अत्र 'प्रथमवचनं न्यायरत्नमालागतम्' । द्वितीयं तद्वार्तिककारीयम् ।

3. ज्ञानस्य स्वप्रकाशत्ववादिप्राभाकरमतं भाट्टेन खण्ड्यते ज्ञानस्येति ।

[1]ज्ञानमर्थप्राकट्यान्यथानुपपत्त्या कल्प्यते । तदेतदर्थापत्त्याख्यं प्रमाणमभिमतम् । तदपि स्वतःप्रमाणत्वेनेष्टम् । तत्रापि स्वतः परतो वेति विकल्पः समः । ज्ञाततया ज्ञानकल्पनायां न तत्प्रामाण्यकल्पनमपि । तथा तत्कल्पनायां च विपर्ययज्ञानेऽपि तत्कल्पनापत्तिः । न च विपर्यये न [2]ज्ञातमिति वाच्यम्, विपर्ययज्ञानाभावापत्तेः । इष्यते च तज्ज्ञातता । व्यतिरिक्तकारणात् तत्कल्पनायां च स्वतःप्रामाण्यम् । स्वीयकरणादेव तत्सिद्धेः स्वतस्त्वमिष्टम् । स्वशब्दस्यात्मवाचित्वं नाचार्यानुमतम्, ज्ञानस्य स्वयंप्रकाशत्वानभ्युपगमात् । अतः स्वतस्त्वं स्वीयकारणजन्यत्वमेवेत्येतदनुपपन्नं मीमांसकानाम्, करणप्रामाण्यस्यापीष्टत्वेन करणैकदेशाजन्यत्वादिना दूषणस्य पूर्वमेवोक्तत्वात् ।

अपरं मतम्—अनधिगततथाभूतार्थनिश्चायकत्वं प्रामाण्यम् । तच्च ज्ञानादेव स्वस्मादुत्पद्यते; न तु ज्ञायत इति—तदप्यसत् । ज्ञानस्यैव प्रामाण्योत्पादकत्वे ह्यप्रामाण्यस्यापि तत एवोत्पत्तिरित्युक्तं स्यात् । एवमाद्येकदेशिमतनिरसनमूहनीयम ।

किंतु बुद्धेः प्रामाण्यं स्वस्मादेवावसेयम् । अप्रामाण्यं तु दुष्टकारणजन्यत्वबाधकज्ञानाभ्यामिति परत एव । स्वविषयतथात्वं हि प्रामाण्यम् । तच्च स्वस्मादेवोपगम्यम् । अयमर्थः—तथाभूतार्थज्ञानं हि प्रमाणमुच्यते लोके । अतथाभूतार्थज्ञानं चाप्रमाणम् । ततश्च तथाभूतार्थज्ञानत्वमतथाभूतार्थज्ञानत्वं च प्रामाण्यमप्रामाण्यं चाऽऽयातम् । एवं विषयतथात्वावधारणात्मकं प्रामाण्यमात्मनैव निश्चीयते । तदा न कश्चन कर्मकर्तृत्वविरोधः, [3]तद्विषयतथात्वनिश्चयात्मकत्वात् प्रामाण्यस्य । यदि ज्ञानस्य स्वतो निश्चयाशक्तिः, ततो निश्चयस्यात्यन्ताभावः स्यात्; परतो निश्चयेऽनवस्थापातात् । एवंविधस्वतःप्रामाण्यमर्थान्यथात्वकारणदुष्टत्वज्ञानाभ्यामपोद्यत इति भाट्टैकदेशिमतसंग्रहः ।

तच्चानुपपन्नम, विकल्पासहत्वात् । विषयतथात्वं नाम किं विषयधर्मः? तज्ज्ञानधर्मो वा? आद्ये ज्ञानप्रामाण्यासिद्धिः । नापि द्वितीयः; स्मृतेरपि प्रामाण्यापातात्; तस्या अपि विषयतथात्वात् ।

---

1. ज्ञानमिति । अत्र ज्ञाततया ज्ञानकल्पने प्रामाण्यमपि गृह्यत इति भाट्टैकदेशिमतं खण्ड्यते ।

2. ज्ञातमिति । वस्त्विति शेषः ।

3. तद्विषयेति । तस्य ज्ञानस्य विषयेत्यर्थः । तदिति परिचायकमात्रम् ।

अथाविगतनयाऽननुसंधीयमानतथाभूतार्थनिश्चायकत्वं प्रामाण्यम्, तत्तु न स्मृताविति—तन्न; विकल्पासहत्वात्। एवंविधप्रामाण्यं किं स्वस्मादुत्पद्यते, ज्ञायते वेति। आद्ये, "स्वतो भाति प्रमाणता" इति स्वोक्तिविरोधः। नापि द्वितीयः, ज्ञानस्य स्वग्रहणाननुमतेः। स्वधर्मस्य विकल्पासहत्वात्। किमर्थधर्मः? आत्मधर्मः? ज्ञानधर्मो वा? आद्ययोर्न ज्ञानप्रामाण्यम्। तृतीये तु पूर्वोक्तज्ञानवत् स्वतो न ज्ञेयत्वम्। प्रमाणान्तराधिगततयाननुसंधानादीनां पृथक्पदार्थनिष्ठत्वात् नैकधर्मोपपत्तिश्च। अनुसंधानं ह्यात्मनिष्ठम्। तथात्वं चार्थनिष्ठम्। निश्चयजनकत्वं च ज्ञाननिष्ठमिति। न चात्मादित्रयं मिलितं प्रमाणमिष्टम्। तथाङ्गीकारे च विषयस्यापि प्रमाणकोट्यन्तर्भावात् प्रमेयाभावप्रसङ्गः।

किंच निश्चायकत्वं नाम किं ज्ञानस्वरूपम्? तच्छक्तिर्वा? आद्ये, स्मृतिज्ञानादेरपि प्रामाण्यापत्तिः, तस्यापि ज्ञानस्वरूपत्वात्। नापि द्वितीयः, शक्तेरतीन्द्रियत्वेन मानान्तरवेद्यत्वाभिमानात्।

अथ तच्छक्तिरेव प्रामाण्यम्; तच्च ज्ञानकारणैरेवोत्पद्यत इति मतम्—तन्न; "स्वतो भातीति" इत्युक्तिविरोधात्। गत्यन्तराभावात्। एतत्पक्षोऽपि सामर्थ्यातिरिक्तानिरूपणादनुपपन्नः। स्वनिरूपितत्वेऽपि शक्तेः शक्यनिष्ठता वाच्या[1]। न च संस्कारस्य शक्यता, मिथ्याज्ञानेऽतिप्रसङ्गात्। न चाबाधितव्यवहारस्य शक्यत्वम्, स्मृतेरप्यबाधितव्यवहारहेतुत्वेन प्रामाण्यापातात्।

अथ निश्चायकत्वरूपं ज्ञानसामान्यमेव प्रामाण्यम्; ततश्च तस्यानुत्पाद्यतया स्वतो ज्ञातत्वपक्षः सुस्थः[3] इति—तन्न; ज्ञानस्य स्वाग्रहणादेव स्वसामान्यग्रहणानुपपत्तेः। प्रमाणान्तराद् ग्रहणे च परतः प्रामाण्यम्। किंच भाट्टानां मिथ्याज्ञानमभिमतम्। तस्येदमंशेऽबाधितत्वात्

1. वाच्येति। शक्यविषये किल शक्तिर्वक्तव्या। किं तच्छक्यमिति निरूप्यतामित्यर्थः।

2. स्मृतिव्यावृत्ता अनुभूतिगता प्रामाण्यरूपा शक्तिः संस्काराधायकत्वरूपेति पक्षं खण्डयति—न चेति।

3. सुस्थ इति। सामान्यस्य जात्याः अनुत्पाद्यत्वेन स्वतो भवतीति पक्षं परित्यज्य स्वतो भातीति पक्ष इष्यत इति प्रश्नाशयः।

प्रामाण्यम्; रजतांशे बाधितत्वादप्रामाण्यमिति तत्र प्रामाण्याप्रामाण्यरूपसामान्ययोर्विरुद्धयोरेकत्र समावेशः स्यात्[1]।

बाधकारणदुष्टत्वज्ञानाभ्यां प्रामाण्यमपोद्यत इति किमुच्यते? बाधकारणदुष्टत्वज्ञानसहितमप्रामाण्यं तदपवादकम्, उत बाधादिज्ञाने एवेति।

नाद्यः। अपवाद्यप्राबल्यात् यत्र तद्विषये न कदाचित् प्रमाणोदयः, उदेत्येव तत्राप्यप्रामाण्यम्। तत्प्रमाणत्वे च ज्ञाने च नापवादकता। न चाज्ञातस्यापवादकत्वम्। तथात्वे चोत्पाद्यत्वमेवाङ्गीकृतम्; न ज्ञेयत्वम्। प्रामाण्यवदप्रामाण्यस्यापि ज्ञेयत्वमेवोचितम्; न तु वैरूप्यम्।

नापि द्वितीयः। प्रमाणस्यैव तदपवादकत्वाङ्गीकारादपोद्यमेवाप्रामाण्यं स्यात्। तथा च विशेषप्रमाणापोद्यसामान्यस्याप्रामाण्यापातः। न च विशेषविषये तदप्रामाण्यमेवेति वाच्यम्, विशेषव्यक्त्यलब्धावकाशत्वेन तदेकविषयत्वात् सामान्यस्य तदितरविषयोपसंहारमात्रत्वात्। न तावता प्रामाण्यम्, प्रामाण्याप्रामाण्ययोरनवस्थापातात्। मिथ्यार्थविषयज्ञानानामेव ह्यप्रामाण्यम्। न हि सामान्यविषयम्।

किंच दुष्टकारणजन्यत्वादिज्ञानाभ्यां मिथ्याज्ञानविषयस्यैवापवादः, न प्रामाण्यस्य। 'नेदम्' इति हि बाधकधीः। न तु न प्रामाण्यम् इति; प्रामाण्यं तु प्रमाणधर्मिगतमेव। न च—यथार्थविषयत्वमेव प्रामाण्यम्; विषयापवादे च प्रामाण्यमप्यपोदितमेवेति परतोऽपि प्रामाण्यमिति वाच्यम्—ज्ञानस्य ज्ञातताकल्प्यत्वाभिधानात् प्रामाण्यस्यापि तथात्वापातात्।

किंच प्रमाणज्ञानेनाप्रामाण्यम्, अप्रामाण्यज्ञानं चापोद्यते; न केवलमप्रामाण्यम्। 'नास्य ज्ञानस्याप्रामाण्यम्' इत्यपि हि धीः। तच्चाबाधितत्वसगुणकारणजन्यत्वज्ञानाभ्यामेवेति परत एव प्रामाण्यमिति कृतं विस्तरेण।

ननु प्राभाकरप्रक्रियया स्वतः प्रामाण्ये तु न कश्चिद् दोषः। तथाहि—अनुभूतेः स्वयंप्रकाशत्वात्, तस्याश्च स्मृत्यतिरिक्तत्वात्, स्मृत्यनुभूत्योश्च यथार्थत्वात्, तद्व्यतिरेकेण ज्ञानस्याकारान्तरानभ्युपगमात्। स्मृतेश्च प्रमाणान्तरपरिच्छिन्नविषयतया सापेक्षत्वेनाप्रामाण्यं परतः; अनुभूतिप्रामाण्यं च स्वतो ज्ञायत इति।

1. स्यादिति। अतः प्रामाण्यं न जातिरिति भावः।

एतच्च तार्किका न सहन्ते—किं प्रामाण्यं नाम? ज्ञानस्वरूपमेवेति चेत्—न; स्मृतिज्ञानस्यापि स्वरूपसंवेदनात् प्रामाण्यसंवेदनापत्तेः। न च शक्तिः प्रामाण्यम्; तस्या अनुमेयत्वेनाप्रत्यक्षत्वाभिधानात्। न चाबाधितत्वं प्रामाण्यम्; स्मृतिज्ञानस्याप्यबाध्यत्वेन तत्रातिप्रसङ्गात्।

ननु ज्ञानावान्तरजातिः प्रामाण्यम्। तथाचाश्रयस्फूर्तौ तदाश्रयजातिस्फूर्तिरिति—तन्न; रत्नादिषु व्यक्तिग्रहेऽपि तदाश्रिततैजसत्वजात्यनुपलब्धेः। न चात्मगुणेषु जातिः सामान्यम्, गुणेषु तदनङ्गीकारात्।

किंच अप्रामाण्यस्यापि ज्ञानावान्तरजातित्वेन स्वतस्त्वप्रसङ्गः। न चाप्रामाण्यं प्रमाणान्तराभावरूपम्; नावान्तरजातिरिति वाच्यम्; अभावानभ्युपगमात्ः। न च प्रामाण्ये प्रतियोगिन्यदृष्टे, अज्ञातानुपलब्धेरेव (केवलज्ञानोपलब्धेरेव) तदभाव इति वाच्यम्; प्रतियोगिनो दृश्यत्वानङ्गीकारात्। न हि प्रमाणं दृश्यतयेष्टम्।

न चास्तूभयमपि स्वत इति वाच्यम्, अप्रामाण्यस्यापि स्वतो ज्ञातत्वे शुक्तिकारजतादिप्रवृत्त्यनुपपत्तेः। न च सत्यत्वसारूप्यात् प्रवृत्त्युपपत्तिः, तत्समारोपस्यापि मिथ्यात्वावधारणात्। तत्रापि सत्यत्वारोपे चानवस्था।

न चास्मन्मते न विपर्यय इति न कश्चिद्दोष इति वाच्यम्; 'इदं रजतम्' इत्यादिज्ञानस्य प्रामाण्यानङ्गीकारात्। तदङ्गीकारे चाप्रामाण्यं परत इत्युक्तेर्निर्विषयत्वापातात्। ततश्च ज्ञानमात्रस्य प्रमाणत्वेऽनुभूतिरिति प्रमाणविशेषणोक्तिवैयर्थ्याच्च। शुक्तिकारजतज्ञानस्याप्रामाण्ये तस्य स्वतस्त्वे च पूर्वोक्तदोषानिवृत्तिः। न च 'इदं रजतम्' इति गृहीतिस्मृत्योर्भेदाग्रहात् प्रवृत्तिः; तयोः प्रामाण्याप्रामाण्ययोः स्वतस्संवित्त्वेन[1] भेदग्रहात्। तदसंवेदने च न तयोः स्वतस्त्वम्।

एतेन प्राभाकरमतनिरासेनैव अस्मद्राद्धान्तोऽपि निरस्तः; तस्यापि तदविशेषात्।

ततः प्रमाणस्वरूपावगमप्रमाणव्यतिरिक्तगुणदोषात्मकमेयज्ञानाभ्यामेव प्रामाण्याप्रामाण्ययोरवगतिरिति परत एवोभयमपि।

---

1. स्वतस्संवित्त्वेनेति। स्वतः संवेद्यत्वेनेत्यर्थः।

प्रयोगश्च—'विमतं प्रामाण्यं [1]प्रमाणव्यतिरिक्तग्राहकविज्ञानातिरिक्तविज्ञानगम्यम्, निष्कम्पप्रवृत्त्यङ्गत्वात्, पाचकवह्निव्यक्तिगतपाचकत्ववत्' इति। न ह्यग्निग्रहात् पाचकत्वशक्तिग्रहः। तच्छक्तिज्ञाने हि पाकार्थिनिष्कम्पप्रवृत्तिः।

प्रामाण्यं च प्रत्युत्पन्नकारणसामग्रीजनितस्य सदा सर्वत्राबाध्यत्वम्। न च तस्योत्पाद्यता, [2]प्रध्वंसातिरिक्तस्योत्पाद्यत्वासंभवादिति।

अत्रोच्यते—एतदसमीचीनमतमेव; प्रामाण्यज्ञानहेतुज्ञानस्यापि प्रमाणत्वेन प्रामाण्यज्ञानापेक्षायामनवस्थापातात्। न ह्यज्ञातप्रामाण्यस्यान्योत्पादकता। अनवस्थापरिहाराय कस्यचित् स्वतस्त्वाङ्गीकारे च न परतः प्रामाण्यम्।

न च—न स्वज्ञानात् स्वप्रामाण्यज्ञानाद्वा वस्तुव्यवस्था; किं तु अज्ञाततया। ज्ञायमानतयैव व्यवस्थापकत्वे कदाचिदपि न प्रमाणज्ञानम्। ज्ञानोत्पत्तेः प्राक् इन्द्रियतत्प्रामाण्ययोरज्ञायमानत्वादिति वाच्यम्; अज्ञातप्रामाण्यस्यापि कार्यकारणत्वे परतःप्रामाण्यसाधनवैयर्थ्यात्। अथ चक्षुरादिसंप्रयोगानन्तरं प्रवृत्तिदर्शने, ज्ञातप्रामाण्याः पुरुषाः प्रवर्तन्त इति परीक्षकैर्निरूपणीयमिति—तर्हि प्रमाण्यज्ञानादेव प्रवृत्तिः। इन्द्रियादिविशेषाज्ञानेऽपि ज्ञानकार्योत्पादकता। कारणस्य वस्तुत्वेन सामान्यावगतिसंभवश्च। उत्पादकता हि कार्यं प्रति काममज्ञायमानस्यापि। प्रामाण्यं तु ज्ञाततयैव कारणम्। वस्तुतः शुक्तिकारजतादावपि यथाकथंचित् प्रामाण्याधीनैव (धीन एव) प्रवृत्तिः, पक्षप्राप्तप्रामाण्याधीन[3] एव प्रवृत्तेः।

न च—प्रथमप्रामाण्यज्ञानस्यैव प्रवृत्त्यङ्गता, न परस्येति वाच्यम्; परस्मादप्रमाणादपि प्रथमप्रामाण्ये ज्ञाते तन्मिथ्यात्वापातात्[4]।

---

1. प्रमाणेति। प्रमाणज्ञानव्यतिरिक्तं यत् तद्ग्राहकं विज्ञानं, तदतिरिक्तेन विज्ञानेन गम्यमित्यर्थः।

2. प्रध्वसेत्यादि। प्रध्वंसरूपो ह्यभाव उत्पाद्यः स्यात्। न त्वयमन्याद्दशः अबाध्यत्वरूपोऽभाव इत्यर्थः।

3. अधीन एवेति, अधीनत्वं शुक्तिकारजतविशेषणं कथञ्चित्। प्रवृत्त्याश्रयपुरुषविशेषणं वा।

4. मिथ्यात्वापातादिति। अतः कथं प्रामाण्यज्ञानाद् वस्तुव्यवस्थेत्यर्थः।

अतः प्रमाणतया कारणत्वे ज्ञायमानस्यैव कारणत्वं प्रथमज्ञानवदिति तत्त्वम् । तदज्ञाने च न प्रवृत्तिरित्युक्तम् । अतः परमतेऽनवस्थानुमानं च द्रष्टव्यम् ।

एतेन ग्राहकविज्ञानातिरिक्तविज्ञानगम्यत्वसाधकं निष्कम्पप्रवृत्त्यङ्गत्वं प्रत्युक्तम् । किंचैकविज्ञानविषयत्वासामर्थ्यप्रयुक्तं दृष्टान्तेऽतिरिक्तविज्ञानगम्यत्वम् । न ह्यग्निग्राहकविज्ञानस्य चाक्षुषस्यातीन्द्रियपाचकत्वशक्तिविषयकता ।

ननु—पदार्थशक्तेरेव सर्वत्र प्रवृत्त्यङ्गत्वम, न तु पदार्थस्य । ततश्च तस्या एकविज्ञानविषयत्वासामर्थ्यात् साधनव्यापकत्वेन नोपाधितेति—तन्न; शक्तस्यैव कारकत्वेन शक्तिमात्रस्यैवाकारकतया प्रवृत्त्यनङ्गत्वात् । अग्न्यादयो हि तदुत्पादकतयाऽङ्गम ; न तु शक्तिः; प्रत्यक्षत्वात् अग्निनेति तत्र कारकविभक्तेः । प्रवृत्तेरुत्साहपरत्वेऽपि न द्रव्याणां ज्ञानद्वारा तदङ्गत्वम् । तथा पाकादिकार्यदर्शनात अग्न्यादिशक्तिनिश्चयसमय एव तस्याः द्रव्येण पृथक्तयैवानुमीयमानत्वात् ; शक्त इति ज्ञानस्य तदनुमानफलत्वात् ; विशिष्टार्थस्यैव प्रवृत्त्यङ्गत्वात् । यद्यपि शक्तिशक्तयोः पृथग्ज्ञानवेद्यत्वनिबन्धनं वैलक्षण्यम्, तथापि विशिष्टमेव प्रवृत्त्यङ्गम ; विशिष्टस्यैव तदुत्पादकत्वात् । विशिष्टज्ञानं शक्तिविषयानुमानमूलस्मृतिसहकृतचक्षुरादिना, सोऽयमिति सर्वकार्य-विशिष्टप्रत्यभिज्ञाप्रत्यक्षवत् । तत उपाधित्वं सिद्धमेव ।

दीर्घश्वेतादिगुणविशिष्टवस्त्रार्थिपुरुषस्य दीर्घत्वादिविशिष्टवस्त्रस्यैकविज्ञान-विषयस्यापि प्रवृत्त्यङ्गत्वदर्शनादनेकान्तता[1] ।

विमतं प्रामाण्यं प्रमाणग्राहकग्राह्यम्, प्रमाणधर्मत्वात, धूमगतरूपादिवत् ईश्वरप्रामाण्यादिवच्चेत्यनुमानात् विरुद्धाव्यभिचारिता च । करणप्रामाण्यवादिनां धूमोऽपि हि प्रमाणम् । ईश्वरप्रामाण्यञ्च धर्मिग्राहकप्रमाणसिद्धतया चाभिमतम् । तथा सर्वज्ञत्वादयोऽपि ।

यदुक्तं प्रत्युत्पन्नकारणसामग्रीजनितस्य सदा सर्वत्र बाधराहित्यं प्रामाण्यमिति—तन्न; कस्यापि प्रमाणस्य तादृशबाधराहित्यस्यास्मदादिभि-

---

1. अनेकान्ततेति । ग्राहकविज्ञानातिरिक्तज्ञानगम्यत्वसाधकस्य निकम्प-प्रवृत्त्यङ्गत्वहेतोः उक्तगुणे व्यभिचार इत्यर्थः ।

दुर्निरूपत्वात् । प्रमाणान्तरतस्तन्निरूपणे च पूर्वोक्तानवस्था । एवं प्रमाणान्तरापेक्षत्वे चाप्रामाण्यम्[1] ।

ननु स्वतःप्रमाणतापक्षेऽपि दोषोत्सारणाय कारणशुद्धिज्ञानस्यापेक्षितत्वात् तज्ज्ञानस्यापि कारणशुद्धिज्ञानापेक्षायामनवस्थादौःस्थ्यमिति ; अर्थावच्छिन्नाभावतत्कारणानां स्वतो दोषशङ्काभावात् कारणशुद्धेरनन्विष्यमाणत्वात् । तच्छङ्कायाश्च न कदाचिदप्रामाण्यसिद्धिः, शङ्कानिराकरणात् । ज्ञानस्यापि शङ्काग्रस्तत्वेनानवस्थापातात् ।

न च जिज्ञासाया उत्पत्तेः शङ्कामूलत्वात् तत्संभव इति वाच्यम्, सर्वत्र जिज्ञासानुदयात् । क्वचिदेव हि कारणान्तराच्छङ्कोदये जिज्ञासोदयः । अन्यथा न कदाचिद्व्यवहारसिद्धिः । अर्थेन्द्रियसंप्रयोगाद्यनन्तरं व्यवहारो लोकेऽनुभूतेर्यथार्थत्वादेव ।

एतेन बौद्धैरर्थव्यभिचारिस्वभावतयोक्तमप्रामाण्यस्य स्वतस्त्वं निराकृतम् ।

यच्च कारणशुद्धिविज्ञानात्, अर्थक्रियाविज्ञानात्, ज्ञानान्तरसंवादज्ञानाच्च प्रामाण्यं परत एवेति तेनो(तैरु?)क्तम्, तदपि तार्किकपक्षोक्तानवस्थायास्तत्रापि समत्वान्निरस्तम् । दूषणान्तराणि विस्तरभीत्या विरतानि ।

अतः स्वत एव प्रामाण्यम् । प्रमाणान्तरसापेक्षत्वे चाप्रामाण्यम् । अनुभूतिर्हि नः प्रमाणम् । प्रामाण्यं च प्रमाणान्तरानपेक्षार्थावच्छिन्नत्वम् । तच्चानुभूतिसत्तयैव प्रकाशते, घटानुभूतिरिति विषयसंबन्धतया स्वसत्तयैव स्वाश्रयात्मने स्फुरणात् । स्मृतिज्ञानस्य स्वसत्तयैव स्फुरणेऽपि परवेद्यतोल्लेखितार्थावच्छिन्नत्वेन प्रमाणान्तरापेक्षत्वान्न तत्र व्यभिचारः । अर्थावच्छिन्नता नामार्थसंबन्धित्वम् । संबन्धश्च संयोगः । तत्कृतो ज्ञानस्य द्रव्याद्यसाधारणव्यवहारः । तच्च भाष्य उक्तम् । अनपेक्षत्वं चार्थापेक्षाराहितत्वम् । तच्च केवलावस्थानुभूतिरेव, अभावस्य पृथक्पदार्थत्वानभ्युपगमात् । न चादृश्ये प्रतियोगिनि केवलावस्थद्रव्यादेरेवाभावव्यवहारविषयत्वान्नात्र प्रतियोगिप्रमाणस्य दृश्यत्वमिति वाच्यम्; प्रमाणज्ञानस्यापि दृश्यत्वाङ्गीकारात् । यत्प्रामाण्ये ज्ञानान्तरानपेक्षत्वमुच्यते; तत्प्रमाणमपि प्रमाणान्तरेण द्रष्टुं योग्यम् । न च दृश्यत्वे स्वयंप्रकाशत्व-

1. अप्रामाण्यमिति । स्मृतेरनुभवसापेक्षत्वेनाप्रामाण्यवदिति भावः ।

विरोधः ; संविद्रूपस्य वा स्वसत्तयैवाश्रयं प्रति प्रकाशमानत्वस्य वा स्वयंप्रकाशत्वरूपत्वाद् दृश्यत्वेऽपि तयोरन्यतरस्यानपायात् । [1]स्वयंप्रकाश इति तु नास्मन्मतम् । किंतु स्वप्रकाश एवेति । स्वप्रकाशश्च स्फुरणमेव ।

एवं च न तार्किकोक्तप्रामाण्यविकल्पदूषणानि ; अर्थसंबन्धरूपावस्थाया एव प्रमाणत्वाभिधानात् । अनुभूतित्वं वा प्रामाण्यमस्तु । तच्च ज्ञानावान्तरजातिः । सा च स्मृतिज्ञानजातितः पृथक्तया लोकत एव सिद्धा । अनुभूतेः स्वसत्तयैव स्फूर्तेः । प्रकाशते च घटमहं जानामीत्यादौ घटादिज्ञानम् । घट इति स्फुरणे घटत्वजातिविशिष्टद्रव्यस्फुरणवत् अनुभूतित्वविशिष्टानुभूतिस्फुरणम् ।

न च रत्नव्यक्तिग्रहेऽपि सामान्यानुपलब्धिदर्शनान्न व्यक्तिस्फूर्तौ सामान्यस्फूर्तिनियम इति वाच्यम् ; तत्रापि रत्नत्वविशिष्टस्फुरणात् । तेजस्त्वाद्यग्रहस्तु पार्थिवाद्यवष्टम्भद्रव्यावयवकृतः । अतो जात्यादिविशिष्टस्य स्फूर्तिः ।

न चाप्रामाण्यस्यापि ज्ञानावान्तरजातित्वापत्तौ स्वतस्त्वापत्तिरिति वाच्यम् ; तस्य स्वविषयपरिच्छेदे प्रमाणान्तरसापेक्षत्वात् । तस्य च विषयद्वारत्वात् । सापेक्षत्वस्यैवाप्रामाण्यात् । विषयस्य च साक्षाज्ज्ञानाधर्मत्वादस्वतस्त्वात् । स्मृतिरेव[2] ह्यप्रमाणम् । अथवा अप्रामाण्यस्य प्रमाण्याभावरूपत्वात् अभावस्य केवलधर्ममात्रत्वाच्च न जात्यन्तरत्वम् ।

न च धर्मिमात्रस्य स्वतः स्फुरणात् अप्रामाण्यस्यापि स्वतस्त्वापत्तिरिति वाच्यम् ; तस्य स्वविषयपरिच्छेदे प्रमाणान्तरसिद्धविषयत्वव्या(ज्ञा)प्यत्वेन पराधीनत्वात् ।

[3]अप्रामाण्यं परत इति प्रामाण्यकार्यव्यवहारहेतुत्वाभावो ज्ञायत इत्यर्थः । ननु स्मृत्यापि व्यवहारो दृश्यते । पूर्वेद्युर्वने फलं प्रत्यक्षतो दृष्ट्वा,

---

1. स्वयंप्रकाश इति । स्वेतराधीनप्रकाशरहित इत्यर्थः ।

2. स्मृतिरेवेति । शुक्तौ 'इदं रजतम्' इति ज्ञानं ह्यप्रमाणम् । तच्च रजतस्मृतिरेवेति भावः ।

3. स्मृतौ अयथार्थत्वरूपाप्रामाण्यस्य दुर्वचत्वात् तदनुरोधेन, 'अप्रामाण्यं परत' इत्यस्यार्थमाह अप्रमाण्यमित्यादिना ।

परेद्युस्तत्स्मरणात् तदाहरणप्रवृत्तेरिति—तन्न; स्मृतिद्वारा पूर्वानुभूतेरेव प्रवृत्तिहेतुत्वदर्शनात् ।

अप्रामाण्यं व्यवहारानतुकूलत्वं वाऽस्तु; तज्ज्ञानं बाधकादिज्ञानात् । अतः प्रमाणकार्यव्यवहाराहेतुत्वादप्रामाण्यम् ।

एवं प्रत्यक्षादिप्रमाणसिद्धविषयप्रमाणान्तरस्यापि न प्रमाणकार्यमित्य-प्रामाण्यव्यवहारः । न चान्यप्रमितित्वेऽपि कथं न प्रमाणत्वव्यवहार इति वाच्यम्; प्रमाणस्य हानादिव्यवहारार्थत्वात् व्यवहारस्य प्रमाणान्तरसिद्धेः कृतक(र)त्वात् ।

ननु संस्कारमात्रजज्ञानव्यतिरिक्तानां कथं प्रमाणताव्यवहारो भाष्ये? "न सर्वेषां ज्ञानानां प्रमाणानां च" इत्युक्त्वा, "स्मरणानुमानागमयोगिप्रत्यक्षादिषु" इति हि भाष्यम् । तत्र ज्ञानानामिति सामान्योक्तौ प्रमाणानां चेति प्रमाणानां पृथगुक्तेः प्रमाणव्यतिरिक्तस्मृतिज्ञानपरो ज्ञानशब्दः । स्मृतेः संस्कारमात्रजत्वम्, 'मत्तः स्मृतिर्ज्ञानमपोहनं च' इत्यत्रोक्त-मिति—तन्न; व्यवहारहेतुत्वयोग्यत्वेन तथोक्तत्वात् । अनुभूतेर्हानादि-व्यवहारानुकूलता अस्त्येव । अन्यतः सिद्धत्वादौदासीन्यमात्रमित्यविरोधः ।

एतेनानुष्ठानफलाभावेऽप्यप्रमाणतोक्ता । अनुष्ठानरूपव्यवहार-फलाभावात् सैवानुवादवाक्यानामपि गतिः । अनुवादजज्ञानस्यपि वाक्यजत्वाविशेषात् शास्त्रसिद्धमिदं तु न स्मृतिः; असंस्कारमात्रजत्वात् । संस्कारो हि प्रमाणान्तरप्रमितविषय एव धीजननस्वभावः । अनुवादवाक्यं त्वन्यानपेक्षिप्रतीतिजननशक्तमेवेति न तस्य स्मृतितुल्यता ।

ननु प्रत्यक्षादिज्ञानानां यथार्थत्वेऽपि शास्त्रस्य न यथार्थत्वनिश्चयः । अङ्गुल्यग्रादिवाक्यानामयथार्थत्वेनार्थासंस्पर्शस्वभावतया वाक्यात्मकशास्त्रेऽपि तथात्वसन्देहात् । न च नयनादिकरणदोषवशाद् भूयोवयवत्वाल्पावयवत्वादि-निबन्धनशुक्तित्वरजतत्वाग्रहणवत् अविवेकानिबन्धनता; शाब्दे ज्ञाने ज्ञानहेतु शब्दे दोषाभावात् । भ्रमादेस्तु पुरुषगतत्वेन न शब्ददोषत्वम् । पुरुषस्तु शब्दोच्चारणमात्रहेतुरिति न धीहेतुः । शाब्दज्ञानं त्वनपेक्षाच्छब्दादेव । शब्दे च न दोषोपलब्धिः । न चाप्तवाक्येभ्यो व्यवहारोच्छेदः; तत्र कृष्यादि-

ष्विव संदेहात् प्रवृत्त्युपपत्तेः । प्रमाणान्तरादाप्तत्वनिश्चयाद्वा प्रवृत्त्युपपत्तेः । वेदार्थस्य तु पाक्षिकत्वेनापि न सिद्धता; मानान्तरावेद्यत्वात् । वेदे व[क्त्र]नभ्युपगमाच्च न यथात्वप्रवृत्त्युपपत्तिः । अतः शब्देषु क्वचिदर्थव्यभिचारित्वदर्शनाद्वेदवाक्येषु अर्थसंस्पर्शित्वसंदेहान्न प्रामाण्यमिति—

अत्रोच्यते—पौरुषेयवाक्यानि तावन्न स्वतः स्वार्थे प्रमाणम् । किंत्वभिप्रायानुसारित्वेनैव प्रतीतिहेतुत्वाल्लिङ्गरूपेण पश्चात् प्रमाणम् । अतोऽनुमानस्यैव व्यभिचारांशता, न शब्दस्य । अतोऽर्थः संस्पृष्ट एव । अथ पौरुषेयवाक्यानां कथं लिङ्गत्वम्? कथं वा तेषां व्यभिचारशङ्केति—उच्यते । पौरुषेयवाक्यानां पुरुषाधीनरचनत्वात् पुरुषाणां विधिप्रमादभ्रमाशक्त्याशयदोषैरनन्वितार्थरचयितृत्वदर्शनात् अयथार्थत्वशङ्का । तत एव न प्रथमतस्तद्वाक्यादर्थनिश्चयः । यदा तु प्रमाणादर्थं ज्ञात्वैव तदर्थविवक्षया प्रमादादिरहितं शब्द उच्चारित इति ज्ञानम्, तदा हि ततस्तदर्थधीः । अयमर्थः—प्रमाणान्तराद्वक्तुराप्ततामवधार्य तद्वाक्यात् परबोधनाय प्रयुक्तात् ज्ञाननियतात् ज्ञानानुमानम् । ज्ञानं च वाक्यप्रयोगमूलं विशिष्टार्थनियतमिति तेन तदर्थनिश्चयो ज्ञानप्रमाणाज्जातः । पश्चात्तु तदर्थो वाक्यार्थतयाऽवगम्यत इत्यनुवादकतया नरवाक्यस्य न वाक्यतया प्रामाण्यम् । मानान्तराद्वक्तुरभिप्रेतार्थनिश्चये हि वाक्यस्य तत्परत्वनिश्चयः ।

न च—आप्तवाक्यत्वादेवार्थनिश्चयोस्तु; न मानान्तरादिति वाच्यम् । नरवाक्यानां प्रमाणासिद्धविषयत्वस्यापि दर्शनात् आप्ततावधारणसमय एव प्रमाणान्तर्भावात् । न हि तद्वाक्यादेवाप्तताऽप्यवधृता । यदिदमन्योन्यान्वययोग्यमियत्, तस्मादाप्ततमेन प्रमाणेन ज्ञात एवार्थ इति ज्ञानाविनाभाव्यर्थो ज्ञात इति तद्वाक्यमनुवाद एव ।

ननु लौकिकवाक्यस्य लिङ्गत्वेऽपि नार्थासंस्पृष्टत्वशङ्का लिङ्गज्ञानस्य स्यात् । स्वभावत्वे सर्वज्ञानानामपि तथात्वापातादिति—तन्न; अङ्गुल्यग्रादिवाक्यानां लिङ्गाभासत्वात् अन्वितार्थपरत्वनिश्चये सत्येव शङ्कावतारात् । लिङ्गालिङ्गविवेकाशक्तस्यालिङ्गेऽपि वाक्ये लिङ्गाभासत्वनिबन्धनो लिङ्गव्यवहारः ।

अतः शास्त्रप्रामाण्यं सिद्धम् ।

ननु लोके देवदत्तादिपदेषु संकेतादर्थधीदर्शनात् सर्वशब्दानामपि संकेतादेवार्थबोधजनकत्वम्; वेदार्थस्य प्रमाणान्तरावगम्यताया अनिष्टत्वात् संकेतश्चाशक्य इति वाच्यवाचकत्वावगतिर्न लोकावगम्येति न वेदार्थनिश्चय-इति न वेदस्यार्थसंस्पर्शित्वरूपं प्रामाण्यम्। न च प्रमाणान्तरगम्यताभ्युपगमे असङ्केतस्यापगमः; प्रमाणान्तरप्रतिपन्नविषयत्वेन मुखान्तरेणाप्रामाण्यादिति—

अत्रोच्यते— शब्दानामर्थप्रत्यायकत्वं स्वाभाविकमेव इन्द्रियाणां प्रत्ययविशेषजनकत्ववत्; वृद्धव्यवहारानिश्चितशक्तिकगवादिशब्देभ्योऽर्थावगतेरदृष्ट-कारणान्तरकल्पनानवकाशात्। वृद्धस्यापि पूर्ववृद्धात्, तस्यापि तत्पूर्वादित्यनादि-परम्परोपपन्ना। एवं निश्चितशक्तेः शब्दस्य नरप्रयुक्तत्वनिबन्धनाशङ्का च नापौरुषेये वेद इति अर्थः संस्पृष्ट इति नार्थासंस्पर्शित्वरूपमप्रामाण्यम्। साङ्केतिकत्वे च साक्षाद्वा परम्परया वा देवदत्तादिपदवत् संकेतो ज्ञायेत। व्यवहाराविच्छेदेऽपि न तज्ज्ञानम्; 'वृद्धिरादैच्' इत्यादिषु तु पाणिनिना व्याकृतत्वात्।

एतन्न्यायेन वेदस्यापौरुषयताऽपि सिद्धा। न च संप्रदानाविच्छेदेऽपि क्वचित् न पौरुषेयत्वसंकेतज्ञानमिति वाच्यम्—पुरुषरचितश्लोकानां पत्रिकादिषु लेखदर्शनाल्लिखितालोकनादपि पाठोपपत्तेः वृद्धसंप्रदायाभावात्। वेदस्य त्वाचार्योच्चारणानूच्चारणेनैवेति न संप्रदायविच्छेद इति।

न च अपौरुषयत्वेऽपि न प्रामाण्यम्। लौकिकवैदिकपदानां वैरूप्यदर्शनात् अर्थस्यादृष्टादेर्वैरूप्यश्रवणाच्च शब्दार्थयोर्भेदे च व्युत्पत्त्यभावान्न वेदार्थनिश्चय इति न तत्प्रमाणत्वमिति वाच्यम्; देवास इत्यादिवैदिक-पदानां देवा इत्यादिपदसारूप्यात् प्रत्यभिज्ञयैक्यप्रतीतेः। [1]वृक्षादिपदार्थस्य हिरण्यवर्णत्वादेश्च(?) वेदैकसमधिगम्यत्वेन विरोधाभावश्च। सर्वशब्दानां वैदिकेनैक्यं च—

'वेदेन रूपे व्याकरोत् सतासती प्रजापतिः'।
'सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक्।
वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे॥'

1. वृक्षेति। 'समाने वृक्षे पुरुषो निमग्नः', 'अहं वृक्षस्य रेरिवे'त्यादाविति स्यात्।

इत्यादिश्रुतिस्मृत्यवगतम् ।

ननु प्राकृतप्रलये वेदान्तिना ब्रह्मव्यतिरिक्तकृत्स्नप्रलयाङ्गीकारात् व्यवहाराध्ययनयोर्विच्छिन्नत्वादानुपूर्व्याश्रयप्राकृतशब्दानामपि नष्टत्वेनानुपूर्व्या अपि नष्टत्वात् वेदशब्दार्थसंबन्धयोः पौरुषेयत्वसांकेतिकत्वे च बलादायाते इति—तन्न; अध्यापकव्युत्पादकपरमात्मनः प्रलयकालेऽपि सद्भावात् वेदशब्दार्थसंबन्धयोरकृतकत्वस्य स्थितत्वात् । चतुर्मुखसृष्ट्युत्तरकालं तद्द्वारा तत्संप्रदायः प्रवृत्तः;

'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इति श्रुतेः ।

नन्वेकवृद्धेन शब्दोच्चारणपूर्वकव्यवहाराभावात् चतुर्मुखस्य कथं शब्दव्युत्पत्तिरिति—तन्न, परमात्मनः सर्वशक्तित्वेन नानारूपस्वीकारात् अनेकवृद्धत्वेन व्युत्पादकत्वोपपत्तेः । परमात्माहितशक्तित्वेन चतुर्मुखस्य वृद्धान्तरनिरपेक्षमेव व्युत्पत्तिर्वाऽस्तु । प्रलयकाले शब्दतदानुपूर्व्या नाशेऽपि न वेदानित्यता । अपुंप्रभवत्वस्यैव नित्यत्वाङ्गीकारात्[1] ।

ननु अपुम्प्रभवत्वस्यैव नित्यत्वे[2] शब्दानामर्थानां च कृत्स्नविनाशे शब्दार्थव्यक्तीनामानन्त्यात् संबन्धानन्त्ये व्युत्पत्तिराहित्यमिति—तन्न; अर्थानां सामान्याकारेणानन्त्याभावात्; अत एव शब्दतत्संबन्धानन्त्याभावाच्च । शब्दानामनित्यता च स्वाश्रयाकाशस्योत्पत्त्यादिश्रवणात् । आकाशोत्पत्त्युत्तरकाल आकाशवत् चिरकालस्थायिन एव अकारादिवर्णाः । वर्णा एव ह्येकार्थवशीकारेण पदानि, वाक्यं च । एवं स्थायित्वे च न शब्दाधिकरणविरोधोऽपि । शब्दस्य नित्यत्वं सर्वगतत्वं च नेष्टम् । तच्च शब्दस्वरूपनिरूपणे वक्ष्यते[3] । शब्दार्थयोः संश्लेषलक्षणसंबन्धानुपपत्तिस्तु स्फोटनिरासे ।

न च हिरण्यगर्भादीनां सृज्यत्वे तत्परवेदशब्दानामनित्यार्थसंयोगित्वेन वेदस्य पौरुषेयता अर्थसिद्धेति वाच्यम्; सर्वकल्पेष्वपि तत्सद्भावात् प्रवाहानादित्वेनानित्यार्थसंयोगित्वाभावात् । (काठक)कालापकादिसमाख्या च

1. नित्यत्वाङ्गीकारात् अपुम्प्रभवत्वमेव नित्यत्वमित्यङ्गीकारात् ।

2. नित्यत्वे नित्यत्वरूपत्वे ।

3. वक्ष्यत इति । न शब्दस्य नित्यत्वं मीमांसकादेरिव; नापि क्षणिकत्वं तार्किकादेरेव । किन्तु सकृदुत्पन्नस्य आकल्पस्थायितेति एतन्मतम् ।

[1]तत्प्रदर्शननिमित्तेति न तत्कृतत्वानिमित्ताप्रामाण्यम् । अलौकिकैकस्वरूपार्थेष्वपि प्रसिद्धार्थसमभिव्याहारात् पदशक्त्या वा व्युत्पत्तिसंभवान्न ततोऽप्रामाण्यम् । स्वर्गाद्यर्थेषु प्रसिद्धकमिपदसमभिव्याहाराद्धि व्युत्पत्तिः । स्वर्गशब्दस्य प्रीतिविशेषपरत्वेऽपि तस्यालौकिकत्वात् । शीतोष्णाद्यसंभिन्नार्थस्यैव स्वर्ग-शब्दार्थता । ब्रह्मेत्यादिशब्दास्तु स्वावयवबृहद्बृंहणशब्दशक्त्यैव निरतिशय-बृहद्बृंहणगुणयोगिपदार्थविशेषव्युत्पत्तियोग्याः ।

ननु अर्थवादेषु रुद्ररोदनादिसद्भावप्रमाणसापेक्षतया वेदस्या-प्रामाण्यम्; न चार्थवादस्यैव तत्प्रमाणता; वाक्यभेदापत्तेः[2] । प्रतीयते च तदैक्यम् । 'श्रृणोत ग्रावाण' इत्यदौ प्रत्यक्षविरोधाच्चेति—मैवम् । कर्मणः प्रधानेष्वङ्गेषु चार्थवादैः प्रशस्यत्वबुद्धेरुत्पाद्यत्वात्, तद्बुद्धेश्च गुणसद्भावनिबन्ध-नत्वाद् गुणानां च प्रमाणान्तराप्रतिपन्नत्वेन ज्ञापनीयत्वात् तज्ज्ञापनपुरःसरं प्राशस्त्यादिबुद्ध्युत्पादकत्वाद् वाक्यभेदाभावात् । न ह्यसद्भिर्गुणदोषैः प्राशस्त्यनिन्दे । तथात्वे च शाब्दज्ञानस्यायथार्थता । लक्षणादिसमाश्रयणं चागत्या यजमानः प्रस्तर इत्यादौ । 'श्रृणोत ग्रावाणः' इत्यादौ ग्रावाधिदेवतापरत्वेना-विरोधः । तत्तदेवतासद्भावश्च........ ।

ननु [3]याज्ञनादिमन्त्राणाम् 'अष्टका कर्तव्ये'त्यादिस्मृतिसापेक्षत्वान्न वेदप्रामाण्यमिति—मैवम् । स्मृतीनां विप्रकीर्णशाखामूलत्वेन मूलभूतवेदस्यै-वापेक्षापूरकत्वात् । [4]विप्रकीर्णशाखामूलत्वमेव स्मृतीनाम् । भाष्यं त्वदुष्टमुपपन्नं च । न तूत्सन्नशाखामूलत्वमनुमेयवेदमूलत्वं वा । न ह्युत्सादे हेतुः । अनन्त-चरणाधारत्वेन संप्रदायप्रवृत्तेः । स्मृतिषूक्तानां च वेदे तत्र श्रूयमाणत्वाच्च । तत एव न नित्यानुमेयमूलताऽपि ।

न च प्रत्यक्षश्रूयमाणव्यतिरिक्तार्थस्मृतीनामुत्सन्नशाखामूलत्वं नित्यानु-मेयमूलत्वं वेति वाच्यम्; एकमूलत्वकल्पनोपपत्तौ नानामूलत्वकल्पनानुपपत्तेः ।

---

1. प्रदर्शनं प्रवचनमेव ।
2. वाक्यभेदेति । तत्तद्वस्तुसद्भाव-तन्मूलप्राशस्त्योभयपरत्वाश्रयणादिति भावः ।
3. याज्ञनेति । 'यां जनाः प्रतिनन्दन्ती'ति मन्त्रः स्मृतिप्रामाण्याधि-करणे आकरे द्रष्टव्यः ।
4. विप्रकीर्णेति । उक्तं हि तत्त्वमुक्ताकलापे—

'शाखोच्छेदस्त्विदानीमिह यदि स मतः सर्वतश्चेदसिद्धिः
व्यासागस्त्यप्रधानैर्भवति च मुनिभिर्भूषिताऽद्यापि भूमिः' इति ॥

न च विप्रकीर्णशाखामूलत्वे तु न सर्वस्मृतीनामुपयोग इति वाच्यम् । श्रुत्यर्थानां मन्दमतिभिर्दुर्ज्ञेयत्वात् अनुष्ठानक्रमस्यासिद्धस्यापि तथात्वात् तत्प्रकाशनेनार्थवत्त्वात् ।

न च, 'औदुम्बरीं स्पृष्ट्वोद्गायेत्', 'औदुम्बरी सर्वा वेष्टयितव्या' इत्यादिश्रुतिस्मृत्योः परस्परार्थव्याघातात् तन्निवृत्त्यर्थं प्रमाणान्तरसापेक्षतेति वाच्यम्; प्रत्यक्षश्रुत्या स्मृतिविषयापहाराद् विलम्बितस्मृत्यनुमानबाधात् स्मृतेरप्रमाणत्वात् ।

न च यववराहादिशब्दानामार्यानार्ययोर्दीर्घशूकप्रियङ्गुवायससूकरादिषु व्युत्पत्तिभेददर्शनात् अर्थे संशयादप्रामाण्यमिति वाच्यम्; आर्यप्रयोगस्य प्राबल्यात् वाक्यशेषानुगुण्याच्च दीर्घशूकादेरेवार्थत्वनिश्चयात् ।

[1]न चार्यव्युत्पत्त्यभावात् पिकादिष्वर्थाप्रतिपत्तेः 'पिकमालभेत इत्येवमादीनां न प्रामाण्यमिति वाच्यम्; तच्छब्दस्य कोकिलार्थपरत्वेन म्लेच्छप्रयोगादपि निश्चयोपपत्तेः । म्लेच्छानां हि पक्ष्यादिग्रहणोपक्षीणत्वात् संबन्धग्रहणाविच्छेदोपपत्तिः ।

एवं प्रथमाध्यायोक्तसंशयव्याघाताप्रतिपत्तिमूलसापेक्षत्वनिसनपरन्यायकलापमाकृष्य प्रामाण्यं वाच्यम् । ग्रन्थगौरवभयात्तु दिङ्मात्रं प्रदर्शितम् ।

वेदानां च ब्रह्मपरत्वेनैव प्रामाण्यम् । न कार्यपरत्व इति, वाक्यार्थनिरूपणे वक्ष्यते । अतः सर्वप्रमाणानां स्वत एव प्रामाण्यम् ।

ननु वेदार्थसंग्रहे, वेदाः प्रमाणमिति ग्रन्थसन्दर्भेण करणप्रामाण्यमुच्यत इति प्रतीयते; न प्रमितिप्रमाण्यमिति, तन्न; भाष्ये भावरूपाज्ञाननिराकरणे पूर्वत्रैवं, अन्तर्याम्यधिकरणे, बौद्धनिराकरणे, प्रदेशान्तरे च प्रमितेरेव प्रमाणत्वेनोक्तत्वात् । ननु वेदार्थसंग्रहग्रन्थादेवानपेक्षात् स्वकरणोत्पाद्यत्वमेव स्वतस्त्वं प्रमाणत्वं च(त्वस्ये ?) ष्टमिति प्रतीयत इति—तन्न; अकरणाधीनज्ञानमुक्तपरमात्मप्रत्यक्षाप्रामाण्यप्रसङ्गात् । परमात्मनोऽपि करणा[न ?] धीनरूपसाक्षात्काररूपप्रत्यक्षतोक्ता अन्तर्याम्यधिकरणे । वेदार्थसंग्रहोक्तिस्तु कारण उपचारात् ।

ननु भाष्यादौ विषयव्यवहारानुकूलस्यैव प्रामाण्यतोक्ता, कथमन्यत्रान्यथोक्तमिति—तन्न; अर्थपरिच्छिन्नत्वस्यैव व्यवहारानुकूलत्वात् । व्यवहारानुकूल्यं नाम विषयव्यवहारहेतुत्वम् । तच्च ज्ञानस्य विषयसंबन्धित्वमेव ।

---

1. यववराहाधिकरणार्थमुक्त्वा पिकनेमाधिकरणार्थमाह नचार्येति ।

कार्यकल्प्यशक्त्यादिधर्मान्तरस्याप्रत्यक्षत्वात् । प्रत्यक्षता चोच्यते बौद्धनिराकरणे 'तत्तदर्थव्यवहारयोग्यतापादनरूपतया साक्षात्प्रतीयमानस्य' इत्यादिभाष्ये ।

अस्मदीया एव केचित् पौरुषेयवचसामपि स्वतःप्रामाण्यमाहुः । तदनुपपन्नम्; मन्वादिस्मृतीनामपि वेदार्थसंग्रहादौ विप्रकीर्णशाखामूलत्वेनैवो-पायत्वाभिधानात् । श्रीपाञ्चरात्रतन्त्रस्य भगवदुक्तत्वेन प्रमाणतोक्ता प्रत्यक्षश्रुत्यविरोधतो वेदमूलत्वेनैव । न हि पौरुयवचसां क्वचिदपि स्वतः-प्रामाण्याभिधानम् । यद्यत्र क्वाप्याप्तोक्तत्वेन प्रामाण्याभिधानम्, तत्तु मूलवेदानु-मानाय । "यथावस्थितपदार्थप्रतीत्यनुगुणस्वाभाव्याच्च ज्ञानतत्साधनयोरनुग्राहकस्य च । तच्च स्वतःप्रामाण्यन्यायसिद्धम्" इति भाष्यविरुद्धमाप्तोक्तत्वेन प्रामाण्याभिधानम् । तथात्वेन प्रमाण्याभिधाने वैशेषिकादिवदीश्वरोक्तत्वेन वेदप्रामण्याङ्गीकारः स्यात् । न च तद्युक्तम्; यथावस्थितपदार्थप्रतीत्यनुगुण-स्वाभाव्यादिति यथावस्थितपदार्थस्फुरणानुगुणस्वाभाव्यादित्यर्थः । अतोऽस्मदुक्त-प्रकार एव भाष्यकारानुमतः सुस्थश्चेति सर्वं निरवद्यम् ॥

इत्यात्रेयनाथसूरिसूनुना मेघनादारिनाम्ना विरचिते
नयद्युमणौ
स्वतःप्रामाण्यसिद्धाख्यप्रकरणं
समाप्तम्

श्रीः

# ४. वाक्यार्थप्रदीपः

जयन्ति गुरवोऽस्माकमपि रामानुजो मुनिः ।
हनूमांश्चापि लक्ष्मीशस्तुरङ्गवदनो हरिः ॥
वैदिकानामभिमतो वाक्यर्थोऽयं प्रकाश्यते ।
तत्र विप्रतिपन्नत्वाद्वादिनां संशयोदयात् ॥
अनभिज्ञाततत्त्वानां तन्मोहविनिवृत्तये ।
क्रियामेव हि वाक्यार्थमाहुः केचित् तथा परे ॥
अपूर्वमेकेऽखण्डैकरसब्रह्मेति वादिनः ।
स्फोटमेकं वदन्त्यन्ये भावनामपरे जनाः ॥
इष्टस्य साधनं केचिदिष्टमेवेति पण्डिताः ।
महात्मानस्तु वेदार्थविनिर्णयविशारदाः ॥
समस्तचिदचिद्देहि ब्रह्मैवेति प्रचक्षते ।
पूर्वे ये पूर्वपक्षास्ते राद्धान्तस्त्वयमुत्तमः ।
तत्तत्पक्षस्य दुष्टत्वाददुष्टत्वात् परस्य च ॥

तथा हि—लोके व्युत्पत्तितः क्रियैव कार्यतयावगतेति सैव वाक्यार्थः । व्युत्पन्नस्यैव वाक्यस्यार्थावगमकत्वात् । व्युत्पत्तेश्च लोकसिद्धत्वात्; लोके च, 'गामानय' इत्यादिप्रवर्तकवाक्येष्वेव व्युत्पत्तेः; प्रवृत्तेश्च कार्यधीपूर्वकत्वात्; कार्यस्य च क्रियानतिरेकात् ।

तथा हि—....तद्वाक्यश्रवणानन्तरं मध्यमवृद्धप्रवृत्तिदर्शनाद् व्युत्पित्सुरेवमनुमिनोति—वृद्धप्रवृत्तिर्बुद्धिपूर्विका, स्वतन्त्रप्रवृत्तित्वात् मदीयस्वतन्त्रप्रवृत्तिवदिति । तथा—वृद्धचेष्टाहेतुधीः मदीयचेष्टाहेतुधीसमानविषया चेष्टाहेतुधीत्वात्, मदीयतद्धीवदिति । चेष्टाहेतुज्ञानं च चेष्टायाः शब्दानन्तर्यात् शब्दादित्यध्यवसायात् । स्वप्रवृत्तिज्ञानं च मम मानान्तरेणेति च । वृद्धचेष्टा कार्यधीपूर्विका स्वतन्त्रचेष्टात्वात् मदीयचेष्टावदित्यनुमानात्

कार्यधियमेव प्रवृत्तिहेतुत्वेनावधारयति । तस्यास्तद्धेतुत्वं च व्युत्पत्तेः प्रागवस्थायां स्वस्मिन् दृष्टम् । एवं वाक्यस्य प्रवर्तककार्यज्ञापकत्वात् कार्यमेव प्रधानतोऽर्थ इति अभिधेयत्वं चास्याध्यवस्यति ।

न च फलस्येष्टस्य वाक्यार्थता; स्वतस्ततोऽसाध्यत्वेनाप्रवर्तकत्वात् । न चेष्टोपायमात्रस्य प्रवर्तकत्वम्; अतीतानागतेष्टोपायधीतोऽपि प्रवृत्त्यापातात् । अत इष्टोपायस्य कार्यताधीरेव प्रवृत्तिहेतुः । कार्यत्वं च कृतिसाध्यत्वं कृत्युद्देश्यत्वं च । अत एवातीतादिव्यावृत्तिसिद्धिः । कृत्यन्वयव्यतिरेकानुविधायित्वेन कृतिसाध्यत्वमनुमानवेद्यम् । कृतेर्मानसप्रत्यक्षत्वेन कृतिप्रयोजनरूपकृत्युद्देश्यत्वं मानसप्रत्यक्षवेद्यम् ।

[1]प्रवृत्तिलिङाद्यन्वयव्यतिरेकानुविधायित्वदर्शनात् लिङादीनां कार्यार्थत्वात् अन्येषामन्यार्थता चावापोद्धारभेदादवधृता ।

एवञ्च प्रयत्नकार्यत्वधियोरेकगोचरतालाभश्च । अन्यथा अपूर्वविषया कार्यत्वधीः, प्रयत्नविषयो याग इति विरोधः स्यात् । एवञ्च लिङादीनां पाणिनिना स्मृता धात्वर्थस्य कर्तृव्यापारसाध्यतापरता चोपपन्ना । न चेच्छा प्रवृत्तिहेतुत्वेन लिङादिवाच्येति वाच्यम्; तस्या [2]अधिगतत्वेनाप्रवर्तकत्वात् । इच्छाह्युत्पन्ना तद्धेतुः । कार्यं चावगम्यमानम् । अतो लोकसिद्धक्रियाकार्यस्यैव प्रवृत्तिहेतुत्वेन वाक्यार्थत्वम् ।

ननु क्षणभङ्गिन्यास्तस्या न कालान्तरभाविफलसाधनत्वमिति । तन्न । व्युत्पत्त्यनुसारतो वाक्यस्य तत्प्राधान्ये, प्रमाणतयावगतवेदात् तस्याः स्वर्गादिसाधनत्वावगतौ च स्थायित्वरूपधर्ममात्रकल्पनातोऽनुपपत्तिशान्तेः । न च तस्याः प्रत्यक्षपरिदृश्यमानक्षणभङ्गित्वस्वभावविपरीतस्वभावकल्पना न युक्तेति वाच्यम्; फलविनाश्यत्वस्यैव दृश्यमानत्वात्, फलानुत्पत्तौ विनाशानुपपत्तेः । लोके तु फलोत्पत्तेः शैघ्र्यात् क्षणिकता । न च तस्या

---

1. प्रवृत्तीति । लिङादिश्रवणे प्रवृत्तिः अन्यदा नेति प्रवृत्तेस्तदनुविधानदर्शनादित्यर्थः ।

2. अधिगतत्वेनेति । प्रवृत्तिं प्रति इच्छा हि स्वरूपसती कारणम । न तु तज्ज्ञानम् । लिङर्थस्तु स एव भवितु मर्हति, यो लिङा बोध्यमानत्वात् ज्ञायमानस्सन्नेव हेतुर्भवति ।

आश्रयविनाशान्न स्थायितेति वाच्यम्; स्थाय्यात्माश्रयत्वात्। परिस्पन्दात्मकक्रियाया अपि पुरोडाशादिकारणभूतपरमाण्वाश्रयतया स्थाय्याश्रयत्वसिद्धिरिति ।

अत्रोच्यते—

केचिदाहुः[1]—यद्यपीष्टस्य तत्साधनस्य वा प्रवृत्ति प्रत्यहेतुत्वान्न वाक्यार्थता, क्रियायास्तु तद्धेतुत्वम्—तथापि तस्या न वाक्यार्थता, कालान्तरभाविफलसाधनत्वानुपपत्तेः । यद्यपि फलेन तस्या विनाशः—तथापि कारकावस्थायामेव फलजनकता दृष्टा । स्वर्गादिफलं च न कारकावस्थान्वयीति प्रमाणान्तरविरुद्धत्वेन न तत्स्थायित्वकल्पना ।

न हि यागादिक्रियाकारकभूतब्राह्मणत्वादिभेददेह्यात्मनि फलान्वयः; किन्तु देहान्तरविशिष्टस्य । विशिष्टदेहान्तरे च न कारकता, परिस्पन्दक्रियाया अपि कार्यभूतपुरोडाशाद्याश्रयदर्शनात् परमाण्वाश्रयकल्पनापि प्रमाणान्तरविरुद्धैव ।

न च क्रियानाशेऽपि तच्छक्तेः स्थाय्यात्माश्रयत्वकपना; अन्यशक्तेरन्याश्रयत्वकल्पनाया आश्रयविनाशेऽपि तदाश्रयवस्तुस्थायित्वकल्पनायाश्च प्रमाणान्तरविरुद्धत्वात् । अतो लिङादि न? क्रियायाः कार्यत्वबोधकः । तथात्वे च साध्यस्वर्गविशिष्टनियोज्यान्वयहानिः । न हि देहान्तरभाविसाध्यफलं प्रति क्षणिककर्मणः साधनत्वम् । तदुक्तम्—

"लिङादिस्तत्र कार्यं चेत् क्रियामेवावबोधयेत् ।
समन्वयो नियोज्येन तदानीमेव हीयते ॥
क्रिया हि क्षणिकत्वेन लोकान्तरविभाविनः ।
स्वर्गादेः साध्यमानस्यासमर्था जननं प्रति ॥
न कार्यत्वेन संबन्धमर्हति क्षणभङ्गतः ॥"

इति । अतो नियोज्यान्वययोग्यम् अपूर्वमेव कार्यं लिङाद्यर्थः । तस्य प्रमाणान्तराविषयत्वादेव न प्रमाणान्तरविरोधोऽपि । नियोज्यश्चावश्यमङ्गीकार्यः; तदभावे प्रवृत्त्यनुपपत्तेः । अतः स्वर्गकामस्य स्वसंबन्धकार्यं प्रति बोध्यतयैवान्वय इति स्वर्गकामादिपदानि नियोज्यान्वयपराण्येव । स्वसंबद्धकार्यबोद्धा । हि नियोज्यः । तदुक्तम्—, "नियोज्यः स च कार्यं यः स्वकीयत्वेन बुध्यते" इति । नियोज्यश्च नाविशिष्टः किं तु साध्यस्वर्गादिरेव तद्विशेषणम् । काम्येषु स्वर्गादिना कामयोगात्

1. क्रियावाक्यर्थपक्षमपूर्ववाक्यार्थवादी प्राभाकरः खण्डयति यथा, तदाह केचिदाहुरित्यादिना ।

साध्यत्वधीः । तदुक्तम्—, "स्वर्गादिः कामयोगच्च साध्यत्वेनैव गम्यते" इति । साध्यस्वर्गादिविशिष्टश्च स्वकार्यसाधनमेव कार्यतयाऽवैति नान्यत् । तदुक्तम्—"तदेव शक्नुयात् कार्यं बोद्धुं यत् काम्यसाधनम्" इति । न चासाध्यपरस्त्र्यादीनामपि काम्यमानत्वदर्शनात् न काम्यस्य साध्यत्वमिति वाच्यम्—तत्कामिनः तत्साधनत्वेन कस्याप्यनुपदेशात् । यत्कामिनो यद्धि कार्यतयोपदिश्यते, तत् तत्काम्यसाधनम् । न च, 'परस्त्रीकामः[1] कृच्छ्रं चरे'दित्यादौ काम्यमानतया परस्त्रिया नियोज्यविशेषणत्वम्; प्रायश्चित्तप्रकरणत्वेन, तत्कामादिशब्दानां निमित्तपर्यन्तत्वेन निमित्ताधिकारपरत्वात् । अतः क्रियातिरिक्तनियोज्यान्वययोग्यं स्थायिकार्यं विधिवाचिलिङादिवाच्यम् । तदुक्तम्—

"तस्मान्नियोज्यसंबन्धसमर्थविधिवाचिभिः ।
कार्यं कालान्तरस्थायि क्रियातो भिन्नमुच्यते ॥"

इति ।

[2]ननु यागादीनां देवताराधनत्वेन तत्प्रसादद्वारा फलसाधनत्वोपपत्तेः न स्थायिकार्यसिद्धिरिति । तन्न; तेषां देवताराधनत्वे प्रमाणाभावात् । यजेः पूजार्थत्वस्मृतिः स्मृतित्वेनैव प्रमाणान्तरसापेक्षत्वेनाप्रमाणत्वात् मूलान्तरस्य चानुपलम्भान्न तत्र प्रमाणमिति देवतोद्देशेन द्रव्यत्यागमात्रात् गौणी ।

किं च यागस्य देवताराधनत्वे तत्प्रीत्यर्थत्वे तस्या विग्रहसंबन्धोऽङ्गीकार्यः; तद्राहित्ये चाराधनं प्रति संबन्धित्वाद्यनुपपत्तेः । देहित्वे च प्रत्यक्षविरोधः, दृश्यत्वापत्तेः । परिच्छिन्नानां युगपदनेकयजमानसंनिधिश्चानुपपन्नः । वेदस्यानित्यार्थसंयोगित्वेनानित्यता च । अर्थवादानां तमन्यपरत्वे च न तत्र प्रामण्यम् ।

[3]ननु क्रिया पुरुषसंस्कारहेतुः; तत्संस्कृतस्य व स्वर्गादिभोगयोगोऽस्त्विति । तन्न । तस्याः संस्कारकत्वे प्रमाणाभावात् ।

---

1. परस्त्रीकाम इति । यदि परस्त्रियं कामयेत, तदा प्रायश्चित्तमेवं कुर्यादिति वाक्यार्थः । नात्र परस्त्रियाः फलत्वम् ।

2. वेदान्तिमतं प्राभाकरः खण्डयति न च यागादीनामित्यादिना ।

3. तार्किकैकदेश्युक्तं खण्डयति ननु क्रियेति ।

[1]ननु यागादिक्रियायाः स्वर्गसाधनत्वं तज्जन्यफलसाधनस्याप्यपूर्वकल्पनयोपपन्नमिति नापूर्ववाचकता लिङादेरिति—तन्न, फलजनकान्यकल्पनया यागादेः फलसाधनत्वासिद्धेः; साधनसाधनस्यातत्साधनत्वात् ।

ननु काष्ठैः पचतीत्यादौ ज्वालावान्तरव्यापारद्वारा काष्ठादिसाधनत्वकल्पनावत् अपूर्वस्य व्यापारतया साधनत्वमस्त्विति—तन्न, क्रियावान्तरस्यात्माश्रयव्यापारत्वानुपपत्तेः ।

नन्वाग्नेयादीनामपूर्वसाधनतेष्टा ।

[2]तदीयपार्वणहोमजन्योपकारसंबन्धार्थं करणान्तरतो ह्यवान्तरापूर्वस्वीकारः ।

क्रिया तु साक्षात्फलासाधकत्वादन्वयायोग्येति शब्दात् न कार्यतया कामिनियोज्यबोध्या । न च तस्याः व्यवहितसाधनत्वम् । नैवान्विताभिधानम् । अपूर्वकल्पनातः पूर्वं व्यवहितत्वेनापि साधनायोग्यत्वात् । अन्वितबोधे हि तदुपपत्त्यर्थमपूर्वकल्पनेति—तन्न । तत्र साध्यस्वर्गादिविशिष्टेन यो हि यदिच्छति, स तत् करोति फलमुमुपायं वेति नयादव्यवहितसाधनस्यैव कार्यतयाऽवगम्यत्वात् । तस्मादव्यवहितकारणमिति कल्पितमेव साधनमिति कल्पितापूर्वेण न क्रियासाधनत्वनिर्वाह इति अनन्तरितसाधनमपूर्वमेव कामिनियोज्यान्वययोग्यं कार्यं लिङादिवाच्यम् ।

तच्च कार्यं कृतिसाध्यं कृत्युद्देश्यमित्युक्तम् । कृतिर्नाम प्रयत्नः । स च भव्यं यागादिकमेव विषयीकरोतीति अव्यवहितमेवापूर्वं कृतिसाध्यतयावगम्यते । अतोऽपूर्वकार्यस्यैव विषयनियोज्यान्वितत्वेन प्राधान्यतो वाक्यार्थत्वम । तदुक्तम्—

"कार्यस्यैव प्रधानत्वाद्वाक्यार्थं चैव(र्थत्वं च?) बोध्यते ।
वाक्यं तदेवाभिप्रा(प्रे?)यान्नियोज्यविषयान्वितम ॥"

इति ।

ननु कार्यस्य फलसाधनत्वे तु न प्राधान्यम्; साध्यशेषत्वात् साधनस्येति—तन्न ; अशनादिदानेन गवाद्युपाकारकस्यापि स्वामिनः तत्साधनस्य गुणत्वाहेतुत्वात् । किं तु स्वार्थमेव भृत्योपकारकः । तथा अपूर्वमपि स्वसिद्ध्यनुकूलनियोज्यसिद्ध्यर्थं फलसाधनं नाप्रधानम् । तदुक्तम्—

1. भाट्टादिमतं खण्डयति ननु यागादीति ।
2. नन्वाग्नेयेति कृतां शंकां समाधत्ते तदीयेत्यादिना ।

"आत्मसिद्ध्यनुकूलस्य नियोज्यस्य प्रसिद्धये ।
[1]कुर्वत् स्वर्गादिकमपि प्रधानं कार्यमेव नः ॥"

इति ।

[2]ननु वाक्यस्य विषयनियोज्यान्वितकार्यपरत्वे नियोज्यस्यापि शाब्दतापत्तिः । न च तद्युक्तम्; व्युत्पन्नस्य सामर्थ्यादेव बोद्धृतासिद्धेः । तन्न । ममेदं कार्यमित्यार्थतद्धीमत्परत्वात् कामपदस्य । यदा तु व्युत्पन्नोऽपि कामी स्वकार्यतया नावैति, तदा बोधकता स्यात् । यदा चावैति, तदा बोधकता न स्यादिति । अतो न शाब्दतेति ।

ननु स्वर्गादि कर्तृविशेषणमस्तु; कामपदं च कर्तृपरमस्तु; मत्कर्तृकं कार्यमिति बोद्धृतापि तस्येति—तन्न; इष्टस्य नान्यार्थत्वमिति कर्तृविशेषणत्वानुपपत्तेः । कर्तृपरत्वे तु न फलस्य साध्यता; किंतु [3]समुद्रध्यानादिवत् अङ्गता स्यात् । किञ्च कामपदं न कर्तृपरम्; यागस्यैव कार्यत्वेन कर्त्रन्वयात् यागस्य च फलसाधनत्वानुपपत्तेः स्वर्गादेः साध्यत्वप्रतीति-विरोधात् । नियोज्यपरत्वे तु कार्यप्राधान्यात् यागस्य साधनतयैवान्वयः ।

कामपदस्य प्रवृत्त्यानुगुण्याद् बोद्धृपरतैव; अन्यथा प्रवृत्त्यनुपपत्तेः ।

न च मत्कर्तृकं कार्यमिति बोद्धृतया प्रवृत्तिः; याजमानापेक्षया ऋत्विक्प्रवृत्त्यापत्तेः; तेषामपि कर्मसु कर्तृत्वबोधात् ।

ननु वाक्यस्य व्युत्पत्त्यनुसाराद्बोध्यपरत्वमेव; न बोद्धृपरत्वमिति—तन्न; स्वर्गकामस्येदं कार्यमिति बोध्यपरत्वात् । ममेदं कार्यमिति धीदर्शनं तु न साक्षाच्छाब्दम् । किंतु शब्दात् कामिनः कार्यमित्यवगतौ आत्मानं तत्कामिनं बुध्यत इति तद्धीः फलितेति शाब्दम् ।

1. कुर्वदिति । स्वर्गादिकं कुर्वदपीत्यन्वयः । यद्यपि कार्यमपूर्वं स्वस्मिन्न विश्राम्यति; किन्तु स्वसिद्ध्यनुकूलनियोज्यसिद्ध्यर्थं पश्चात् स्वर्गादिकमुत्पादयति । एवमपि राजवत् तस्य प्राधान्यं न हीयत इत्यर्थः ।

2. परमसिद्धान्त्याशयमुद्घाट्य प्राभाकरः प्रतिक्षिपति—नन्वित्यादिना ।

3. समुद्रध्यानेति । 'रथन्तरे प्रस्तूयमाने संमीलयेत्; बृहति प्रस्तूयमाने समुद्रं मनसा ध्यायेत्' इत्युक्तध्यानमिह ग्राह्यम् । वाक्यमिदं मी० 9-2-46 सूत्रादिव्याख्याने द्रष्टव्यम् ।

न च षष्ठ्यश्रवणात् तदर्थालाभशङ्का; कार्यस्य कृतिसाध्यत्वावगतेः कृतेश्च नराकाङ्क्षायां स्वर्गकामप्रतिपादकसमर्पितसन्निहितयोग्यसंबन्धि-पुरुषान्वयबुद्धेः कार्यनियोज्ययोः प्रयोजनप्रयोजनित्वेनापि संबन्धितेति षष्ठ्यर्थलाभ इति । प्रथमा च प्रातिपदिकार्थानतिरिक्तार्थेति तद्विरोधश्च । अतः स्थायिकार्यस्यैव लिङादिवाच्यत्वे तस्य च क्रियाकार्याव्यभिचारात् क्रियाकार्यं लाक्षणिकमेव ।

[1]कार्यार्थे व्युत्पत्तिर्लौकिकी । स्थायिकार्यनिर्धारणा तु वेदवाक्य-विमर्शजा । तदुक्तम्—

"व्युत्पत्तिरिह कार्यार्थे व्यवहारानुसारिणी ।
किंतु निर्धारणामात्रं वेदवाक्यविमर्शजम् ॥"

इति ।

एवं कामाधिकारविचारादपूर्वव्युत्पत्तौ नित्यनैमित्तिकनिषेधाधि-कारेष्वपि तस्यैव वाक्यार्थत्वम्; अनेकार्थत्वस्यान्याय्यत्वात् । नित्येषु जीवनं नियोज्यविशेषणम्; नैमित्तिकेषु [2]भेदनादयः; कलञ्जभक्षणप्रवृत्त्यादयो निषेधेष्विति कृतमतिविस्तरेण ।

[3]नन्वखण्डैकरसब्रह्मणः सदात्मकस्यैव वाक्यार्थता युक्ता । तथा हि— सर्वप्रमाणानि परमार्थसदेकविषयाणीति शास्त्रमपि तद्विषयम् । न च घटादि-भेदधियोऽपीन्द्रियान्वयव्यतिरेकित्वेन तद्विषयतापीति; तदन्वयव्यतिरेकयोर्भेद-भ्रमाधिष्ठानग्रहोपक्षयादन्यथासिद्धेः । अनन्यथासिद्धं हि मानम् । न च तद्धियः कारणदोषाद्यनुपलब्धेर्न भ्रान्तित्वमिति; भेदस्य प्रत्यक्षायोग्यत्वात् ।

प्रत्यक्षं हि किं विधायकम्? व्यवच्छेदकं वा? उभयं वा? प्रथमे वस्तुस्वरूपविधिमात्रोपक्षयान्न भेदसिद्धिः । द्वितीयेऽपि निषेध्यसापेक्षत्वेन प्राप्तिपूर्वकत्वात्, प्राप्तेश्च विध्यपेक्षत्वात्, विधेश्च वस्तुमात्रोपक्षयात् तदसिद्धिः । तृतीयस्तु विकल्प्यः— किं विधिपूर्वको व्यवच्छेदः? एतद्वत्त्ययो

---

1. नन्वपूर्वाख्यस्य कार्यस्यालौकिकत्वात् कथं तत्र लोकतो व्युत्पत्तिरिति शङ्कायामाह-कार्येति ।

2. भेदनादय इति । भिन्ने जुहोतीति कपालभेदने होमविधिरवगन्तव्यः ।

3. कार्यवाक्यार्थवादी प्रभाकरः अद्वैतमतं खण्डयितुमनुवदति— नन्वित्यादिना ।

वा? युगपदुभयमिति? आद्ये अनवच्छिन्नसन्मात्रविरोधाद् व्यवच्छेदासिद्धौ भेदासिद्धिः। द्वितीयेऽपि व्यवच्छेदस्य विधिपूर्वत्वादेव व्यवच्छेदपूर्वत्वानुपपत्तेस्तदसिद्धिः। अत एव तृतीयपक्षानुपपत्तेस्तत्सिद्धिर्निरस्ता। न चैकविधायकत्वमेवान्यव्यवच्छेदकत्वमिति; अन्यवस्तुसिद्धावेकविधायकत्वेऽन्यव्यवच्छेदकत्वसिद्धिः, एतत्सिद्धौ तत्सिद्धिरितीतरेतराश्रयात्।

न च विधायकत्वेऽपि भेदविशिष्टवस्तुविषयत्वमिति; प्रत्यक्षस्य क्षणिकत्वात् भेदप्रतीतेश्च वस्तुग्रहणतत्स्मरणप्रतियोगिस्मरणसापेक्षत्वेन विलम्बितत्वाद् भेदस्य विषयत्वायोग्यतया सन्मात्रस्यैव तद्योग्यत्वाद्।

भेदाद्यवस्तुनो दुर्निरूपत्वाच्च न तद्विषयत्वम्। किं भेदो वस्तुस्वरूपम्? तद्धर्मो वा? आद्ये वस्तुग्रहे तद्व्यवहारवत् तस्य सर्वतो भेदव्यवहारः स्यात्। भेदस्य स्वरूपत्वादेव न प्रतियोगिज्ञानापेक्षा। स्वरूपत्वे च वस्तुवाचकशब्दैर्भेदवाचकशब्दस्य पर्यायता च। शुक्लः पट इत्यादिवत् भिन्नः पट इत्यादिभेदधर्मव्यवहारप्रतीत्योरापत्तिश्च। न च द्वितीयः पक्षोऽस्त्विति वाच्यम्; धर्मधर्मिणोरपि भेदापेक्षत्वेनानवस्थानात्। अतः सन्मात्रविषयमेव प्रत्यक्षम्। अनुमानादिरपि तन्मूलत्वेन तद्विषय एव। कर्मभागसगुणविद्यापरवेदभागस्यापि तदविशेषात् कर्मादेरनुष्ठेयत्वादिप्रतिपादनमुखेन भ्रान्तिसिद्धानुवादमात्रत्वाद् अखण्डैकरसाद्वितीयब्रह्मपरत्वम्। भेदाभावादेव न विषयभावः।

एवं प्रतीतभेदानङ्गीकाराद् अखण्डैकवाक्यार्थतोक्ता। तदङ्गीकारेऽपि न तद्वाक्यार्थत्वभङ्गः। तथा हि—

यावत्प्रपञ्चप्रतिभासं भेदस्य व्यावहारिकधर्मतया प्रतीयमानस्य निराकर्तुमशक्यत्वेऽपि शङ्क्यमानदोषप्रत्यक्षादेर्व्यावहारिकभेदपदार्थविषयत्वेनापि सावकाशत्वादनन्यथासिद्धानन्यपरसत्यज्ञानादिवेदान्तवाक्यानामखण्डैकरसब्रह्मैकपरत्वमेव। [1]यद्यपि प्रतियोग्यपेक्षो भेदः प्रमाणानवसेयः; तथापि यावदेकात्मबोधं साक्षिवेद्यतया भात्येव। एवं च न भेदस्यात्यन्तापह्नव इति न स्वव्यवहारोच्छेदः।

1. ननु कथमयं भेदाङ्गीकारपक्षः? ज्ञानस्य क्षणिकत्वात् भेदस्य प्रतियोगिग्रहणपूर्वकं सह वा दुर्ग्रहत्वस्योक्तत्वादित्यत्र साक्षिवेद्यतया तदस्तित्वं वक्तुमाह-यद्यपीति।

यद्यपि प्रत्यक्षस्य सन्मात्रविषयत्वमुक्तम्, तथापि [1]तदज्ञानोपाधिकमेव; [2]वस्तुनो निरस्तनिखिलव्यवहारत्वाद् विषयविषयित्वानुपपत्तेः । न चैतावता भेदस्य वास्तवत्वम्; प्रत्यक्षस्य पूर्वोक्तविधया विधायकत्वात् । अविद्यातो भेदसिद्धिश्चेति न तत्स्वरूपापलापः । प्रत्यक्षस्य सन्मात्रविषयत्वेऽप्यज्ञानविशिष्ट-वस्तुविषयत्वान्नाज्ञानोपमर्दकत्वमिति न तस्यैकविषयत्वम् । आगमस्तु विरुद्धपदार्थसामानाधिकरण्याभिधानमुखेन समस्तोपाधिविनिर्मुक्तं वस्तु लक्षयत् नान्तरीयकतया तदज्ञानतत्कार्ये निवर्तयतीति सत्यमित्यादिवेदान्तवाक्यानामेवा-द्वितीयवस्तुपरत्वम् ।

अयमर्थः—एकमेवाद्वितीयं ब्रह्मेत्यादौ सजातीयविजातीयस्वगतनानात्व-निरासेनाखण्डैकरसं ब्रह्मेति प्रतिपाद्यते । एवं च न गुणतोऽपि सद्वितीयत्वम्, अद्वितीयश्रुतिविरोधात् निर्गुणत्वश्रुतिविरोधाच्चेति । वेदान्तानां विरुद्धपदार्थ-सामानाधिकरण्यमुखेनोपाधिविनिर्मुक्तब्रह्मपरत्वम् । एतच्च सामानाधिकरण्य-मुपन्यस्य निरस्यते ।

यत्तु न सिद्धार्थव्युत्पत्तिरिति—तन्न; 'पुत्रस्ते जातः' इत्यादिवाक्यश्रवणानन्तरं श्रोतुर्मुखविकासादिलिङ्गात् हर्षमनुमाय स्वज्ञाततत्पु-त्रजन्मन एव तद्धेतुत्वमनुमाय विशेषेण तदर्थबोधकत्वमानन्तर्यादवधार्य पुनरावा-पोद्धाराभ्यां सर्वपदानां व्युत्पित्सोः सिद्धार्थव्युत्पत्तेः ।

न च सुखप्रसवादिहर्षहेत्वानन्त्यात् न पुत्रजन्मन एव तद्धेतुत्वनिश्चय इति; गवानयनादिप्रवर्तकवाक्येष्वपि श्रोतुरानुषङ्गिकव्यापारादितस्तदनिर्धारणा-पत्तेः समत्वात् । अथ पदानामावापोद्वापदर्शनात् अर्थविशेषनियमकल्पना, तर्हि सिद्धपरेष्वपि तथा; संभवात् । सा ह्यदृष्टपुत्रजन्मतो हर्षहेत्वन्तरकल्पना-नवकाशाच्च ।

न च यत्र क्वापि पारिशेष्यादिना सिद्धपरत्वसंभवेऽपि प्रवर्तकवाक्येऽपि [3]....व्यवायुत्पत्तेर्न प्राथम्यात् सिद्धपरत्वमिति; इदंतदादिविज्ञानपूर्वकत्वात् सर्वव्यव-हाराणाम् । तदङ्गीकारे विभागज्ञानपूर्वकशाब्दव्यवहारोच्छेदः । वाच्यवाचकसं-बन्धग्रहे विभागज्ञानमपेक्षितमेव । अतो व्युत्पत्तौ नानुपपत्तिः ।

---

1. तत्; प्रत्यक्षस्य सन्मात्रविषयम् ।
2. वस्तुन इति । केवलस्य सत इत्यर्थः ।
3. अत्र ग्रन्थपातः ।

ननु प्रत्यक्षादेरपि प्रमाणत्वाविशेषान्न मिथ्याविषयत्वमिति । न; तस्यागमादविशेषासिद्धेः । प्रत्यक्षं हि अर्थेन्द्रियसंप्रयोगजम् । तत्तु क्वचिद्विषयदोषादन्यथा दृष्टम् । यथा स्थूलस्यापि दूरस्थत्वदोषेणाल्पत्वधीः । क्वचिच्छुक्तिकारजतताधीर्नयनदोषात् । क्वचिद् दृष्टिदोषात् रविमण्डलादौ सुषिरादिधीः । अतः संभाव्यकरणदोषं प्रत्यक्षम् । शब्दाख्यकरणस्य तु स्वतो न दोषशङ्का । तच्छङ्कायां तज्जन्यकृत्स्नविज्ञानाप्रामाण्यम् । वेदस्य चापौरुषेयत्वेन न क्वचिद्दोषसंभावनेति वैदिकज्ञानमेवासंभावितदोषम् । तस्मात् प्रत्यक्षादितो वेदस्य बलीयस्त्वम् ।

न च प्रत्यक्षस्य प्राथम्याद्बलीयस्त्वमिति; प्रमाणानां स्वार्थसाधकानां प्राथम्यचारम्यानुपलब्धेः । [1] वेदस्यैव सर्वोत्पत्तिहेतुत्वेन प्राथम्याच्च ।

न च वेदस्य प्रत्यक्षापेक्षत्वान्न ततो बलीयस्त्वमिति; विकल्पासहत्वात् । किमुत्पत्तौ प्रमितौ वा तदपेक्षत्वमिति ? नाद्यः । शुक्तिकारजतादिधिय इन्द्रियदोषानुमानहेतुत्वेऽप्यनुमानस्यैव तत्र प्राबल्यं दृष्टम् । नापि द्वितीयः; सर्वप्रमाणानामपि प्रामाण्येन प्रमितावन्यानपेक्षत्वात् ।

न चाद्वितीयश्रुतेः स्तुतिपरत्वेनापि सावकाशत्वात् प्रत्यक्षस्य च निरवकाशत्वात् प्राबल्यमिति; तच्छ्रुतेरेव तत्त्वावेदकत्वेनानन्यपरतया निरवकाशत्वात्; तदनङ्गीकारे चाप्रामाण्यात् । प्रत्यक्षादेस्तु तत्त्वावेदकत्वेऽपि देहात्मावगतिवल्लौकिकादिव्यवहारोपपत्तेर्नात्यन्तानवकाशता ।

न च कर्मज्ञानपरश्रुत्योः परस्परविरुद्धविषयत्वेन व्याहतेः प्रत्यक्षस्य च तदभावाद्बलीयस्त्वमिति; कर्मपरश्रुतेर्द्वैतसत्यत्वपरत्वाभावात्; इदमिष्टस्य साधनमिति साध्यसाधनमात्रपरत्वात् । भेदस्य तु लोकसिद्धस्यानुवादमात्रम्; भेदश्च न वास्तव इत्युक्तम् । एतेन सगुणशास्त्रस्यापि विरोधः परिहृतः ।

अतो द्वैताद्वैतविज्ञानयोस्तत्त्वातत्त्वपरत्वेन वेदप्रामाण्याददद्वैतं सिद्धम् ।

न चाद्वैतविज्ञानस्य बाधितत्वेनातत्परत्वमिति; अद्वैतश्रुत्यन्यथानुपपत्तेः । द्वैतप्रपञ्चस्य विज्ञातस्य मिथ्यात्वादन्यपरा नाद्वैतश्रुतिरित्युक्तम् । तच्च—"एकमेवाद्वितीयम्" "ऐतदात्म्यम्" इत्युपक्रमोपसंहारयोरैक्यात्, ऐतदात्म्यमिति पुनः

1. वेदस्यैवेति । "वेदशब्देभ्य एवादौ देवादीनां चकार सः" इति स्मृतेः । सूत्रञ्च, "शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम्" इति ।

पुनरभ्यासात्, प्रमाणान्तरानवगतैकात्म्यप्रतिपादनात्, "तस्य तावदेव चिरम्" इत्यादिनैक्यज्ञानस्य मोक्षफलश्रवणात् "येनाश्रुतं श्रुतम्" इत्यादिना अर्थवादस्योपपन्नत्वात्, मृदादिदृष्टान्तयुक्तिभिरेकार्थोपपादनाच्चाद्वैतश्रुतेः षड्विधलिङ्गकत्वेन तत्परत्वनिश्चयात्। तदुक्तम्—

"उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिश्चये॥"

इति।

तस्मात् अद्वैतश्रुतिः परमार्थविषया; द्वैतप्रतिभासस्तु काल्पनिकद्वैतविषय इति। एवं चाद्वैतज्ञानाद् द्वैतप्रपञ्चबाधादबाधितत्वमसिद्धम्। विमतिविषयः प्रपञ्चो मिथ्या, दृश्यत्वात् शुक्तिरूप्यवदित्यनुमानाच्च तन्मिथ्यात्वसिद्धिरित्यलमतिविस्तरेण।

[1]अत्रोच्यते—प्रत्यक्षचिदचिद्विषयत्वेनाभिमतं सत्त्वं किं ब्रह्मसत्तारूपम्? सामान्यं वा? नाद्यः। ब्रह्मणः "न चक्षुषा गृह्यते" इत्यादिना प्रमाणान्तराविषयत्वप्रतीतेर्विरोधात्। दृश्यत्वाङ्गीकारश्च त्वद्दर्शनविरुद्धः। तदङ्गीकारे च तव मुक्तौ दृश्यत्वेन मिथ्यात्वापातः। नापि द्वितीयः। सर्षपमहीधरादिषु अनुवृत्तैकप्रतीतेर्दुर्लभत्वात् तत्सामान्यासिद्धेः। तदङ्गीकारेऽपि तस्य सामान्यत्वेन व्यक्तिनिवृत्तावग्रहणात्। तस्य च व्यक्तिपर्यन्तत्वात् सामान्यमात्रग्रहणमनुपपन्नम्। तत्संभवे च व्यक्तिविधुरप्रदेशेऽपि ग्रहणापत्तिः। सामान्यस्य [2]सर्वगतत्वनित्यत्वयोरङ्गीकारात्। तस्यैव ग्राह्यत्वेऽपि न ब्रह्माद्वैतसिद्धिः; तयोर्भिन्नत्वात्।

न च सामान्यस्य ब्रह्मत्वम्; ब्रह्मणः सर्वभ्रमाधिष्ठानज्ञप्त्यानन्दस्वभावाभिधानात्, इतरस्य चान्याश्रयत्वादचेतनत्वात्, अनानन्दस्वभावत्वाच्च विरुद्धस्वभावत्वात्। न च सत्तैव ब्रह्म; तस्याश्चान्याश्रितत्वभ्रान्तिरिति; विकल्पासहत्वात्। किं दृष्टभ्रान्त्या वा? सद्भ्रान्त्या वेति। नाद्यः।

---

1. एवमद्वैतपक्षो विस्तरेणानूदितः। अथ प्राभाकरस्तं खण्डयति—अत्रोच्यत इति।

2. सर्वगतेति। नित्यमेकमनेकानुगतं सामान्यम्। न चैकप्रदेशस्थिते एकस्मिन् गवि स्थितं गोत्वं प्रदेशान्तरस्थेऽन्यस्मिन् गवि वर्तितुमर्हति, यदि मध्यदेशे तत् अनवस्थितं स्यात्। एवमपि मध्यदेशे अयं गौरिति न धीः, गोव्यक्तेरेव तद्व्यञ्जकत्वादिति स्वीकृतमिति भावः।

सद्व्यतिरिक्तद्रष्टृत्वाङ्गीकारे नाद्वैतसिद्धिः । नापि द्वितीयः; तस्य द्रष्टृत्वादिविरहात् भ्रान्त्यनुपपत्तेः ।

न च तस्यैव भ्रान्त्या द्रष्टृत्वमिति ; द्रष्टृत्वसिद्धौ भ्रान्तिसिद्धिः; एतत्सिद्धौ तत्सिद्धिरित्यन्योन्याश्रयणात् । न च कार्यकारणभावेनानादित्वान्न विरोध इति; भ्रान्त्या द्रष्टृत्वस्यायथार्थत्वसिद्धावेवैतत्परिहारत्वात् । न चाद्वैतश्रुत्यन्यथानुपपत्त्या तत्कल्पनमिति; अन्यथोपपत्तेर्वक्ष्यमाणत्वात् ।

किंच सत एव विषयत्वेऽर्थभेदनिमित्तप्रवृत्तिवैकल्यम्; सर्वप्रमाणानां गृहीतग्राहित्वं च । ततो वेदान्तानामनुवादलक्षणमप्रामाण्यं स्यात् ।

अतो भेदप्रतीतेरिन्द्रियान्वयव्यतिरेकानुविधायित्वेन भेदोऽनन्यथासिद्धः । सच्छब्दप्रवृत्तिनिमित्तं तु सर्वत्र प्रमाणग्राह्यत्वोपाधिः ।

[1]न च प्रत्यक्षस्य विधायकत्वेन न भेदविषयत्वमिति; विकल्पासहत्वात् । किं विधायकत्वं प्रवर्तकत्वं, बोधकत्वं वेति ; नाद्यः ; ग्राह्यत्वेनाभिमतसत्तायाः प्रवर्तकत्वानुपपत्तेः ; घटपटादिभेदधिय एव प्रवर्तकत्वात्; सत्तायाः सर्वत्र सुलभत्वादकार्यकरत्वाच्च । न हि तया जलाहरणादि । नापि द्वितीयः । प्रत्यक्षस्य बोधस्वरूपत्वेन बोधकत्वानापत्तेः । अथ विषयस्फुरणकरत्वाद्बोधकारणत्वमिति; न; यथास्फुरणं हि विषययोगि कार्यम् । स्फुरति चेदमित्थमिति; न तु सन्मात्रम् ।

न च ज्ञानकरणमेव प्रत्यक्षमिष्टम् । तदङ्गीकारेऽपि भेदबोधकत्वे तु न विरोधः । न च सद्वस्तुस्वरूपोपलक्षयान्न भेदविषयतेति; घटादिवस्तुव्यतिरिक्तस्य सदाद्वयस्य वस्तुनो दुर्निरूपत्वस्योक्तत्वात् । सुनिरूपत्वेऽपि रूपिरूपैकार्थसमवेतवस्तुविषयत्वाच्चक्षुरादेः, त्वदभिमतसतश्च रूपैकार्थसमवेतत्वादिविरहाद्विषयत्वमनुपपन्नम् । तत्समवेतत्वाङ्गीकारे च रूपरूपितत्समवेनसत्प्रतीतिजनकतया न सन्मात्रप्रतीतिः । न च वस्तुतः समवेतत्वेऽपि सन्मात्रस्यैव विषयत्वमिति, समवेतविषयस्याश्रयिपर्यन्तत्वात् । आश्रयनिष्ठतयैव हि घटादिसामान्यप्रतीतिः । धीर्हि 'घटः पटः' इति । न तु 'सत् सत्' इति ।

न च घटोऽस्ति, पटोऽस्तीत्यादौ सतोऽनुवर्तमानतया घटादेर्निवर्तमानतया चानुवर्तमानतयैव परामर्श्यम्; न तु रज्जौ व्यावर्त-

1. "आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः" इति मण्डनवचनमत्रानुसं धेयम् ।

मानसर्पाम्बुधारावद् व्यावर्तमानघटादेरिति; व्यावर्तमानत्वस्य मिथ्यात्वाप्रयोजकत्वात् । किंतु मिथ्यात्वं देशकालादिप्रतिपन्नोपाधावेव बाधार्हव्यवहारस्य ।

किंच सत्यज्ञानादिपदैरेकस्य ब्रह्मणो व्यावर्तमानत्वमस्ति वा? न वा? आद्ये घटपटादिवद् ब्रह्मणो मिथ्यात्वम् । द्वितीये तु नातत्त्वेभ्यो व्यावृत्तिः; अपसिद्धान्तश्च ।

न च ब्रह्मणो व्यावर्तमानत्वेऽपि सर्वत्रानुवृत्तेर्न मिथ्यात्वमिति । जलादीनामप्यतत्त्वेन व्यावर्तमानत्वेऽप्यनुवर्तमानत्वात् पारमार्थ्यापत्तेः । सत्सदितिवद् ब्रह्मव्यतिरिक्तेषु असदसदित्यनुवर्तनीयत्वात् । पक्षे असत्त्वादेव हि सर्वस्य व्यावृत्तिः । अथासदित्यनुवर्तमानत्वेऽप्यतत्त्वेन[1] तेषां मिथ्यात्वमिति । तर्ह्यतत्त्वस्यैव मिथ्यात्वप्रयोजकत्वमुक्तम्; न तु व्यावर्तमानत्वस्य । तत्त्वं च प्रतिपन्नोपाधौ बाधार्हव्यवहारत्वम् । न तु स्वरूपस्य ज्ञानस्य वा बाध्यत्वम्; शुक्तिकायां रजतस्य सत्त्वात्[2] ।

न च विधिव्यापारं प्रत्यक्षमित्येवास्मदभिमतम्, न तु विधायकमिति; विकल्पासहत्वात् । किं विधेर्व्यापारवद्व्यापारो यस्येति, विधिरूपो व्यापारो यस्येति वेति? आद्ये न पूर्वोक्तदोषान्मुक्तिः । विधेर्व्यापारस्याज्ञातज्ञापनाप्रवृत्तप्रवर्तनात्मकत्वात् । नापि द्वितीयः, अज्ञातज्ञापनत्वादिव्यतिरेकेण विधेः रूपान्तराप्रसिद्धेः ।

अथेदंतया प्रकाशनं विधिः; 'अयमस्माद्भिन्नः' इति व्यावर्तमानतया प्रकाशनं व्यवच्छेद इति । न हि तर्हि भेदाविषयत्वम्; घटादाविदंतया विहितत्वात् । व्यवच्छेदश्चार्थसिद्धः; घट इति प्रतीतौ पटादिव्यवच्छेदसिद्धेः । अत एव हि तेन जलाहरणादिविशेषक्रिया । विशेषव्यवच्छेदापेक्षायां तु प्रतियोगिविशेषापेक्षा । अन्यदा तु पटादिप्रतीतावपि विशेषेण व्यवच्छेदोऽप्यर्थसिद्ध एव । विधायकत्वेऽपि सर्वप्रमाणानां सावधारणत्वस्यार्थसिद्धत्वात् । यदि इदंतया प्रतिभासे व्यवच्छेदो नार्थसिद्धः, तदा तदर्थिनः तदातनप्रवृत्तिर्न स्यात् ।

---

1. अतत्त्वेन; अतत्त्वतया ।

2. सत्त्वादिति । इदं च सिद्धान्ते पञ्चीकरणादिना रजतांशस्थित्यभ्युपगमात् । अत एव ज्ञानस्य स्थितविषयकस्य बाधसंभवः । व्यवहारबाधमात्रं हीष्यते । प्राभाकरमतेऽपि सर्वं ज्ञानं यथार्थमिति न ज्ञानबाधः ।

न चान्यवस्त्वसिद्धेर्न व्यवच्छेद इति ; विलक्षणप्रत्यक्षादिबुद्धेरेवान्यवस्तुसिद्धेः। विलक्षणा एव हि घटपटादिधियः। यदि तद्धियां मिथ्याविषयत्वम्, तदा सद्बुद्धेरपि मिथ्याविषयत्वं वक्तुं शक्यम् । न च निरधिष्ठानभ्रमो न संभवति; त्वत्पक्षे दुष्टत्वादिविरहे भ्रान्त्युपपत्त्यादिवच्छून्यपक्षस्यापि युक्तत्वात् ।

किंच त्वदुक्तयुक्तिप्रमाणबुद्धीनामस्मदुक्तयुक्तिभ्यो वैलक्षण्यमस्ति वा, न वा? अस्ति चेत् विलक्षणार्थसिद्धिः; बुद्धीनां निराकारत्वाङ्गीकारात्। अर्थेनैव विशेषो यतः। द्वितीये तु युक्त्यादिप्रवृत्तिवैफल्यम् ।

अतो विधायकत्वेऽपि तानि भेदविषयाण्येव ।

न च भेदस्य वस्तुस्वरूपत्वात् प्रत्यक्षस्य क्षणिकत्वेऽपि वस्तुग्रहानुपपत्तिः; जात्यादेः क्षणिकग्राह्यत्वात् तद्धियोऽपर्यवसानादेव व्यक्तेरपि विषयत्वम् । विलम्बस्तु प्रतियोगिविशेषापेक्षयेत्युक्तम्। घट इति व्यवहारे सर्वस्माद्भेदव्यवहारः सिद्ध एव। प्रतियोगिव्यपेक्षया च, अयमस्माद्भिन्न इति व्यवहारोऽपि युक्तः । न च वस्तुस्वरूपस्यैव भेदत्वे न प्रतियोग्यपेक्षेति; अयमस्माद्भिन्न इति प्रतीतिव्यवहारस्वभावादेव तत्सिद्धेः । घटादिभेदमात्रप्रतीतेर्न प्रतियोग्यपेक्षापि ।

न च भेदस्य स्वरूपत्वे घटादिपर्यायतेति; अद्वैतपक्षेऽपि समत्वात् । किमभेदो ब्रह्मणः स्वरूपम्? धर्मो वा? आद्ये येन केनापि ब्रह्मप्रतीतौ तद्व्यवहारवत् सर्वस्मादभेदव्यवहारापत्तिः । अभेदस्य स्वरूपत्वादेव न प्रतियोग्यपेक्षापि। केनचित् कस्यचिदभेदस्य साध्यत्वे प्रतियोग्यपेक्षास्त्येव । ब्रह्मपर्यायता चाद्वितीयपक्षस्य। तदा चाद्वितीयं ब्रह्मेति पदद्वयवैयर्थ्यम्। नापि द्वितीयः; अद्वैतासिद्धेः। न चावास्तवस्तद्धर्म इति ; भेदस्यैव वास्तवत्वापत्तेः। अस्माकं तु पर्यायत्वेऽपि सर्वपदार्थसाधारणत्वेनाविशेषकत्वात्, पृथिव्यादेर्द्रव्यादिसंज्ञावत् । अत एव हि पृथिवी द्रव्यमितिवद् घटो भिन्न इति व्यवहारः। भिन्न इति व्यवहारस्तु भेदनिर्वर्तकपृथक्त्वादिधर्मयोगित्वेन । अद्वैतपक्षे तु ब्रह्मणो धर्मानङ्गीकारान्न कथंचिदप्युपपत्तिः । अद्वितीयादिशब्दानां सद्वितीयत्वादिनिषेधद्वारा ब्रह्मपरत्वान्निषेधस्य निषेध्यापेक्षत्वात् स्वरूपनिषेधस्य चायुक्तत्वादनङ्गीकृतत्वाच्च क्वचिन्निषेधे ब्रह्मव्यतिरिक्तकृत्स्नप्रपञ्चापलापोऽसिद्धः ।

यश्च कार्यवाक्यार्थवायुक्तार्थाक्षेपः—विधातृ प्रत्यक्षं रूपं रूपतया रसं रसतया विधत्ते; न पुनः सर्वमेकतयेति। तदयुक्तम्। तत्किं विधायकं व्यवच्छेदकमिति विप्रतिपत्तौ 'रूपं रूपतया विधत्ते' इत्युपन्यासः प्रकृतानुपयोगादनर्थ इति—तन्न; विधायकत्वाङ्गीकारेण भेदस्य विषयत्वसाधनात् प्रकृतोपयोगात्। सन्मात्रविषयत्वसाधनमेव हि प्रक्रान्तम्। रसरूपादयो हि विशेषा एव। रसत्वेन भाने भेदविषयत्वं साधितमेव। सर्वस्यैकस्वरूपत्वाभानोक्त्या चाद्वैतभक्तो निराकृतः।

स्वर्गकामादिवाक्यानां नियोज्यविषयान्वितकार्यपरत्वेन तत्तत्कार्यस्य च स्वरूपानुष्ठेययागादिसाध्यदुरनुष्ठानत्वबाधनमुखेन न ब्रह्मपरता। न च तद्वाक्येषु दुरनुष्ठानत्वप्रतीतिः।

श्रुतेरपि कार्यैकपरत्वान्न सिद्धब्रह्मणि प्रामाण्यं च। न च पुत्रजन्मादिवाक्येषु सिद्धार्थव्युत्पत्तिः। मुखविकासादेर्हर्षहेतोः पुत्रजन्मवाक्यानन्तर्येऽपि सुखप्रसवादेरपि व्युत्पित्सुदृष्टत्वेनानुपपत्तेः। सुखप्रसवादिहर्षहेतुस्त्वनेकः क्लृप्तः। अतो नाद्या व्युत्पत्तिः सिद्धार्थ इति। प्रसिद्धार्थसमभिव्याहारेष्वपि व्युत्पत्तिपूर्विकैवेति न सिद्धपरता शब्दस्य। अतः कार्यपरत्वानङ्गीकारे श्रुतेरनर्थबोधकतैव।

न च शाब्दव्युत्पत्तेरिदंतादिविज्ञानपूर्वकत्वात् सिद्धपरतैवेति; विकल्पासहत्वात्—इदंतादिविज्ञानं शाब्दम्, उत अन्यजमिति। आद्ये तद्विज्ञानस्य शब्दजत्वाविशेषादिदंतादिविज्ञानपूर्वकत्वे चानवस्थापातः। न च केवलेदंतादिपरत्वेनान्यनिरपेक्षं शाब्दव्युत्पत्तिः; लिङ्गाभावेन व्युत्पत्त्यसंभवात्। न हि घटमात्रे व्युत्पत्तिः; चेष्टादिलिङ्गतोऽन्वित एव व्युत्पत्तिः। द्वितीये तु शास्त्रार्थत्वेनाननुभूतः प्रमाणान्तरप्रतिपन्नेदमाद्यर्थो न शाब्दः स्यात्। न हि प्रथमं प्रमाणान्तरतः प्रतिपन्नमित्येतावता शाब्दता।

किंच अनेकपदात्मकशास्त्रस्यानेकपदार्थान्वित एव प्रमाणान्नाद्वैतसिद्धिः।

न च 'नेति नेति' इति सर्ववस्तुनिषेधादद्वैतमिति। मूर्तामूर्ततया प्रतिपादितमात्रार्थत्वात् तस्य। अस्तीतिवन्नास्तिपदान्वययोग्यत्वान्निषेधे च नात्यन्तनिषेध इत्युक्तम्। प्रपञ्चः सत्यतया प्रत्यक्षतः प्रतीयते।

न च प्रत्यक्षादेर्विषयादिदोषदुष्टत्वे सावकाशत्वान्निर्दोषाद्वैतश्रुतेर्निरवकाशत्वात् प्राबल्यमिति; अद्वैतश्रुतेरपि श्रावणप्रत्यक्षत्वात् तस्य च

विषयादिदोषदुष्टत्वसंभावनायास्त्वयैवोक्तत्वात् वेदप्रमेयत्वेनाभिमताद्वैतस्यापि मिथ्यात्वापातात् ।

न च वेदाख्यकरणस्य स्वतो न दोष इति नाप्रामाण्यमिति; प्रत्यक्षादेरपि समत्वात् । न च शुक्तिकारजतादौ व्यभिचारो दृष्ट इति सर्वप्रत्यक्षादौ तच्छङ्केति; वेदेऽपि तदविशेषात्, अङ्गुल्यग्रादिवाक्यवद्वेद-वाक्येऽपि व्यभिचारशङ्कासाम्याच्च । न चापौरुषेये वेदे न दोषशङ्केति; अपौरुषेय-स्याकृतकात्मकत्वाद् ब्रह्मणश्चापि तथात्वाद् दोषमूलभ्रान्त्यभावापत्तेः । वेदस्य च निर्दोषत्ववास्तवत्वाङ्गीकारे च न ब्रह्माद्वैतम् ।

यच्चाद्वैतस्य बाधकप्रत्ययाभावात् न मिथ्यात्वमित्युक्तम्, तन्न; तदभावस्यासिद्धत्वात् । न हि सिद्धं तज्ज्ञानमबाधितमिति । [1]शून्यवाक्यं च बाधकमिति । अत एव शून्यवाक्यवद्वेदवाक्यस्यापि दोषमूल-त्वमङ्गीकृतम् ।

न चाद्वैतश्रुतेः सर्वनिषेधत्वेन परत्वात् प्राबल्यमिति; सर्वनिषेधस्य "लब्धरूपे क्वचित्किंचित्तादृगेव निषिध्यते" इति वदता त्वयैव परित्यक्तत्वात् । न च निषेधकत्वेन परत्वात् प्राबल्यमिति; 'न हिंस्यात्' इति शास्त्रस्य निषेधत्वेऽपि वैधालम्भाबाधकत्वात् ।

न च हिंसानिषेधालम्भविध्योः स्मृतिश्रुतित्वान्न बाध्यबाधकत्वमिति; "ब्राह्मणाय नापगुरेत्" इत्यनेन 'ब्राह्मणमालभेत' इत्यस्य बाध्यत्वापत्तेः । तच्छास्त्रयोः [2]सामान्यविशेषविषयत्वेन बाध्यबाधकत्वम्; अत्र तु भेदनिषेधो विशेषविषय इति प्राबल्यमिति तु न; प्रत्यक्षादेर्वेदस्य [3]विशेषविषयत्वात् । प्रत्यक्षादि च रूपादिविशेषविषयम् । वेदोऽपि चाग्निहोत्रादिकार्यविशेष-विषयः ।

---

1. शून्येति । सर्वं शून्यमिति बौद्धवाक्यमित्यर्थः ।

2. सामान्येति । सामान्यस्य निषेधः; विशेषस्य विधिरिति वैलक्षण्यान्न बाध्यबाधकभावः । अत्र तु भेदनिषेधो भेदाख्यविशेषविषयः; न तु सामान्यविषय इति भावः ।

3. प्रत्यक्षविषयविशेषवेदप्रतिपाद्यविशेषरूपतत्तदपेक्षया भेदनिषेधः सामान्य-विषय इति तुल्यम् । तत्तद्विहितविशेषातिरिक्तपरत्वसंभवान्निषेधस्येति भावः ।

न च—अपगोरणनिषेधस्य पुरुषार्थत्वात् आलभेतेत्यस्य क्रत्वर्थत्वान्न विरोधः; प्रत्यक्षादेः प्रपञ्चभेदविषयत्वादद्वैतश्रुतेस्तन्निषेधपरत्वाच्च विरोध इति; अद्वैतश्रुतेर्ब्रह्मपरत्वात् घटादिविषयत्वात् प्रत्यक्षस्येति नैकविषयत्वमिति विरोधाभावात्। एकमेवाद्वितीयं ब्रह्म ब्रह्मपरैव श्रुतिः। न च "नेह नानास्ति" इत्यादिभिरेकविषयत्वं प्रत्यक्षादेरिति; तर्हि समबलयोरेकविषयत्वेन नानात्व-निषधवत् "नित्यानाम्" इति नानात्वश्रुतेर्विकल्पापत्तिः। न च न तत्त्वे विकल्प इति; प्रमाणाधीनत्वात् प्रमेयसिद्धेस्तत्प्रतिपन्नस्य [1]ग्रहणाग्रहण-वद्विरुद्धस्यापि स्वीकार्यत्वात्। न चानुष्ठानस्य विकल्पो युक्तः, न तत्त्वस्येति। अनुष्ठाने विकल्पे विशेषत्वे[2] समुच्चयादुभयमपीह कार्यशेषः। अत्रापि परमार्थत ऐक्यं भेदश्चास्तु। सत्त्वाकारेणैक्यं घटाद्याकारेण च भेद इति न किञ्चिद्धीनम्। न च तत्त्वे द्वैरूप्यं न युगपद् दृश्यत इत्यन्यतर-बाध इति; तर्हि प्रत्यक्षादिविरोधे प्राबल्लवनादिवाक्यवद् वेदस्यार्था-नवबोधकत्वादद्वैतश्रुतेरेव बाध्यत्वम्।

अतः प्रत्यक्षग्राह्यव्याप्तिकानुमानतोऽनेकपदार्थविशिष्टकार्यपरत्वव्युत्पत्त्यनु-सारतो भेदस्यैव वेदार्थत्वात् तदविरोधेनाद्वैतश्रुतेरर्थवर्णनोचिता।

सा चैकत्वश्रुतिरेकस्मिन् देहे एक एवात्मेत्येवंपरा। नानात्वनिषेध-श्रुतिरात्मनोऽनेकदेहपरिग्रहेऽप्येक एवात्मेत्येवमर्थपरा। "नेति नेति" इति श्रुतिर्देहादेरात्मत्वनिषेधपरा। "विज्ञानघनः" इत्यादयो जीवस्य पृथिव्यादितो भेदज्ञानाय चिच्छक्तियोगप्रतिपादनपराः; तस्यागन्तुकचैतन्यस्वभावत्वात्; तच्च सुषुप्त्यादौ ज्ञानानुपलब्धेः। आनन्दगुणवादश्रुतयः स्वाभाविकदुःखा-भावपराः। निर्गुणत्वश्रुतयश्च बुद्ध्यादिनवगुणाभावपराः। "सर्वं खल्विदम्" इत्याद्याश्चेतरेतरापृथक्सिद्धत्वार्थत्वपराः। एकविज्ञानेन सर्वविज्ञानश्रुतिरात्मज्ञानस्य परमपुरुषार्थमोक्षपरत्वात् तद्व्यतिरिक्तसर्वज्ञानानां कृतार्थत्वपरा। एवं यज्ञादिकृदात्मस्वरूपप्रतिपादनपरा वेदान्ताः।

---

1. ग्रहणाग्रहणेति। अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णाति इति विधिनिषेधयोः समानविषयत्वेन विकल्पस्वीकारादिति भावः।

2. विशेषत्व इति। एकस्मिन् प्रयोगे द्वयोर्ग्रहणस्य विकल्पस्थलेऽ-भावेऽपि, प्रयोगविशेषे एकत्र तत्, अन्यत्र तदभाव इति विशेषस्थितेः सामान्यतः कर्मणि ग्रहणाग्रहणसञ्चय इति हि सुवचमिति भावः।

यच्च—यत् प्रकाशते तत् प्रकाशादभिन्नम्, प्रकाशात्मकं च ब्रह्मैवेति सर्वं ब्रह्मात्मकमित्यद्वैतसिद्धिरित्युक्तम्—तन्न; नानाभूतपदार्थात्मकतयैव प्रकाशमानत्वात्; प्रकाशप्रकाश्ययोरभेदेऽपि प्रकाशनानात्वाददद्वैतासिद्धेः। प्रकाशप्रकाश्ययोरपि नैक्यम्; ज्ञानतया विषयतया च विवेकात्।

न चानाद्यध्यासान्नानात्वभानस्य मिथ्यात्वमिति; विकल्पासहत्वात्। नानात्वस्य आविद्यत्वम्? भानस्य वा? विशेषस्य वा? नाद्यः; प्रतिपन्नोपाधावबाधात्। नापि द्वितीयः; अनङ्गीकारात्। एतेन तृतीयोऽपि निरस्तः।

किंच अध्यस्यमानपदार्थसदृशोऽर्थोऽध्यासात् पूर्वं ब्रह्मणो दृष्टो वा? न वा? आद्ये अपसिद्धान्तः। द्वितीये त्वसतोऽदृष्टस्याध्यासोऽनुपपन्नः, अदर्शनात्। अनादित्वकल्पनापि दृश्यमानभ्रान्तिपरिकरविरुद्धार्थकल्पनाया अनुपपन्नत्वाद् दुष्टा। मिथ्यावादिना तु ब्रह्मव्यतिरिक्तं न किंचिदप्यङ्गीकृतम्।

यत्तु सर्वप्रमाणानां स्वार्थप्रमापकत्वे तु न प्राथम्यचारम्यमिति। "शृणोत ग्रावाणः" इत्यादिना ग्राव्णां श्रवणसामर्थ्यप्रतीतेः प्रत्यक्षात्तदप्रतीतेः प्रतीतिविरोधेऽपि बाध्यबाधकत्वाभावापत्तेः। गौणार्थवर्णनं तु प्रत्यक्षस्य प्राथम्याज्ज्यैष्ठ्येन। व्युत्पत्तिद्वारापि प्रत्यक्षसापेक्षा श्रुतिरिति प्रत्यक्षं बलीयः। प्रत्यक्षाश्रिता च श्रुतिः प्रमाणमिति सापेक्षा। उत्पत्तौ यदपेक्षा भवति न पुनरेतद्बाधते; स्वहानिप्रसङ्गात्।

न च शुक्तिकारजतादिप्रतिभासस्येन्द्रियदोषानुमानहेतुत्वेऽपि तदनुमानबाध्यत्वं दृश्यत इति; नेदं रजतमिति बाधधिय एव तद्दोषानुमापकत्वेन मूलत्वात्। न हि तत्र रजतप्रतिभासस्तद्दोषानुमानहेतुः।

यच्च वेदस्यैव सर्वजगत्प्रभवहेतुत्वेन नित्यत्वात् तत्प्राथम्यमिति, तन्न; इदानीमिव जगत्प्रवृत्तेरत्यन्तोच्छेदाभावात्। युगपत्सृष्टिप्रलयाभावे वेदस्यातद्धेतुत्वेनाप्राथम्यात्। प्रत्यक्षादेरप्यनादित्वादविशेषाच्च। युगपत्सृष्ट्यादिश्रुतिरत्वात्मज्ञानस्तुतिपरा।

यच्च प्रत्यक्षादिश्रुतिरतत्त्वावेदकत्वेन प्रातीतिकलौकिकवैदिकव्यवहाराङ्गमात्रमिति—तन्न; सर्वश्रुतीनामपि तथात्वापत्तेः; अद्वैतश्रुतेरपि कर्माङ्गश्रुतिवत् श्रुतित्वाविशेषात् प्रमाणत्वाविशेषाच्च। एवं च नाद्वैतश्रुतेरन्यथानुपपत्तिः।

अतः प्रत्यक्षादिप्रमाणप्रतिपन्नार्थानामपि यथार्थता । विरोधे च प्रत्यक्षादेर्बलीयस्त्वम्; अव्यवहितत्वात् । लिङ्गादिव्यवहितमनुमानादि । अतः श्रुतिलिङ्गादिवत् पूर्वप्राबल्यात् तदविरोधेनार्थवर्णना ।

न च भेदश्रुतीनां साध्यसाधनमात्रोपक्षयात् लोकसिद्धो भेदोऽनूद्यत इति; स्वर्गादिभेदानामलौकिकत्वेनानुवादानुपपत्तेः; प्रत्यक्षादिर्विधायक इति स्वमतविरोधाच्च ।

एवं सर्वश्रुतीनां कार्यैकार्थपरत्वान्नार्थभेदाच्च शास्त्रद्वैविध्यम् । सर्वविज्ञानानां च याथार्थ्यमिति ख्यातिनिरूपण उक्तम् ।

यच्च दृश्यत्वात् प्रपञ्चमिथ्यात्वमिति, तन्न; विकल्पासहत्वात् । किं दृश्यत्वं प्रमाणगम्यत्वम्? किं वा जडत्वम्? उत कार्यत्वम्? अनिर्वचनीयत्वं वा? आद्ये ब्रह्मणोऽपि मिथ्यात्वं स्यात् । ब्रह्म हि जीवात्मैव । तस्याप्यर्थवित्तिषु भासमानत्वेन प्रत्यक्षत्वात्, वेदान्तगम्यत्वाच्च ।

न च वेदान्तानामतद्व्यावृत्त्या प्रामाण्यम्, न तु ब्रह्म स्वरूपेण तत्प्रमेयमिति; प्रमाणान्तरानवगम्यत्वाभिमानाद्ब्रह्मणः । केनचिद्वाक्येन प्रतिपाद्य तद्व्यावृत्ते- र्वाच्यत्वात् प्रमेयत्वसिद्धेः ।

न च स्वयंप्रकाशत्वान्न [1]प्रमाणगम्यत्वापेक्षमिति; वेदान्तानामतत्परत्वा- पातात् । ब्रह्मणो जगत्प्रतिभासमानस्वरूपभ्रान्त्यभावापाताच्च । न हि स्वयं- प्रकाशमानत्वे भ्रान्त्युपपत्तिः । न तु शुक्तिप्रकाशे रजतभ्रमः । न चातद्व्यावृत्त्या प्रामाण्योपपत्तिः; अव्युत्पत्तेः । न च रज्जुगतसर्पत्वधिया धावतः कस्यचित् पुरुषस्य नायं सर्पो रज्जुरेवेत्याप्तवाक्यश्रवणानन्तरं स्थित्यादिभिर्भीतिनिवृत्ति- हेतुसर्पेतरत्वबोधनायायं शब्दः प्रवृत्त इति व्युत्पित्सोर्व्युत्पत्तिः सुशकेति; भीतिनिवृत्तिहेतुनिश्चेष्टत्वादेरपि[2] दृष्टत्वेन क्लृप्तत्वात् सर्पेतरत्वज्ञानस्य शाब्दत्व- कल्पनानुपपत्तेः । स्वयंप्रकाशत्वेऽपि तदुद्दिश्य बृहत्त्वादयो वाच्या इति दृश्यत्वाद् ब्रह्मणोऽपि मिथ्यात्वापातात् ।

---

1. गम्यत्वापेक्षमिति । दृश्यत्वं न प्रमाणगम्यत्वनिबन्धनमित्यर्थः । प्रमाणगम्यत्वमिति वा पाठ्यम् ।

2. निश्चेष्टत्वादेरपीति । निश्चेष्टमिदम्, निर्विषमिदमिति बोधे सति सर्प इति ज्ञानेऽपि भीत्यभावदर्शनादिति भावः ।

किंच पृथिव्यादिप्रपञ्चस्याबाधितप्रत्यक्षसिद्धत्वाद्धेतुः कालात्ययापदिष्टः । न चोष्णजलवत् देहात्मभानस्याबाधितप्रत्यक्षसिद्धत्वेऽपि भ्रान्तित्वं दृश्यत इति । तदौष्ण्यस्याग्निसंयोगान्वयव्यतिरेकानुविधायित्वात् । देहस्य चापचयादियुक्तत्वेन प्रतिदिनं कार्यान्तरत्वेनान्यत्वात् तस्यात्मत्वे पूर्वदिनाद्यनुभूतस्मृत्यनुपपत्तेरिति यौक्तिकबाधात् । प्रपञ्चप्रतीतेस्तु न किंचिदप्यौपाधिकत्वशङ्का ; प्रतिपन्नोपाधावबाध्यत्वात् ।

ननु बाधयोग्यत्वमेव बाध्यत्वम्, तत् पृथिव्यादावप्यस्तीति—तन्न; तद्योग्यत्वानवगमात् । न च तद्योग्यत्वमेवानुमानात् सिध्यतीति ; मिथ्यात्वस्यैव साध्यत्वाभिमानात् । न च मिथ्यात्वे बाध्यत्वं स्वतः सिध्यतीति ; बाध्यत्वादेव तत्सिद्धेः । अतो दृश्यत्वमप्रयोजकं मिथ्यात्वे । बाध्यत्वं च प्रतिपन्नोपाधौ व्यवहारस्यैवेत्युक्तम् । अतो दृश्यत्वमिथ्यात्वयोर्न वादिसंप्रतिपत्तिरिति दृष्टान्तः साधनविकलः । रजतज्ञानस्य पूर्वानुभूतरजतविषयत्वेन स्मृतित्वात् तस्य च सत्यत्वात् साध्यविकलश्च दृष्टान्तः । पृथिव्यादिप्रपञ्चः सत्यः दृश्यत्वादात्मवदिति प्रकरणसमश्च ।

न च दृश्यत्वमात्मनोऽसिद्धमिति ; प्रवृत्तिविशेषेण ज्ञानानुमानद्वारा तत्समवायिन आत्मनोऽनुमेयत्वात् । [1]अर्थवित्तिषु भासमानत्वेन प्रत्यक्षत्वात् । अहं जानामीत्यादौ स्फुरत्येवात्माहमिति ।

अतः प्रमाणगम्यत्वरूपदृश्यत्वानुमानं न प्रपञ्चस्यासत्यत्वे । एवं जडत्वकार्यत्वपक्षावपि ; बाध्यत्वस्यैव मिथ्यात्वप्रयोजकत्वात् । [2]तान्यपि च मिथ्यात्वेनाभिमतानि । जडत्वाभिमानस्यास्य प्रपञ्चान्तर्गतत्वान्मिथ्यात्वापत्तौ जगतः सत्यतापातः । अतिव्याप्त्यादेर्दोषाभावापत्तौ सर्वत्र तस्य दोषाभावप्रसङ्गाच्च । प्रपञ्चत्वाकारेणानुमानस्य स्वविषयत्वमप्यस्त्येव । प्रपञ्चत्वेऽपि मिथ्यात्वासाधनत्वेऽनैकान्त्यम् ।

न चानुमानान्तरेण तदनुमानस्य मिथ्यात्वान्न दोष इति; अनुमानान्तरात् पूर्वानुमानानैकान्त्यापरिहारात् । तत्परिहारसिद्धावप्यनवस्था ; तदनुमानस्यापि स्वव्यतिरिक्तानुमानमिथ्यात्वसाधनपरत्वात् । तस्य मिथ्यात्वानुमान-

---

1. अर्थवित्तिष्विति । 'घटमहं जानामि' इत्येवमाकारिकाः खल्वर्थवित्तयः प्राभाकरमते सिद्धान्ते चेति भावः ।

2. तान्यपीति । जडत्वकार्यत्वादीन्यपीत्यर्थः ।

साधनान्तरापेक्षत्वात् । प्रथमानुमानेनैवानुमानान्तराणामपि मिथ्यात्वसिद्धेः तेषां प्रथमानुमानमिथ्यात्वासाधकत्वाच्च ।

न चानुमानव्यतिरिक्तप्रपञ्च एव पक्षत्वेनाभिमत इति । अनुमानानां सत्यत्वे नाद्वैतसिद्धिः । अनुमानान्तरात् तन्मिथ्यात्वसाधने च पूर्वोक्ता अनवस्था । बुभुत्सापूर्वकत्वादनुमानप्रवृत्तेर्नानवस्थेति चेत्—न ; सर्वमिथ्यात्वव्युत्पित्सोस्तदवस्थितौ बुभुत्साया एवानवस्थितेः । अतो जडत्वहेतोः स्वमिथ्यात्वसाधकत्वे जगतः सत्यत्वम् ; तदसाधकत्वेऽनैकान्त्यम् ; अनुमानान्तरात्तत्साधने चानवस्थेत्येतैर्दोषैर्गृहीतं मिथ्यात्वसाधकं दृश्यत्वानुमानं न स्पन्दितुं क्षमम् ।

कार्यत्वहेतुश्च प्रपञ्चान्तर्गताकाशकालदिशाममूर्तसर्वगतद्रव्यत्वेनात्मवन्नित्यत्वाद्भागासिद्धः । आकाशादेरुत्पत्तिश्रुतिश्च मुख्यार्थासंभवादात्मस्तुतिपरा ।

अनिर्वचनीयत्वस्य स्वरूपेणासिद्धत्वात् तत्पक्षोऽपि निरस्तः । अतः साध्यसाधनविकलो दृष्टान्तः ।

न च ख्यातिभ्रान्तिबाधानामन्यथानुपपत्त्या शुक्तिकारजतादेरनिर्वचयीयत्वं साध्यत इति; तेषामन्यथोपपत्तेः ख्यातिप्रकरण उक्तत्वात् । किं चानिर्वचनीयमिथ्यात्वयोरेकार्थत्वात् साध्याविशिष्टता च । प्रतीयमानत्वपूर्वकबाध्यत्वमेव हि मिथ्यात्वमभिमतम् । अनिर्वचनीयत्वमपि तदेव । दूषणान्तराणि तु भाष्ये द्रष्टव्यानि ।

अतो नाखण्डार्थपरता कस्यापि वाक्यस्येति कृत्स्नो वेदः कार्यपर एवेति ।

[1]ननु स्फोट एव वाक्यार्थो युक्तः । वाक्यपरिगम्यो हि वाक्यार्थः । वाक्यं च न तद्बोधकम् । न च श्रोत्रग्राह्यवर्णात्मकपदानां वाक्यत्वादर्थज्ञानहेतुत्वम् ; वर्णतदर्थयोर्भिन्नदेशस्थत्वेनासंबन्धात् । न ह्यर्थासंबद्धानां तज्ज्ञापकत्वम् । चक्षुरादयोऽपि रूपादिसंबद्धा एव तज्ज्ञापकाः । अतस्तादात्म्यमेव वाक्यतदर्थयोः । शब्दश्च वर्णातिरिक्तः; वर्णानामतिरिक्तार्थज्ञानहेतुत्वानुपपत्तेः । वर्णानां हि संबन्धविशेषविशिष्टानां पदवाक्यव्यपदेश्यानामर्थप्रत्यायकत्वं वाच्यम् । तेषां न संबन्धोपपत्तिः; उच्चारणक्रमानुसारित्वेन वर्णाभिव्यक्तेः क्षणिकत्वात् ।

---

1. निरस्तो निर्विशेषब्रह्माद्वैतिसंमतोऽखण्डवाक्यार्थपक्षः । अथ भर्तृहर्याद्यभिप्रेतः शब्दाद्वैतपक्षोऽपि निरस्य इति तमनुवदति—**ननु स्फोट इत्यादिना** ।

न च वर्णधियामपि [1]तथात्वात् संबन्धोपपत्तिः । तत्स्मृतीनामप्यनुभूतिसमानत्वान्न साहित्यम् । न च संस्कारसाहित्यादेका वर्णेषु स्मृतिरित्युपपत्तिः ; व्युत्क्रमोच्चरितेष्वप्येकस्मृत्यापत्तेः[2] ; स्मृतानामेवार्थधीहेतुत्वेनोच्चारणक्रमानुपयोगात् ।

अतः स्फोट एव भ्रान्त्या प्रकृतिप्रत्ययादिविभागेनार्थतया च नानात्वेन विवर्तते ।

ननु श्रोत्रग्राह्यत्वाद्वर्णानामेव शब्दता ; अर्थानां च भेदेन वाच्यता च लोकसिद्धेति—न ; लोकसिद्धेः भ्रान्त्यान्यथोपपत्तेरुक्तत्वात् । गौरिति शब्दो गौरित्यर्थो गौरिति ज्ञानमिति युगपदेकाभिधाननिर्देशात् सर्वस्यापि शब्दात्मकत्वस्यैव लोकसिद्धत्वाच्च । न भिन्नानामर्थानामक्षरादिशब्दवाच्यानां युगपन्निर्देश्यत्वम् । अतो लोकतोऽपि शब्दाद्वैतसिद्धिः । "एकमेवाद्वितीयम्" इति वेदान्ततोऽपि तत्सिद्धिः ।

अतः स्फोटाख्यः शब्दः स्वयप्रकाशः । स एकोऽपि श्रोत्राद्युपाधिभेदात् मणिकृपाणदर्पणाद्युपाधिवशादेकस्यापि मुखस्य नानात्वप्रतीतिवद्भेदेन प्रतीयते ।

ननु श्रोत्रादिभेदः कथमिति? तद्भेदः शब्दधीभेदधिया सिद्ध इति ब्रूमः । ननु तर्हि श्रोत्राद्युपाधिभेदात् शब्दधीभेदः ; एतत्सिद्धौ तत्सिद्धिरित्यन्योन्याश्रय इति ; एवमादिदोषस्याविद्यानुगुणत्वात्[3] ।

ननु स्फोटाभिव्यक्तिरेकेन वर्णेन वा? अनेकैर्वा? आद्ये, एकेनैव स्फोटस्याभिव्यक्तत्वाद्वर्णान्तरवैयर्थ्यम् । न च भागशोऽभिव्यक्तिः, निर्भागत्वात् स्फोटस्येति दुर्घटत्वमिति । न ; दुर्घटत्वस्यैवाविद्याभूषणत्वात् । तदुक्तम्—"[4]दुर्घटत्वमविद्याया भूषणं न तु दूषणम्" इति ।

शब्दः शब्द इत्येकप्रतीतिप्रयोगाभ्यां च तदद्वैतसिद्धिः । वेदप्रमाणादिभेदव्यवहारोऽपरमार्थः । स्फोट एक एव परमार्थतस्तत्त्वमिति संक्षेप इति ।

---

1. तथात्वादिति । क्षणिकत्वादित्यर्थः ।
2. तथाच नदी दीन इत्यादौ समानबोधापत्तिरिति भावः ।
3. दुष्टत्वमविद्याया भूषणं न तु दूषणमिति भावः ।
4. "कथंचिद् घटमानत्वेऽविद्यात्वं दुर्घटं भवेत् ।"
   इत्युत्तरार्धम् । इष्टसिद्धिस्थमिदं वचनम् ।

एतदप्यनुपपन्नम्; अखण्डवाक्यार्थसमत्वात् स्फोटवाक्यार्थस्यापि तन्निरासेनैव निरस्तत्वात्। एकेनैव पदेन स्फोटस्याभिव्यक्तत्वात् तस्य चैकत्वात् सर्वार्थाविभागाच्च सर्वेषां सर्वज्ञत्वापत्तिश्च। [1]क्षुरमोदकादिशब्दोच्चारणे मुखपाटनपूरणाद्यापत्तिश्च; अर्थतादात्म्याभिधानात्।

श्रोत्रग्राह्यवर्णातिरिक्तशब्दसद्भावे च न प्रमाणम्।

न च श्रोत्रग्राह्यस्यैव शब्दत्वे शब्दत्वसत्त्वजात्योरपि श्रोत्रग्राह्यत्वात् शब्दत्वप्रसङ्ग इति; शब्दत्वसत्त्वजात्योर्दुर्निरूपत्वेनाभावात्। व्यक्तिग्रहणपूर्वकं पूर्वाकारावमर्श एव हि जातिसिद्धिः। न हि सर्षपमहीधरादिषु एकाकारावमर्शो गवादिष्विव। [2]शब्दप्रयोगस्तु प्रमाणग्राह्यत्वोपाधिकः[3]। तथा ककारखकारादिवर्णेष्वपि न पूर्वाकारावमर्शः। शब्दशब्दप्रवृत्तिस्तु श्रोत्रग्राह्यत्वोपाधिकः; वर्णोच्चारणान्वयव्यतिरेकानुविधायित्वाच्च शब्दप्रयोगप्रतीत्योः। वर्णानां च नानात्वाच्छब्दैक्यमसिद्धम्।

न च शब्दार्थज्ञानानां युगपदेकाभिधाननिर्देशात् शब्दाद्वैतसिद्धिः, तेषामबाधितप्रत्यक्षेण भेदस्यैव सिद्धत्वात्। अर्थज्ञानयोः गौरिति शब्दाननुविद्धत्वाच्च न शब्दत्वम्[4]। गौरित्यर्थ इत्युक्तम्; न तु गोशब्दोऽर्थ इति। तयोरपि शब्दत्वे च अर्थज्ञानोक्तिवैयर्थ्यम्। गोशब्दस्यार्थपरत्वेन शब्दपरत्वाभावाच्च। अत एव हि गामानयेत्युक्तौ गवार्थानयनम्। युगपदेकाभिधाननिर्देशमात्रादैक्ये च यमकादौ गवादिशब्दानामिन्द्रियपृथिव्याद्यनेकार्थपरत्वेन निर्देशादिन्द्रियादेरैक्यापत्तिश्च।

अन्योन्याश्रयादिदोषस्याविद्यानुगुणत्वोक्तिरपि न; उपपत्त्यनुपपत्त्योः सर्वत्रानिरूपणीयत्वापत्तेः। ततश्च, वर्णानां क्रमेणार्थप्रत्यायकत्वं युगपद्वेत्यादिविकल्पतो दूषणोक्त्यादिवैयर्थ्यम्। न च वर्णानामनेकत्वात् युगपदेकोऽयं

---

1. क्षुरेति। तदुक्तं न्यायदर्शने—"पूरणप्रदाहपाटनानुपलब्धेश्च" इति। मोदकशब्दोच्चारणमात्रेण न मुखं मोदकेन पूर्यते; अग्निरित्युक्त्या न दह्यते; क्षुरेति शब्दप्रयोगे च न पाट्यत इति तदर्थः।

2. शब्दप्रयोगस्त्विति। सदिति शब्दप्रयोगस्त्वित्यर्थः।

3. ग्राह्यत्वोपाधिक इति। सत्त्वं नाम प्रमाणसंबन्ध इत्यङ्गीकारादिति भावः।

4. "न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥"
इति तु स्वसंकेतकल्पनाविजृम्भितमिति हृदयम्।

शब्द इति व्यवहारोऽनुपपन्न इति; एकार्थतोपाधित एव व्यवहारोपपत्तेः। एकार्थतोपाधित एवैकवाक्यत्वव्यवहारोऽपि।

एवं शब्दाद्वैते प्रमाणशून्यतया निरस्ते [1]अर्थज्ञानकार्यादनेकवर्णानुभवजनितसंस्कारैः संभूय तेष्वेका स्मृतिर्जन्यत इति कल्प्यम्। धर्म्यन्तरकल्पनायां तु गौरवम्। व्युत्क्रमोच्चरितेषु विच्छेदोच्चरितेषु चार्थज्ञानादर्शनात् संस्काराणां न[2] संभूयैकस्मृतिजनकत्वम्। अतः कार्यदर्शनानुगुणमेव क्रमविशेषोच्चरितवर्णानुभवजनितसंस्कारैरेव संभूयैकस्मृतेर्जन्यता कल्प्या, कार्यकल्प्यत्वात् कारणस्य। अतः संस्कारैरेकस्मृत्यारूढानां वर्णानामर्थप्रत्यायकत्वेनान्यथोपपत्तेर्न स्फोटसिद्धिः।

किंच स्फोटाभिव्यक्तावपि वर्णशब्दत्वादिपक्षोक्तदूषणानि समानि। किं वर्णाः प्रत्येकं स्फोटाभिव्यञ्जकाः? उत संभूय? इत्यादिविकल्पदूषणानां वक्तुं शक्यत्वात्।

यत्तु शब्दार्थयोर्न संबन्धः, भिन्नदेशत्वादित्युक्तम्; तन्न; वाच्यवाचकभावाख्यसंबन्धाङ्गीकारात्। स च लोके प्रसिद्धः। न साङ्केतिकः; सङ्केतयितृपुरुषाज्ञानात्। न च स तादात्म्यरूपः; शब्दार्थयोः पृथगुपलम्भात्। न संयोगः; योग्यत्वे सत्यनुपलम्भात्। न च समवायः; भिन्नदेशत्वात्। अतीतानागतविषयत्वाच्च शब्दानां न सयोगादिसंभवः।

अतः परिशेषात् संबन्धान्तरं कल्प्यते। स च संबन्धो नित्यः; अनुत्पाद्यत्वात्। तज्ज्ञानं चानादि। तज्ज्ञानं च वृद्धादिव्यवहारव्युत्परया। अत एवाव्युत्पन्नस्य न शब्दश्रवणमात्रात् संबन्धावगम इत्यलमतिविस्तरेण।

[3]नन्वभिधाख्यभावनाया एव वाक्यार्थत्वं युक्तम; तस्या एव लिङादिवाच्यत्वात्। सर्वशब्दानां ह्यर्थप्रतीत्युन्नेयोऽभिधाभिधेयो व्यापारोऽस्ति। स तु लिङादिव्यापारः पुरुषप्रवृत्तिफलकत्वाद् भावनेति प्रवर्तनेति चोच्यते। न च शब्दस्य गुणत्वान्न व्यापारः; द्रव्यत्वेऽपि विभुत्वान्न स इति—अरुणादिगुणानां द्रव्यपरिच्छेदादिव्यापारदर्शनात्; विभुस्वरूपात्मनां ज्ञानादिव्यापारदर्शनाच्च। परिस्पन्दस्तु शब्दस्य नेष्टः। तद्व्यापारश्च स्वज्ञानम्; एतद्योगिन एव शब्दस्यार्थप्रत्यायकत्वात्। यदागन्तुकधर्मयोगात् करणस्य कार्यकरत्वम्,

---

1. अर्थज्ञानकार्यादिति। अर्थज्ञानरूपकार्यान्यथानुपपत्त्येत्यर्थः।

2. नेति। न केवलवर्णसमुदायस्मरणमर्थज्ञानहेतुः; किंतु विलक्षणानुपूर्वीविशिष्टवर्णस्मरणमेवेति न दोष इति गमनिकाप्यनुसंधेया।

3. पार्थसारथिमिश्रदर्शितं भाट्टमतं खण्डयितुमनुवदति—नन्वित्यादिना।

स धर्मस्तद्व्यापारतया वाच्यः, यथा पाके काष्ठानां ज्वाला । अतो नाव्यापारता युक्ता ।

ननु न ज्ञानस्य[1] शब्दाभिधानात्मकव्यापारत्वसंभवः, ज्ञानकर्मभूतस्यैव शब्दस्याभिधानवृत्तिहेतुत्वस्यैवाङ्गीकार्यत्वेन [2]कर्मत्वकर्तृत्वविरोधादिति—तन्न ; परश्वादीनामेकक्रियायामेव कर्मत्वकरणत्वदर्शनात् । परशुरुद्यमननिपातनयोः कर्मीभूतः । तयोरेव द्वैधीभावफलावच्छेदात् छिदिधातुवाच्ययोः करणं च । एवं ज्ञानस्य शब्दविषयस्याप्यर्थप्रतीतिफलावच्छेदादभिधापदवाच्यस्यार्थ एव कर्म । शब्दस्तु [3]फलान्तरार्थप्रवृत्तव्यापारव्याप्यतया तस्यामवस्थायां करणम्—शब्देनार्थमभिदधातीति । स्वातन्त्र्यविवक्षायां तु कर्ता—शब्दोऽर्थमभिदधातीति ।

एतन्न्यायादेवार्थकर्मकस्याप्यभिधाव्यापारस्य पुरुषप्रवृत्तिभवन[4]फलावच्छेदाद् भावनापदवाच्यस्य पुरुष[5]प्रवृत्तिफलावच्छेदात् प्रवर्तनाभिधानस्य प्रवर्तकत्वं तत्कर्मत्व च युक्तम् । एवमेक एव व्यापारः फलभेदान्निरूप्यमाणः तत्तत्कर्मभेदभाग्भवति । यदा तु फलानपेक्षस्वरूपेण निरूप्यते, अकर्मकोऽपि तदा भवति; यथा—चलतीति ।

नन्वभिधाव्यापारस्य न पुरुषप्रवर्तकत्वं लिङभिधेयत्वं च; अभिधामात्रावगमादप्रवृत्तेः । इष्टसाधनताधीना हि प्रवृत्तिः । [6]न चैषा प्रतीतिलक्षणफलोन्नेया शब्दान्तराभिधावत् अभिधेयेति

अस्य चाद्यस्येत्थं केषाचित् परिहारप्रकारः—लिङादीनां श्रवणानन्तरं प्रवर्तनाप्रतीतेर्नातत्परत्वचोद्यम्; कुर्वीतेत्यादिश्राविणां लौकिकानां 'मामयं

1. **ज्ञानस्येति** । शब्दं जानामीत्याकारकस्य शब्दकर्मकस्य ज्ञानस्य ।

2. **कर्मत्वेति** । इदं करणत्वस्याप्युपलक्षणम् । अभिधानं हि शब्दोऽर्थमभिदधातीति प्रयोगानुरोधाच्छब्दकर्तृकं वा स्यात्, शब्देनार्थमभिधत्त इति शब्दकरणकं वा । व्यक्तमिदं न्यायरत्नमालायां विधिनिर्णये । तत्रत्यार्थानुवादित्वादस्य ग्रन्थस्य, तथैव करणत्वस्य वक्ष्यमाणत्वाच्च तद्ग्रहणं युक्तम् ।

3. **फलान्तरम्** । अर्थप्रतीतिः ।

4. **भवनफलेति** । पुरुषप्रवृत्तिं भावयतीति प्रयोगमनुरुध्येदम् ।

5. **प्रवृत्तिफलेति** । पुरुषं प्रवर्तयतीति प्रयोग इह भाव्यः ।

6. **न चैषेति** । अभिधा हि नाम पदशक्तिः । सा घटादिपदे घाटादिरूपार्थप्रतीतिबलादुन्नीयते ; न घटादिपदस्य तद्गतशक्तिरर्थो भवतीति ।

प्रवर्तयति' इति व्यवहाराच्च । कुर्वित्यादिशब्दानन्तरप्रवर्तनाप्रत्ययस्य च न कारणान्तरम् ।

न च कार्यधियस्तत्कारणत्वम् ; 'गामानय' इति वैरिणोक्ते लिङादि-श्रवणादपि कार्यबुद्ध्यनुदयात् ; प्रवर्तनाबुद्ध्युदयाच्च ।

किंच शाब्दिकानां प्रवर्तनाद्यर्थेषु लिङादिस्मरणात्[1] तदर्थता । न च वक्तॄणां ज्यायसां कनीयःप्रवृत्त्यसपेक्षया शब्दप्रयोगात् कार्यस्यैव प्रैषादिव्यपदेशभाक्त्वम् ; लोके तथात्वाव्युत्पत्तेः । लोके प्रयोजकव्यापार-विशेषे हि प्रैषादिव्युत्पत्तिः । [2]नीचादिवक्तृके कुर्वित्यादौ 'स्वामी मामकार्ये प्रेषयति' इति प्रतीतिश्च दृश्यते । तदुक्तम्—

"शब्दानन्तरसंवित्तेरन्यस्मात्तदलाभतः ।
स्मरणाच्च लिङादीनामभिधेया प्रवर्तना ॥"

इति ।

तर्हि लिङादीनां प्रवर्तनाविषया व्युत्पत्तिः कथमिति चेत् ; उच्यते—व्युत्पत्तिनिरूप्यानन्यथासिद्धप्रत्ययादेव व्युत्पत्तेरपि सिद्धत्वेन तत्प्रकारनिर्णयानु-पयोगात् । एवं हि शब्देष्वपि बाल्यकृतव्युत्पत्तिप्रकारस्य प्रयोगकाले प्रायेण व्यव-हर्तॄणां विस्मृतिः । तत्प्रकारनिर्णयस्तु परीक्षकव्यापारः । स तु नार्थावगत्युपयोगी । यदि तत्प्रकारोऽपि निर्णेयः, तर्ह्युच्यते—यस्य शब्दस्य यस्मिन्नर्थे बहुशः प्रयोगो लौकिकानाम्, तस्य शब्दस्य श्रवणेऽर्थस्मृतिर्जायते । एवं स्मृताश्चार्थाः[3]........

........किं तस्याः प्रवृत्तिभावनात्वमिति । तन्न; एकस्या एव क्रियाया [4]नानाभाव्यावच्छेदान्नानाभावनाव्यपदेश्यत्वस्योक्तत्वात् ।

1. स्मरणादिति । "विधिनिमन्त्रणामन्त्रण-" इत्यादिसूत्र इति भावः । तत्र 'विधिर्नाम प्रेरणम् ; भृत्यादेर्निकृष्टस्य प्रवर्तनम्' इति च तद्व्याख्यातारः ।

2. नीचेत्यादि । अकार्येऽप्यर्थे नीचानां स्वामिनां लिङादिप्रयोगो दृश्यते । यथा—'यद्यप्येतत् ते निषिद्धत्वात् अकार्यमेव, अथापि मत्कृते कुरुष्व' इति न्यायरत्नमालावचनमत्र भाव्यम् ।

3. अत्र ग्रन्थपातो मातृकाकोशयोः ।

4. नानाभाव्येत्यादि । भाव्यं फलम् । एक एव व्यापारः 'शब्दं जानाति, शब्दोऽर्थमभिदधाति, शब्दः पुरुषप्रवृत्तिं भावयति, शब्दः पुरुषं प्रवर्तयति' इति विभिन्नक्रियेव व्यवह्रियते केवलं फलरूपमुखभेदादिति प्रागुक्तमित्यर्थः ।

इष्टसाधनत्वस्यैव लिङाद्यवाच्यता च—'यागानुरक्तो व्यापार इष्टसाधनम्' 'ज्योतिष्टोमेन यजेत' इत्यनयोः शब्दयोरेकार्थप्रतीत्यजनकत्वात्; 'सन्ध्यामुपासीत, अभ्युदयो भविता' इत्यादाविष्टसाधनत्ववाचकलिङादिशब्दयोरेकवाक्ये सहप्रयोगात्; पर्यायशब्दानां च सहाप्रयोगात्। शब्दार्थनिश्चयस्य लोकव्युत्पत्त्यधीनत्वाल्लिङादीनां नेष्टसाधनतावाचिता। अतो भावनाभिधायित्वमेव।

ननु कार्यवाचित्वमेव लिङादीनाम्; कार्यधीतः प्रवृत्तेरिति—तन्न; कार्यत्वस्यानिरूप्यत्वात्। न च कृत्युद्देश्यत्वं कार्यत्वम्; [1]सर्ववस्तूनां कृत्युद्देश्यत्वस्याविशिष्टत्वेन कार्यत्वापत्तेः।

ननु कृत्यर्हता कार्यतेति—तन्न; अस्य पक्षस्येष्टसाधनतानतिरेकात्। तथा हि—दुःखरूपक्रियादेरिष्टत्वाभावादिष्टसाधनत्वेनैव कृत्यर्हतया प्रवृत्तिहेतुत्वम्। तदुक्तम्—

"कर्तुरिष्टाभ्युपाये हि कर्तव्यमिति लोकधीः"।
"पुंसां नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्तकः"।

इति। अतो नेष्टसाधनतातिरेकित्वं कार्यत्वस्येति नायमतिरिक्तः पक्षः।

नन्विष्टसाधनत्वरूपेण न शब्दवाच्यता। किंतु शब्दैः सुखदुःखपरिहारसाधनसाधारणरूपं कृत्यर्हतारूपेणाभिधीयते। तदभिधाने च क्रियायाः सुखत्वाद्यभावात् पारिशेष्यात् तदुपायत्वनिश्चय इत्येतदेवाचार्य[2]मतमिति। तन्न। [3]भावनेत्यादिग्रन्थाननुगुणत्वात्। 'सन्ध्यामुपास्स्व, तेन तत् कार्यम्' इति कार्यविधिशब्दयोगाच्च[4]। अतः कृत्यर्हताविधी भिन्नार्थौ।

---

1. सर्ववस्तूनामिति। यो हि मोहात् प्रथमं सर्पायाङ्गुलिदानमुद्दिश्य प्रवर्तते; पश्चादनर्थत्वावगमे सति 'अनर्थमेवोद्दिश्य मोहात् प्रवृत्तोऽस्मि' इत्यवगच्छति, तत्रापि तस्याङ्गुलिदाने कृत्युद्देश्यत्वस्याक्षतत्वात् कार्यत्वमबाध्यम्। न च तज्ज्ञानमात्रेण तदा तत्र प्रवृत्तिरस्तीत्युक्तं न्यायरत्नमालायाम्। उक्तं च तत्रैवान्यत्र, 'कार्यमिति यदि कृतिं प्रति उद्देश्यमभिधीयते, ततस्तादृशी कार्यता सर्ववस्तूनामविशिष्टेति न तदवगतिः प्रवृत्तिहेतुः' इति।

2. आचार्येति। कुमारिलभट्ट इहाचार्यः।

3. भावनेत्यादिग्रन्थेति। 'भावनावचनस्तावत् तां स्मारयति लोकवत्' इत्यादिग्रन्थेत्यर्थः।

4. योगादिति। सहप्रयोगादित्यर्थः।

विधिश्चाभिधा भावनेत्युक्तम् । इष्टसाधनत्वस्य प्रवर्तकत्वेऽपि न शब्दवाच्यतेत्युक्तम् । अतो व्युत्पित्सुः प्रयोज्यवृद्धप्रवृत्त्युपलब्ध्या, तद्धेतुत्वेनेष्टसाधनत्वावगतिं शाब्दीमवसाय, पूर्वोक्तेन न्यायेन शब्दस्य साक्षात् तद्धेतुत्वासंभवात् अनभिहितेन फलसाधनत्वकल्पनाया अशक्यत्वात् शक्त्या तदभिधायिना लिङा निश्चिनोति । अतः सर्वव्यापारस्यार्थप्रतीत्यैव कल्पितस्य प्रवर्तनारूपेणाभिधानं लिङादीनां कल्प्यते । प्रवृत्तिफलत्वं च प्रवर्तनारूपम् । तदेवंरूपाम् 'अर्थप्रतीत्या कल्प्या' इत्यनन्यलभ्यत्वादभिधानान्तरविलक्षणशक्तिं लिङः कल्पयति । एवं विध्यवरुद्धा च भावना पुरुषार्थफलतया निश्चीयते; अपुरुषार्थफलव्यापारस्य प्रवर्तनात्मकविध्यन्वयासंभवात् । न हि प्रेक्षापूर्वकारिणां निष्फले प्रवृत्तिः । अतो लिङादीनामभिधाव्यापारस्यैव प्रवर्तनारूपेणाभिधेयत्वात् तद्बलादेव फलसाधनताबोधकत्वम् । स्वर्गकामादिशब्दाश्च न नियोज्यसमर्पकाः ।

यद्यप्यस्मिन्[1] पक्षे विधेयक्रियाविषयं कर्तृत्वम्, विधिविषयं नियोज्यत्वमिति भेदः; तथापि न तत्परता कामशब्दस्य; अप्राप्तविषयत्वात् शास्त्राणाम्; अस्मिन् मतेऽपि हि कश्चिन्नियोज्योऽस्ति । स तु विध्यन्वयव्यापारशेषी, अनुष्ठानसमर्थश्च; अस्वार्थव्यापारस्याशक्तस्याप्रेर्यत्वात् । स एव च शेषी, यदभिलषितसाधनो व्यापार इत्येवं कामशब्दव्यतिरेकेणार्थेऽवगते फलविशेषानवगतौ च फलविशेषपरतैव कामशब्दानाम् । तदेवं प्रवर्तनारूपविध्यभिधायी लिङादिः । अर्थाद्विधेयस्य कर्तव्यता फलसाधनता च बोध्यत इत्यभिप्रायाः "कर्तव्यतावचनः प्रत्ययः" "श्रेयःसाधनता ह्येषाम्" इत्यादयः ।

न च शब्दस्य स्वव्यापाराभिधायकत्वे स्वरूपाभिधानप्रसङ्गः, [2]स्ववाच्यविशेषणानभिधाने तद्विशेषणविशिष्टस्य व्यापारस्यानभिधेयत्वादिति वाच्यम्; प्रत्यक्षावगतशब्दस्वरूपविशिष्टाभिधाव्यापाराभिधानात् । अतो लिङादिव्यापारात्मकभावनाया एव वाक्यार्थत्वेन लिङादिवाच्यता; न त्वपूर्वो विध्यर्थ इति ।

---

1. **अस्मिन्** इति । कार्यवाक्यार्थवादिप्राभाकरपक्षे कर्तृत्वनियोज्यत्वयोरभेदापादनं न्यायरत्नमालाकृदिष्टम् । तद्वैलक्षण्यमिह तेनोक्तम् ।

2. **स्ववाच्यविशेषणे**ति । स्वात्मकं यत् अभिधारूपवाच्यविशेषणम्, तदित्यर्थः ।

[1]अथवा न्यायविदां त्विष्टसाधनत्वमेव मतम् । न च 'यजेत' इत्यादौ नेष्टसाधनत्वावगतिरिति वाच्यम्; तस्य प्रवर्तनारूपेण शब्दाभिधेयत्वात् । प्रवृत्तिहेतुर्धर्मः प्रवर्तना । स चापौरुषेयवेदे प्रैषाद्यभावात् पारिशेष्यादिष्टाभ्युपायतैवेति निश्चीयते । तेनाभिधाव्यापारप्रवर्तनावत् प्रवर्तनारूपेणेष्टसाधनतां लिङादिरभिधत्ते । यथाह—

"पुंसां नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्तकः ।
प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्तनाम् ॥"

इति ।

अतो योऽवगम्यमानतया प्रवृत्तिहेतुः, स शब्दाभिधेय इति प्रवर्तनासामान्यं शब्दार्थः । "अभिधाभावनाम्" इत्यस्य च अभिधीयते इत्यभिधा-प्रवर्तना । सैव च पुरुषप्रवृत्तिं भावयतीति भावनेति तामाहुरित्यर्थः । अथवा शब्दकर्तृकं प्रवर्तनारूपेष्टसाधनत्वाभिधानमेव शब्दभावना ।

तस्याः स्वर्गस्थानीया पुरुषप्रवृत्तिर्भाव्या । इष्टसाधनत्वरूपविधिज्ञानं तु यागादिवत् करणम् , तस्य परार्थप्रवृत्तशब्दव्यापारजन्यत्वात्[2] । अर्थवादजन्य-प्राशस्त्यज्ञानं प्रयाजादिवदितिकर्तव्यतेति कृतं विस्तरेण ।

[3]एतदप्ययुक्तम् ; लिङादिज्ञानस्य तद्व्यापारत्वे प्रमाणाभावात् । न च तस्य ज्ञानयोगिनोऽर्थप्रत्यायकत्वदर्शनमेव प्रमाणमिति वाच्यम्; विकल्पा-सहत्वात् । किं तज्ज्ञानं नाम तच्छब्दमात्रविषयम्? व्युत्पन्नतच्छब्दविषयं वा? नाद्यः, अव्युत्पन्नतद्विषयज्ञानस्य पुरुषप्रवृत्तिफलाभावात् भावनात्वासिद्धेः । नापि द्वितीयः, तज्ज्ञानेऽपि कार्यत्वाबोधे तस्य पुरुषप्रवृत्तिफलानवच्छेदात् । न च लिङादिग्रहणानन्तरं प्रवर्तनाप्रतीतेस्तत्परत्वमिति वाच्यम्; विकल्पा-सहत्वात् । किं प्रवर्तना नाम लिङादिव्यापाररूपं तज्ज्ञानम्? प्रवृत्तिर्वा? नाद्यः, तज्ज्ञानस्य लिङादिव्यापारत्वप्रवर्तनात्वयोरव्युत्पत्तेः । नापि द्वितीयः, अनङ्गीकारात् । अथ शब्दप्रवर्तकत्वं प्रवर्तनात्वमिति चेत्, तन्न; शब्दस्य गुणत्वेन प्रवर्तकत्वरूपव्यापारासंभवात् । शब्दो ह्याकाशगुणः । अगुणत्वे

---

1. मण्डनमिश्रदर्शितं भाट्टमतमाह—अथवेति ।

2. जन्यत्वादिति । करणत्वं हि भावनाभाव्यनिष्पादकत्वम् । भाव्यार्थ-भावनाजन्यत्वमित्यपि तदेवोच्यते । यागस्य स्वर्गार्थप्रवृत्तिरूपभावनाजन्यत्वात् करण-त्ववत् प्रवृत्तिरूपभाव्यार्थशब्दव्यापारात्मकभावनाजन्यत्वाद् विधिज्ञानं करणमिति भावः ।

3. एवं भाट्टमतमनूद्य खण्डयितुमारभते—एतदपीति ।

श्रोत्रात्मकाकाशस्य शब्दप्राप्ति[1]रनुपपन्ना । संयोगसमवाययोरन्यतरा हि प्राप्तिः । [2]संयोगस्यान्यतरकर्मजत्वोभयकर्मजत्वसंयोगजत्वानामन्यतमस्याङ्गीकार्यत्वात् शब्दस्य नभसा सह तदसंभवात् पारिशेष्यात् समवाय एवाङ्गीकार्यः । एवं च न तस्य व्यापारः, द्रव्याश्रितत्वाद्व्यापारस्य । शब्दोऽभिदधातीति प्रयोगस्तु शष्कुला छिनत्तीतिवदौपचारिकः । कुर्वित्यादौ लौकिकप्रवर्तकव्यवहारस्तु कार्यबुद्ध्युत्पादकतयैव ।

न च वैरिवाक्येषु कार्यपरलिङादिश्रवणेऽपि न कार्यताबोध इति वाच्यम्; व्युत्पत्तिसिद्धकार्यपरत्वस्याव्याघातात् । तद्वाक्येषु तु कार्ये स्वसंबन्धितानवबोध एव । तद्वाक्येषु न प्रवर्तनापि, पुरुषप्रवृत्त्यनुदयात् । पुरुषप्रवृत्तिफलिका हि प्रवर्तनोक्ता । न च प्रवर्तनाभेदेषु लिङादीनां शब्दस्मृतिः, तत्र तदप्रतीतेः । विध्यादौ हि सा । विधिश्च पुरुषप्रवर्तकं कार्यत्वमेव । निमन्त्रणादयोऽपि तद्भेदा एव । तदुक्तम्—

"कार्यमेव च वक्तॄणां ज्यायःसमकनीयसाम् ।
प्रवर्त्यापेक्षया भेदात् प्रैषादिव्यपदेशभाक् ॥"

इति ।

अतः प्रैषादिरपि कार्यभेदः, कार्यस्यैव सर्वत्र प्रवृत्तिकारणत्वात् । तदुक्तम्—

"कार्यमेव हि सर्वत्र प्रवृत्तावेककारणम् ।
प्रवृत्त्यव्यभिचारित्वाल्लिङाद्यर्थोऽवसीयते ॥"

इति ।

यत्तु प्रयोजकव्यापारविशेषे प्रैषादिव्युत्पत्तिरिति—तन्न; प्रयोजकार्थस्य विकल्पासहत्वात् । स किं पुरुषः? लिङादिर्वेति । नाद्यः, सर्ववक्तॄणां लिङाद्युच्चारणप्रवृत्त्यपक्षयैव न स्वत इति कार्यपरतैव; लिङाद्युच्चारणेनैव प्रवृत्तेः । न द्वितीयः, तस्य पुरुषप्रवृत्त्यपेक्षयैव, न स्वत इति । अतः कार्यपरतैव ।

यत्तूक्तं व्युत्पत्तिर्न निरूप्येति, तन्न; वाक्यार्थनिश्चयार्थं परीक्षकैर्निरूप्यत्वात् । व्यवहारस्तु गौण्यादिभिरपीति न ततो वाक्यार्थनिश्चयः ।

---

1. प्राप्तिरिति । संनिकर्ष इत्यर्थः ।

2. संयोगस्येति । तथा च कणादसूत्रम्—"अन्यतरकर्मज उभयकर्मजः संयोगजश्च संयोगः" इति ।

यत्तु बहुशः प्रयोगादर्थपरत्वव्युत्पत्तिरिति—तन्न; व्युत्पत्तेर्व्युत्पत्तिपूर्वकत्वान्न प्राथम्यमिति न तस्य प्राधान्यम् । सहप्रयोगो नाम अर्थस्याङ्गुल्या निर्देशपूर्वकं तद्वाचकशब्दप्रयोगः । तस्य पदार्थस्य प्रत्यक्षत्वेऽपि अङ्गुल्या निर्देशपूर्वकं तत्प्रयोगः किंपर इति न निश्चयः; तत्र कारणाभावात् । आनयेत्यादिशब्दानन्तरमानयनादिप्रवृत्तौ तु नान्यपरताशङ्का ।

न च प्रयोजकव्यापारेण सह लिङादेर्दर्शनाद् व्युत्पत्तिरिति; तद्व्यापारस्य प्रवृत्त्यर्थत्वावधारणे कार्यपरत्वेनैव तत्प्रयोगव्युत्पत्तेः । न च मात्रादिप्रवृत्त्यभिसंधिपूर्वकस्वकरोद्यमनाद्यनन्तरं स्वापेक्षितार्थमात्रादिप्रवृत्तिदर्शनात् प्रयोजकव्यापारे प्रयोज्यप्रवृत्त्यभिसंधिधीरिति; बालस्य स्वकरोद्यमनादेर्मातृप्रवृत्त्यभिसंधिपूर्वकत्वेऽपि प्रवृत्त्यर्थत्वात्, प्रवृत्तेश्च कार्यधीमूलकत्वस्य स्वस्मिन् दृष्टत्वात्, तद्बीजननार्थत्वान्मातृप्रवृत्तिरपि पुत्रपोषणादिकार्यधीत एव; न तु प्रवृत्तिफललिङादिव्यापारज्ञानात् ।

यत्तु सर्वाख्यातानां भावनापरत्वाभिधानम्; तदपि न; अव्युत्पत्तेः ।

ननु सर्वाख्यातानां करोतिसामानाधिकरण्याद् भावनापरत्वम् । प्रयोजकव्यापारो हि भावना । सैव कृतिः; भाव्यस्य कृतिकर्मत्वेन क्रियमाणत्वात् । 'किं करोति?' 'पचति' इति हि प्रश्नोत्तरे । एवं भूतभविष्यद्विषयप्रश्नादिर्द्रष्टव्य इति करोत्यर्थः सर्वाख्याताभिधेय इति—तन्न; [1]अनवगतधातुवाच्यव्यापारविशेषेण तद्विशेषस्यैव पृच्छ्यमानत्वात् । अतो न सामान्यविषयः प्रश्नः । ततश्चाख्यातानां न धात्वर्थातिरिक्तकरोत्यर्थोऽर्थः । धात्वर्थव्यापारविशेषविषयत्वेनापि प्रश्नाद्युपपत्तौ न तदतिरिक्तकरोत्यर्थताकल्पना ।

किंच 'रथः किं करोति?' 'गच्छति' इति प्रयत्नरहितेष्वपि प्रश्नादिदर्शनात् न धात्वर्थव्यापारातिरिक्तार्थविशेषविषयत्वम् । धात्वर्थव्यापारविषयत्वे तु सर्वत्रोपपत्तिः । न च रथादावपि संयोगविभागौ धात्वर्थः, परिस्पन्दस्तु प्रत्ययार्थ इति धात्वर्थातिरिक्तार्थतेति—परिस्पन्दस्यैव गमिवाच्यत्वात् । श्येनसंयुक्ते विभक्ते वा स्थाणावप्रयोगात्[2] । ततो न केवलसंयोगो विभागो वा तदर्थः । न चोभययुक्ते प्रयोगः; श्येनोत्पातनिपातवत्स्थाणौ प्रयोगापातात् ।

---

1. अनवगतेत्यादि बहुव्रीहिवृत्तम् ।
2. अप्रयोगादिति । स्थाणुर्गच्छतीत्यप्रयोगादित्यर्थः ।

न चैकक्रियाक्षणजन्यसंयोगविभागयोर्गमिवाच्यता, क्रियाया उपाधिकोट्यनुप्रवेशे गौरवापत्तेस्तस्या एव शब्दवाच्यत्वस्यैव युक्तत्वात् । कर्त्रादिसंख्यामात्रवाचितया आख्यातविभक्तिप्रयोगोपपत्तौ नाधिकवाच्यार्थताकल्पना । 'पाकं करोति देवदत्तः' इत्यादिषु तावत् पचेः पाकवाचित्वात् करोतेस्तदनुगुणप्रयत्नादिवाचित्वादाख्यातस्य कर्तृसंख्यादिमात्रवाचितेति सर्वत्रापि तत्परता । न च 'ओदनं पचति' इत्यादौ पाकातिरिक्तप्रयत्नवाचिता आख्यातस्य दृश्यत इति । तत्र व्युत्पत्तिसिद्धत्वात् प्रकृत्यर्थापक्षेपणादिप्रयत्नप्रतीत्यापत्तौ न भावनावाचकता च ।

नन्वपूर्ववाचिनामपि तिङां प्रयत्नवाचिता [1]आख्यातत्वनेष्टेति न तन्निषेधोपपत्तिरिति—तन्न; लिङादीनामेव कार्याभिधानार्थं कृत्यभिधायिता । कृतिसाध्यतयैव कार्याभिधायिता । कृत्यभिधाने च न तदभिधायित्वम् । अतो न सर्वाख्यातानां कृत्यभिधायितेति ।

यत्तु सर्ववस्तूनां कृत्युद्देश्यत्वाविशेषात् न कृत्युद्देश्यता कार्यतेति—तन्न; स्वतःसिद्धवस्तूनां कृत्युद्देश्यत्वाभावात् ।

यत्तु अकार्येऽपि कार्यपरलिङादिप्रयोगान्न तत्परता लिङादीनामिति—तन्न; अनुपपत्त्या तत्र लाक्षणिकत्वात् । यत्त्विष्टसाधनत्वधियः प्रवर्तकत्वम्; भावनाया वाक्यार्थत्वमिति—तद्विरुद्धम् । प्रवर्तकस्यैव वाक्यार्थत्वम् । न चेष्टसाधनं वाक्यार्थ इत्युक्तम् ।

यत्तु स्वर्गकामपदानां न नियोज्यविशेषसमर्पकता; नियोज्यत्वादेरर्थसिद्धत्वात्; अतः फलविशेषपरतेति—तन्न; स्वसंबन्धिकार्यविशेषाबोधे पुरुषस्यानियोज्यत्वात्; कार्यविशेषस्य च फलादिविशेषाधीनत्वाद् । विषयनियोज्यविशेषायत्तैव हि कार्यताधीः ।

किंच शब्दगतव्यापारस्य शब्दानभिधानादनभिधेयत्वम् । तदभिधाने च स्वाभिधानप्रसङ्गः । न च प्रत्यक्षावगम्यशब्दविशिष्टाभिधानात् न दोष इति; प्रत्यक्षत्वेऽपि स्वाभिधेयत्वानपायात् ।

1. आख्यातत्वेनेति । तिङ्विभक्तेः लिङ्त्वादिरूपेणापूर्वार्थकत्वम् आख्यातत्वरूपसाधारणरूपेण प्रयत्नार्थकत्वमिति भावः ।

नन्विष्टसाधनत्वस्यैव लिङादिवाच्यताव्यापारकत्वाद्विधित्वमिति—तन्न; अतीतेष्टसाधनत्वधियोऽपि प्रवर्तकत्वापातादित्युक्तत्वात् ।

न च शब्दकर्तृकप्रवर्तनारूपेष्टसाधनत्वाभिधानमेव शब्दभावनेत्यनादिव्युत्पत्तिरिति; इष्टसाधनत्वधियः प्रवर्तनात्वापातात् पूर्वोक्तदोषानिर्मुक्तेः । इष्टसाधनस्य कार्यताधियः प्रवर्तकत्वेन प्रवर्तनायां त्वस्मत्पक्षे पातः । शब्दस्याचेतनत्वात् कर्तृत्वं चानुपपन्नम् । शब्दस्य पुरुषप्रवृत्तिकरणत्वे तु न ज्ञानकरणत्वम् । शब्दकृताभिधानं च न शब्दाभिधेयम्; अन्यस्यैवाभिधेयत्वादिति कार्यस्यैव प्रवर्तकत्वात् तदेव वाक्यार्थः ।

अतो न सिद्धवस्तुविषयत्वेन वेदान्तवाक्यविचारारम्भ इति ।

[1]अत्रोच्यते—लौकिकवैदिकवाक्यानामविशेषेण परब्रह्मैवार्थः, तस्यैव सर्वपदवाच्यत्वात् । पदान्येव हि वाक्यम् । सर्वपदवाच्यता च ब्रह्मव्यतिरिक्तकृत्स्नचिदचिद्वस्तूनां तच्छरीरत्वेन तत्प्रकारत्वात्; प्रकारवाचकशब्दानां च प्रकारविशिष्टार्थपरत्वात् । गवादिशब्दे[2].......................... दिशेषत्वधीर्वाच्या । "निरूढकार्यशेषित्वे ह्यनिरूढस्य शेषता" इति स्वोक्तेः । निरूढौ च न प्रमाणम् । जात्यादिविशिष्टव्यक्तेर्वाच्यत्वे च प्रतीत्यङ्गत्वनिर्वाहयोरैकरूप्यम् । अन्यथा व्यक्तेराकृतिद्वारा प्रतीतिः । आकृतेर्व्यक्तिद्वाराङ्गत्वमिति वैरूप्यम् । संस्थानस्यैव जातित्वेन तस्य च वस्तुधर्मत्वाद्वस्तुनोऽवच्छेदकतयैवाङ्गत्वम्, न स्वरूपतः । तथापि अनुष्ठानोपक्रमवलायां विशिष्टाकार एवोपक्रमात् कथंचिदङ्गत्वनिर्वाहो विशिष्टस्य । आकृतिमात्रार्थवादिनोऽप्येवमेव; नान्या गतिः ।

न च विशिष्टव्यक्त्यानन्त्यात् गत्युपपत्तिरिति; पक्षान्तरेऽप्यनुपपत्तेः समत्वात्; तस्मिन्नपि पक्षे व्यक्त्यानन्त्यात् । यदि जात्यादिमत्तया व्युत्पत्तिसौकर्यं तत्पक्षे, तर्ह्यस्मत्पक्षेऽपि जात्यादिविशिष्टत्वाकारेण व्युत्पत्तिसौकर्यमिति समः समाधिः ।

यत्तु प्रत्यभिज्ञायामेकधीविषयत्वेऽपि शक्तिव्यवस्थादर्शनादेकधीविषयत्वं न विशिष्टवाच्यतायाः प्रयोजकमित्युक्तम्—तन्न; 'सोऽयम्' इत्यंशद्वयप्रतीतेर्व्य-

1. एवमद्वैतशाब्दककौमारिलमतखण्डनेन प्राभाकरेण स्वसंमते कार्यवाक्यार्थे स्थापिते सिद्धान्ती तस्यापि खण्डनेन ब्रह्मवाक्यार्थपक्षं स्थापयितुमारभते—**अत्रोच्यत इति ।**

2. अत्र मातृकाकोशयोर्ग्रन्थपातः ।

वस्थोपपत्तिः प्रत्यभिज्ञायाम् । गवादिशब्देभ्यस्तु न तथेति वैषम्यादाकृत्यादि-विशिष्टमेव शब्दार्थः ।

किंच "पशुना यजेत" इत्यादौ त्वैकत्वपुंस्त्वकरणत्वधर्मवि-शिष्टव्यक्तेर्यागसंबन्धादेकेनैव पदेन गुणविशिष्टव्यक्तिधीः; न तु वाक्यात् कारकतया ।

यत्तु करणीभूतपशुसंबन्धस्य द्वारत्वेनैव काल्पितत्वादाभिधानिकपशुसंबन्ध-मुल्लङ्घ्य ग्राहकान्यथानुपपत्त्या ग्राहकीयपशुस्थता एकत्वस्य कल्प्यत इत्युक्तम्— तन्न; एकत्वादेः पृथग्ग्राहकाग्रहणात् । किंतु तद्विशिष्टपशोरेव शब्दाभिहितस्य ग्राहकग्रहणम् । अतो न गुरूक्तविधया पश्वेकत्वनयः ।

नापि भाट्टविधया । तथा हि—समानप्रत्ययोपात्तेन प्रातिपदिकार्थादपि संनिहिताकारेण प्रधानभूतेन च कारकेणावरुद्धमेकत्वं प्रातिपदिकार्थमनादृत्य क्रियाङ्गमवगम्यमानं वाक्यसमर्पितेन क्रियाविशेषसंबन्धेन पश्चादरुणान्यायेनैव पशुविशेषत्वमर्थादिति हि तन्नयप्रक्रिया । कारकत्वैकत्वयोः पश्वर्थगुणत्वे-नान्योन्यसंबद्धता हि स्पष्टा । तयोः[1] परस्परसंबन्धश्च शब्दादेव प्रतीत इति नैकत्वस्यार्थात् पश्चिमत्वम्

कथं तर्हि स नय इति चेत्; उच्यते— एकत्वस्य पशुगुणत्वेन श्रवणाद् यज्ञानन्वयान्न यज्ञाङ्गत्वमिति पूर्वपक्षे, ससंख्यस्यैव पशोः सविभक्तिकपदाभिधेयस्य वाक्याद् यज्ञान्वयप्रतीतेर्यज्ञाङ्गत्वमिति राद्धान्तः । एवं तस्य पशुगुणत्वस्याप्यविरोधः । न्यायफलं तु द्वित्वादावेकसंख्याव्यतिरेकेण पशूपादानसिद्धेः पूर्वपक्षे संख्यानादरेणापि यागसिद्धिः; राद्धान्ते ससंख्यद्रव्यादेव ।

[2]अरुणान्यायेन तु प्रकृत्यभिहितगुणस्याथद्वयविधानशङ्कया क्रिया-नन्वयशङ्काया निरासः । पश्वेकत्वनये तु विभक्त्या पशुगुणत्वेनाभिहितत्व-

1. तयोः । प्रातिपदिकार्थपशुविभक्त्यर्थैकत्वयोः ।

2. एवं गुरुभाट्टमतयोः पश्वेकत्वनयनिरूपणसरणिं निरस्य स्वमतेन तां प्रदर्श्य, विशिष्टार्थाभिधानपरत्वस्थापनाविशेषात् अधिकरणत्रयं पिष्टपेषकमिति शङ्कापरिहाराय अर्थविवेकं दर्शयति—अरुणेत्यादिना ।

शङ्कया गुणस्य क्रियानन्वयशङ्काया निरासः । आकृत्यधिकरणे तु सर्वशब्दानामाकृत्याश्रयद्रव्याभिधानसमर्थनम् । तन्नये[1] आकृतेः शाब्दप्रतीतिष्वनुयायित्वेऽपि तस्या वस्तुसंस्थानतया द्रव्यत्वाभावात् प्रोक्षणाद्यनन्वयात् शब्दावाच्यत्वप्रतीतेः, व्यक्तेश्च प्रोक्षणाद्यन्वयेऽप्यानन्त्याद् व्युत्पत्त्यनुपपत्तेस्तदवाच्यत्वप्रतीतेः वाच्यार्थसंदेहादप्रामाण्यं वेदस्येति पूर्वपक्षे—व्यक्तीनामानन्त्येऽप्याकृतिविशिष्टत्वाकारेणानन्त्याभावाद्युपपत्तेः विशिष्टस्यैव शब्दवाच्यत्वे च कार्यप्रतीत्यन्वययोरविरोधाद् गवादिशब्दा गोत्वादिविशिष्टार्थवाचका इति राद्धान्त इति । जातिगुणकर्मादिशब्दास्तु निष्कृष्टार्थवाचकाः । एवं च "गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति" इति लौकिकप्रतीतिरप्युपपन्ना ।

एवं विशिष्टस्यैव वाक्यार्थत्वे सर्वचिदचिद्वस्तूनां ब्रह्मविशेषणत्वेन तद्विशिष्टं ब्रह्मैव सर्वशब्दानामर्थः । सर्वशरीरित्वं च "यस्यात्माशरीरम्" इत्यादौ । शरीरं च शरीरिणो विशेषणमिति लोकवेदप्रयोगसिद्धम् । विश्वस्य परमात्मशरीरत्वोपपत्तिश्च शरीरलक्षणप्रकरणे[2] । एवं चिदचिद्विशिष्टब्रह्मण एव सर्वशब्दार्थत्वे "सर्वे वेदा यत्रैकं भवन्ति" "वचसां वाच्यमुत्तमम्" "वेदैश्च सर्वैरहमेव वेद्यः" इत्यादयोऽप्युपपन्नाः । एवं ब्रह्मणः सर्वशब्दवाच्यत्वेऽपि सर्वेषां वेदान्तश्रवणसहकारिविरहान्न तथात्वधीः ।

ननु तत्तद्वस्तुविशिष्टब्रह्मणः पदार्थत्वेऽपि कथं तस्यैव वाक्यार्थत्वम्? विशेषणानामपि पदवाच्यत्वादिति चेत्—तन्न; विशेष्यस्य प्राधान्यात् । क्रियादिवाक्यार्थवादिपक्षेऽप्यस्य चोद्यस्य समत्वाच्च । तत्तत्पदार्थविशिष्टक्रियादिरेव हि वाक्यार्थः । क्रियादेर्विशिष्टता तु वाक्यगम्या । ब्रह्मणो विशिष्टता तु पदवाक्यगम्येति विशेषः ।

ननु ब्रह्मण एव सर्वपदवाच्यत्वे प्राधान्ये च प्रतिप्रातिपदिकं वाक्यपरिसमाप्तिः स्यात्; ततश्च सर्वपदार्थानां प्राधान्यापत्तौ धर्मादिष्वङ्गप्राधान्याविवेके चोदितस्य कस्यचित् पदार्थस्यानुपसंहारेऽपि कर्मावृत्तिप्रसङ्ग

1. तन्नय इति । तस्मिन्नधिकरण इत्यर्थः ।

2. शरीरलक्षणप्रकरण इति । एतद्ग्रन्थप्रथमप्रकरणमेतत् ।

इति चेत्—तन्न;[1] फलतत्साधनत्वाद्याकारेण ब्रह्मण एव सर्वपदवाच्यत्वेऽपि विशेषतः प्राधान्योपपत्तेः, इतरेषामङ्गत्वोपपत्तेः। अग्न्यादिविशेषणनानात्वेन विशिष्टत्वाकारस्य नानात्वात् सर्वपदवाच्यत्वेऽपि पदानामपर्यायता च। सर्ववेदानां ब्रह्मप्राधान्यात् महावाक्याकारेणैकशास्त्र्यं च। [2]तत्तत्साध्यस्वर्गादिभेदात्[3] अभिधानान्तराभ्याससंख्यागुणप्रकरणान्तरनामानुबन्धभेदैरवान्तरशास्त्रभेदश्च।

ननु फलदात्रग्न्याद्याकारेण प्रयाजाद्यपेक्षया प्राधान्येऽपि स्वर्गादिफलं प्रति साधनत्वेनाप्राधान्यमिति न ब्रह्मणो वाक्यार्थत्वमिति—तन्न; स्वर्गादिविशिष्टब्रह्मण एव फलत्वेनाप्राधान्याभावात्।

ननु फलार्थिभिः सर्वैरपि ब्रह्मण एव प्राप्यत्वान्न मुक्तसंसारिवैषम्यमिति—तन्न; ऐहिकस्वर्गादिफलार्थिनां कृत्स्नस्य प्रकारत्वाज्ञानात्, तज्ज्ञानेऽप्युपासनात्मकज्ञानाद्यभावात्, विरोधिनिरासे च तेषां साक्षात्कारे ब्रह्मणो देशविशेषे ब्रह्मण एव प्राप्तेः। विरोधिनिरास एव ह्यस्य साक्षात्कारेण पदविशेषविशिष्टब्रह्म प्राप्यम्। सैव हि मुक्तिः। अन्यदा स्वर्गादितत्तद्वस्तुविशिष्टमेव प्राप्यम्। तत्प्राप्तावप्याचिन्मात्रभोग एव तेषां तात्पर्यम्। अज्ञानात् तावन्मात्रविशिष्टतापि न ज्ञायत इति मुक्तसंसारिवैषम्यम्। केवलचिदुपासने तत्प्राप्तिफले च एतन्न्यायेनैव निर्वाहः। वस्तुतो न कैवल्यस्य मोक्षत्वम्। "भेषजं भगवत्प्राप्तिरेकान्तात्यान्तिकी मता" इत्यादौ भगवत्प्राप्तेरेव

---

1. तन्नेति। अयं भावः—एकैकमपि पदं लोकप्रसिद्धतत्तदर्थविशिष्टब्रह्मपरम्। अतः पदार्थो वाक्यार्थश्च ब्रह्मैव। तर्हि सर्वेषामपि प्रकृतिप्रत्ययादिशब्दानामभेदान्वयपरत्वमेव स्यादिति चेत; स्यान्नाम। भेदान्वयबोधादिनियमकल्पना च पश्चिमविशेषणान्वयविवक्षयास्तु। तत्र तार्किकशाब्दिकमीमांसकाद्यभिमतेषु बोधप्रकारेषु यत् उपपन्नतमम्, तत् पश्चिमबोधरूपमिष्यते। तत्र यन्मुख्यविशेषणमिष्यते, तस्य सर्वस्य वस्तुतो ब्रह्मप्रकारत्वात् ब्रह्ममुख्यविशेष्यकत्वमक्षतम्। यदा तु लोके निष्कर्षविवक्षया प्रयोगः, तदा पदानां लाक्षणिकत्वान्न मुख्यमभिधायकत्वम्। ग्रन्थकारमते वेदस्यैव शब्दविधया प्रामाण्यम्। लौकिकवाक्यं त्वनुवादमात्रम्। वेदे च सर्वथा ब्रह्ममुख्यविशेष्यकबोधस्य न क्षतिः।

2. तत्तदिति। विनियोगपृथक्त्वमिदम् 'एकस्य तूभयत्वे संयोगपृथक्त्वम्" इत्यादिषु दर्शितम्।

3. अभिधानान्तरं शब्दान्तरम्। एतानि च शब्दान्तरादीनि भेदकप्रमाणानि पूर्वमीमांसायां द्वितीयेऽध्याये व्युत्पादितानि।

मुक्तित्वाभिधानात् । अत एव [1]नार्चिरादिगतिस्तन्निष्ठस्य, "स एनान् ब्रह्म गमयति" इति तस्या भगवद्गमयितृत्वश्रवणात् ।

एवं सर्वप्राप्यप्रापकवस्तूनां भगवदात्मकत्वाद् भगवतः "पुरुष एवेदं सर्वम्" इत्यादौ तत्तत्पदार्थसामानाधिकरण्यनिर्देशः, "येनाश्रुतं श्रुतम्" इत्यादौ भगवज्ज्ञानेन कृत्स्नविज्ञानप्रतिज्ञा, "स वा एष महानज आत्मा अन्नादो वसुदानः" "सकलफलप्रदो हि विष्णुः" इत्यादौ सर्वफलप्रदत्वस्य श्रवणम्,

"ये यजन्ति पितॄन् देवान् ब्राह्मणान् सहुताशनान् ।
सर्वभूतान्तरात्मानं विष्णुमेव यजन्ति ते ॥"
'निष्पन्नेन जपत्येनं........जपन्नसौ ।'

इत्यादौ सर्वकर्मसमाराध्यत्वादिनिर्देशाश्चोपपन्नाः ।

अपूर्वादेस्तु फलदातृत्वमचेतनत्वादनुपपन्नम् । अग्न्यादिचेतनानां च परमात्मविशिष्टानामेव फलदातृत्वम्; सर्वेषां तदन्तरात्मकत्वतन्नियाम्यत्व-तच्छेषत्वानाम् "यः पृथिव्यां तिष्ठन्" इत्यादौ श्रवणात् । अतः सर्वान्तरात्मभूतं ब्रह्मैव तत्तद्वस्तुविशिष्टं शब्दार्थः । मनुष्यादिपिण्डवाचकब्राह्मणादिशब्दैः तत्तत्प्रकारविशिष्टात्मा यथाभिधीयते, तद्वत् । तच्च लोकवेदप्रसिद्धम् ।

ननु गवादिशब्दानां पूर्वमेव प्रकारमात्रवाचित्वनिश्चये कथं तद्वि-शिष्टार्थपरत्वनिश्चय इति—तन्न; 'गौर्जातिः' 'शुक्लो गुणः' इत्यादौ गवादि-शब्दानां पूर्वमेव निष्कर्षाज्जात्यादिपरत्वनिश्चयेऽप्यनिष्कृष्टप्रयोगे विशिष्टार्थपरत्वोपपत्तेः । अथ तर्हि सर्वशब्दानां न विशिष्टार्थपरतेति—न; तन्निर्देशस्य निष्कृष्टेतरशब्दविषयत्वात्; आकृतिमात्रवाचकशब्देऽप्यस्य चोद्यस्य समत्वाच्च; व्यक्त्याकाशादिशब्दानामाकृत्यादिवाचित्वानभ्युपगमात् ।

नन्वपर्यवसानवृत्तिपक्ष[1] एव भाष्यकाराभिमतः । यथोक्तं भाष्यादौ "तस्माद् ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य तच्छरीरत्वेनैव वस्तुत्वात्, तस्य

---

1. नार्चिरादीति । केवलकैवल्यकामस्य नार्चिरादिगतिरित्याशयः । गीताभाष्ये कैवल्यार्थिनोऽर्चिरादिगतिवर्णनं पञ्चाग्निविद्यानिष्ठकैवल्यार्थिविषयम् । न स केवलकैवल्यकामः, कैवल्याख्यावान्तरफलपूर्वकपरब्रह्मप्राप्तिरूपमुख्य-मोक्षकामत्वादिति द्रष्टव्यम् ।

प्रतिपादकोऽपि शब्दस्तत्पर्यन्तमेव स्वार्थमभिदधाति" इति । तथा "एतदेव हि गवादिशब्दानां व्यक्तिपर्यन्तत्वे हेतुः । अतो गवादिशब्दवत् देवमनुष्यादिशब्दा अप्यात्मपर्यन्ताः । एवं देवमनुष्यादिपिण्डविशिष्टानां जीवानां परमात्मात्मकतया तत्प्रकारत्वात् जीवात्मवाचिनः शब्दाः परमात्मपर्यन्ताः" इत्यादि । तन्न; उदाहृतभाष्ये अपर्यवसानवृत्त्युक्त्यप्रतीतेः; प्रत्युत भाष्यान्तरेषु विशिष्टार्थाभिधानप्रतीतेश्च । तथा हि—"अतः सर्वशब्दानां लोकव्युत्पत्त्यवगततत्तत्पदार्थविशिष्टब्रह्माभिधायित्वं सिद्धम्" इति । तथा "शब्दस्य तु विशेषेण सविशेष एव वस्तुन्यभिधानसामर्थ्यम् । प्रकृतिप्रत्यययोरर्थभेदेन पदस्यैव विशिष्टार्थप्रतिपादनमवर्जनीयम्" इत्यादि । आनन्दमयाधिकरणे च "नीलादिपदानां नैल्यादिविशिष्ट एवार्थो व्युत्पत्तिसिद्धः पदान्तरार्थसंसृष्टोऽभिधीयते" इत्यादि । "यद्यप्यरुणयेति पदमाकृतेरिव गुणस्य द्रव्यप्रकारतैकस्वभावत्वाद् द्रव्यपर्यन्तमेवाभिदधाति" [1]

..

....[2]न तावदाद्यः, घटादावतिव्याप्तेः । इष्टयज्ञादिसिद्धौ कृत्युत्पत्तिः । न च तदिष्टम्; तस्य कार्यफलत्वाभिमानात् । द्वितीयादिषु गमनादिसाध्यग्रामादावतिव्याप्तिः । स्वर्गादावप्येतत् तुल्यम् । न च कार्यविवृद्धिरेव स्वर्ग इति न तत्तौल्यमिति; विकल्पासहत्वात् । कार्यविवृद्धौ किं तस्य समवायिकारणत्वम्? निमित्तकारणत्वं वा । नाद्यः? स्वर्गस्य देशविशेषत्वे वा सुखविशेषत्वे वा गुणत्वेनाभिमतापूर्वस्य समवायिकारणत्वानुपपत्तेः । नापि द्वितीयः; तत्र कार्यातिरिक्तेऽतिव्याप्तेः । निमित्तकारणानां फलत्वेन विध्यदर्शनाच्च ।

किंच कृत्युद्देश्यपदं व्यर्थम्; कृतिसाध्यपदेनैव चरितार्थत्वात् । कृतिकर्मत्वं हि कृत्युद्देश्यत्वमुक्तम् । कर्मत्वं च साध्यत्वमभिमतम्; कर्तुः क्रियया आप्तुमिष्टमिति कर्मत्वस्य साध्यत्ववचनात् । [3]आप्तुमिति पदं साध्यमात्रोपलक्षणम् । अत एव हि 'घटं करोति' इत्यादौ साध्यमात्रे द्वितीया ।

---

1. यद्यपीत्यादिः अभिदधातीत्यन्तो भाष्यग्रन्थः पूर्ववत् विशिष्टवाचित्वे प्रमाणतयोपन्यस्तः । एतदुपरि बहुग्रन्थपातः ।

2. कार्यवाक्यार्थवादनिराकरणप्रवृत्तेन कार्यत्वं कृतिसाध्यत्वमित्यादिकमिह खण्ड्यते । तदिहापि उपक्रमगन्थभ्रंशः ।

3. आप्तुमिति पददृष्ट्या प्राप्यत्वमेव कर्मत्वमिति न मन्तव्यम्, घटं करोतीत्यादौ निर्वर्त्यादिकर्मणोऽसंग्रहापत्तेरित्यर्थः ।

न चावघाते स्वेदादेः कृतिसाध्यत्वेऽपि कृत्युद्देश्यत्वाभावात् पदद्वयार्थवत्तेति; कृत्युद्देश्यपदस्य कृतिकर्मत्वाभिधानात् साध्यपदवैयर्थ्यात्। कर्मत्वस्यैव हि [1]चतुर्विधसाध्यत्वमुक्तं वैयाकरणैः। न चोद्देश्यपदमीप्सितार्थपरमिति; [2]कर्मत्वार्थत्वोक्तिवैयर्थ्यात्। आप्तुमिष्टतमत्वं हीप्सिततमत्वम्। इच्छा च न कृतेरिति। कर्तुः कृत्याप्तुमिष्टतमत्वं कृत्युद्देश्यत्वमिति चेत्; तर्हि कृतिसाध्यपदवैयर्थ्यम, कृत्युद्देश्यपदादेव साध्यत्वलाभात्। अपूर्वस्येप्सिततमत्वं च नास्ति। फलस्यैव ह्युद्देश्यत्वम्।

ननु कृतिं प्रति प्रधानत्वं कृत्युद्देश्यत्वम्। तेन कृत्यप्रधानस्वेदनिवृत्तिः; पराभिमतस्वर्गमण्डलीकरणादेः कृत्युद्देश्यत्वात् साध्यपदमिति पदद्वयार्थवत्तेति—तन्न; कृत्युद्देश्यत्वस्यैव कृतिप्रधानत्वात्। तस्य चेप्सिततमसाध्यत्वात्, सुखस्यैव च तत्त्वात् तदतिरिक्तकार्यतासिद्धेः साध्यपदवैयर्थ्यम्। सुखसाधने तु तत्साधनत्वादेव तत्त्वारोपेणेप्सितसाध्यत्वारोपमात्रम्; न वस्तुतः।

1. चतुर्विधेति। यथाहुः—

"निर्वर्त्यं च विकार्यं च प्राप्यं चेति त्रिधा मतम्।
तच्चेप्सिततमं कर्म चतुर्धान्यत्तु कल्पितम्॥
औदासीन्येन यत्प्राप्यं यच्च कर्तुरनीप्सितम्।
संज्ञान्तरैरनाख्यातं यद्यच्चाप्यन्यपूर्वकम्॥
यदसज्जायते सद्वा जन्मना यत् प्रकाश्यते।
तन्निर्वर्त्यं विकार्यं तु द्वेधा कर्म व्यवस्थितम्॥
प्रकृत्युच्छेदसंभूतं किंचित् काष्ठादिभस्मवत्।
किंचिद् गुणान्तरोत्पत्त्या सुवर्णादिविकारवत्॥
क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते।
दर्शनादनुमानाद्वा तत् प्राप्यमिति कथ्यते॥"

इति। अयं भावः—ईप्सिततमम् अन्यचेति द्विधा कर्म। तत्राद्यं त्रिधा, निर्वर्त्यादिभेदात्। अन्त्यं चतुर्धा। आहत्य सप्तविधम्। घटं करोतीत्याद्यम्। काष्ठं भस्म करोति, सुवर्णं कुण्डलं करोति इति द्वितीयम्। घटं पश्यतीति तृतीयम्। तृणं स्पृशतीत्युदासीनम्। विषं भुङ्क्त इति द्वेष्यम्। गां दोग्धीति संज्ञान्तरानाख्यातम्। क्रूरमभिक्रुध्यतीत्यन्यपूर्वकमिति। उत्पत्त्याप्तिविकृतिसंस्कृतिभेदात् चातुर्विध्यं मीमांसकाद्युक्तमप्यनुसंधेयम्।

2. कर्मत्वार्थत्वोक्तीति। उद्देश्यत्वं कर्मत्वमित्यर्थवर्णनं व्यर्थमित्यर्थः।

[1]न च कार्यं सुखम्; तस्य सुखवर्धकत्वेन पृथक्तया आत्मगुणत्वाभिमानात्। न च सुखवदपूर्वस्यापीष्टत्वम्, सुखानतिरिक्तत्वप्रसङ्गात्। न हि सुखातिरिक्तस्य वास्तवेष्टत्वम्। इष्टत्वेन वाक्यार्थत्वे तु न कार्यवाक्यार्थता। स्वर्गादिसाधनाय चापूर्वस्वीकार इति न तस्येष्टत्वम्। अत इष्टातिरिक्तत्वे सति तेन रूपेण वा आकारान्तरेण वा साध्यत्वमिष्टसाधनत्वम्; तद्धीत एव प्रवृत्तिरिति बालस्यैव तथा व्याप्तिग्रहः। कुठारादेः स्वतोऽसाध्यत्वेऽपि करणत्ववेलायां व्यापार-व्याप्यतया आकारान्तरेण साध्यता इष्टा; गवादेरानयनादिक्रियायास्तु स्वरूपेणेति साधनस्य साध्यता। तच्च बालेन स्तन्यपानतत्करणेषु व्युत्पन्नम्। स्तन्यस्येष्टत्वे तत्साधने प्रवृत्तिः; अन्यदा नेतीति च। इष्टसाधनत्वे च नानन्यार्थतया वाक्यार्थत्वधीः।

न च साधनत्वमनन्यार्थत्वम्; स्वामिनो गर्भदासपोषणसाधनेऽप्यनन्योपकारकर्तुः शेषत्वात्; शेषित्वस्य चोपकारार्हत्वमात्राभिमानात् स्वामिनोऽपि तदविशेषात्। न च गर्भदासस्य स्वाम्यर्थत्वेनैव स्वामिना तत्पोषणमिति; गर्भदासस्यापि स्वपोषणार्थत्वेनैव स्वामिकर्मकरत्वेनैवाशेषत्वापातात्। अदृष्टशेषत्वलक्षणं तु चोदनाप्रतीतिः। फलदातृत्वेन देवताशेषिता।

न चैकस्य वाच्योभयशेषित्वप्रतिपादनसामर्थ्यम्; द्वयोः प्रधानयोर्गुणयोरिवानन्वयात्। अर्थान्तरान्वितस्वार्थाभिधायीनि हि वाक्ये पदानीति चेत्—तन्न; स्वसमाराधनार्थत्वेन देवतायास्तदुपयोग्यन्नादि-दातृत्वेन शेषित्वात्, कर्तुरन्यप्रतीतिलभ्यफलत्वेन शेषत्वाच्च। स्वर्गादेः स्वसमाराधनानुपयोगिफलत्वेन देवताशेषत्वानुगुणफलत्वान्न देवताशेषित्वहानिः। "यथा पशुरेवं स देवानाम्" इति स्वर्गादिभोक्तुः पशुसमानसंस्तवेन देवता-शेषित्वश्रुतेः। तर्हि पशुमतः शेषः। तच्च भाष्य उक्तम्—"स्वाराधनोपयोगि-फलदातृदेवताशेषित्वं च" इति "देवान् भावयतानेन" इति श्लोकभाष्ये। समाराधनकर्तुर्देवतां प्रति शेषत्वं लोकप्रतीतिसिद्धं च। अतः समाराध्यफलेशि-तृदेवताप्राधान्यं सिद्धम्।

ननु परिपूर्णस्य परस्य स्वसमाराधनप्रयोजनत्वेन न फलदातृत्वमिति—तन्न; तस्यापि लीलया तत्प्रयोजनत्वात्। स्वशेषप्राणिवृद्धेरपि स्वार्थत्वाच्च। सर्वप्राणिनां परमात्मानं प्रति स्वार्थत्वेन प्रवृत्तावपि परस्य शेषित्वमेव, परस्य

1. न च कार्यं सुखमिति। अपूर्वस्य सुखत्वं नेत्यर्थः।

सर्वाधिपत्यश्रुतेः। अपूर्वस्य तु न फलसाधनत्वे प्रमाणम्। साधनत्वेऽपि फलशेषतैवेत्युक्तम्। अव्यवधानात् फलहेतुः साधनम्; व्यवधानाद्धेतुः करणमिति करणत्वसाधनत्वयोर्भेदेऽपि तस्य न शेषिता; विकल्पासहत्वात्। साध्यतेऽनेनेति हि साधनम्। किमनेनेति कर्ता विवक्षितः? करणं वा? नाद्यः; अपूर्वस्य कर्तृत्वायोगात्। तच्च पुरुषार्थफलहेतुत्वाभिमानात्। फलभागेव हि कर्ता। अपूर्वं च न फलभाक्। 'शङ्कुला छिनत्ति' इतिवत् कर्तृत्वारोपेऽपि तस्य न तावत् कर्तृत्वम्। प्रयत्नाद्याश्रयत्वं हि कर्तृत्वलक्षणम्। तत्तु न शङ्कुलादेरपि। इतरकारकाप्रयोज्यत्वम्, इतरकारकप्रयो क्तृत्वमिति लक्षणेऽपि नापूर्वस्य तत्। द्वितीयपक्षे तु न तस्य प्राधान्यम्।

[1]किंचाव्यवहितसाधनत्वं च करणस्यैव। "साधकतमं करणम्" इति हि तल्लक्षणम्। अव्यवधानमेव हि तमबर्थः। अत एव हि द्वैधीभाव-फलानन्तरितसाधनकुठारादेः करणत्वम्। [2]व्यवहितानामपि करणत्वं नास्माभि-र्निराक्रियते; कृष्या अन्नसिद्धिरिति व्यवहितेऽपि प्रयोगदर्शनात्। अतो नाव्यवहितस्य साधनत्वं च। एवं चापूर्वसिद्धावपि न करणत्वातिरिक्तता। व्यवहितस्यापि साधनत्वप्रदर्शनेन 'अनन्तरितसाधनमेव कार्यं स्वर्गकाम्य-वगच्छति' इति मतं निरस्तम्।

न च स्वर्गकामित्वरूपेण स्वर्गोपायत्वानर्हक्षणिकक्रियारूपयागादेर्न कार्यतया बोधार्हतेति; देवताप्रसादादिद्वारा तदर्हत्वेन कार्यताबोधार्हत्वात् तस्य। नाव्यवहितस्यैव कार्यतेति प्रमाणम्; अन्नफलेनात्यन्तव्यवहितकृष्या-देरपि कार्यतावगतेः। 'गामानय' इत्यादौ लिङादेरपि क्रियाकार्यतापरतयैव व्युत्पन्न इति तदेव कार्यम्। अनुपपत्तौ ह्यर्थान्तरकल्पना। क्रियायाः कर्तृव्यापारसाध्यतैव हि कार्यता। तच्चानादिप्रयोगमूलपाणिनिस्मृतिसिद्धम्[3]।

---

1. ज्ञानचिकीर्षाप्रयत्नाश्रयत्वरूपं कर्तृत्वमपूर्वे सर्वथैवासंभावितमित्युक्त्वा तस्य करणत्वमेवोपपन्नतममित्याह—**किंचेति**।

2. तर्हि यागस्य व्यवहितत्वान्न करणत्वं स्यादित्यत्राह—**व्यवहितानामिति**।

3. **पाणिनिस्मृतिसिद्धमिति**। यथाहुः—
"यावत् सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते॥"
इति।

न च तत्स्मृतौ लिङादेः स्थाय्यपूर्वपरत्वोक्तिः । छन्दोविषयेऽर्थभेदे तत्परत्वेन साधुना स्मर्यत एव तत्र । देवताप्रसादात् फलसिद्धिस्तु "तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति" "स एवैनं भूतिं गमयति" इत्यादिभिस्तत्तद्वाक्यशेषादिभिरेवावगम्यते । वाक्यगतैः व्युत्पन्नैः पदैः वाक्यार्थापूर्तौ ह्याकाङ्क्षितयोग्यार्थान्तरकल्पना । विध्युद्देशमात्रावगतार्थसंदेहे वाक्यशेषानादरेणार्थान्तरकल्पनायां हि "संदिग्धे तु वाक्यशेषात्" इति न्यायोच्छेदः ।

तत्र "अक्ताः शर्करा उपदधाति" इति विध्युद्देशेन द्रव्यविशेषास्फूर्तौ संदेहे "तेजो वै घृतम्" इति वाक्यशेषात् तन्निरासोक्तिः । देवताविशेषधीश्च तत्तत्स्वरूपैश्वर्यत्वादिपरैः, "वज्रहस्तः पुरन्दरः" इत्यादिमन्त्रार्थवादैरेव सिद्धा । विध्यपेक्षितं च देवतास्वरूपादिज्ञानमिति न तदनादरः । अत एव स्वर्गादिस्थाय्यर्थस्वीकारो भवताम् । देवतायाश्च स्थायित्वान्न कालान्तरभाविफलसिद्ध्यनुपपत्तिः । "स एवैनम्" इति देवताया अव्यवहितफलसाधनत्वावधारणात् नापूर्वस्य फलसाधनता ।

ननु यागादेर्देवताराधनत्वे किं प्रमाणमिति चेत्; अनादिवृद्धप्रयोगमूला "यज देवपूजायाम्" इत्यादिस्मृतिरिति ब्रूमः । न चापूर्वस्यैव प्राधान्यात् देवतोद्देशेन द्रव्यत्यागमात्रं याग इति सा गौणीति; लिङादिवाच्यतया त्वदभिमतकार्यस्यैवासिद्धेः ।

किंच "संवत्सरमिन्द्रं यजेत" "विष्णुं यजति" इत्यादिस्मृतिरेव तत्समाराधनत्वे प्रमाणम । 'संवत्सरमिन्द्रं पूजयेत्' 'विष्णुं पूजयेत्' इति हि तदर्थः । पूजा च पूज्यप्रधाना लोकेऽवगता क्रिया । ईप्सिततमपरद्वितीयाश्रवणाच्च तत्प्राधान्यम् । "वायुमेव स्वेन भागधेयेनोपधावति" इत्यादौ च तत्प्राधान्यम् ।

न चार्थवादानामन्यपरत्वान्न तत्परत्वमिति; अन्यपरत्वहेत्वभावात् । न च कार्यप्राधान्यविधिरेवातत्परत्वे हेतुरिति; कार्यसिद्धौ तत्प्राधान्ये चार्थवादान्यपरत्वम ; एतत्सिद्धौ च तत्सिद्धिरित्यन्योन्याश्रयात् । न चार्थवादत्वमात्रमतत्परत्वे हेतुः; अपगोरणशतयातनार्थवादानां तत्परत्वाङ्गीकारात् । मुख्यार्थासंभवे तु लक्षणादिस्वीकारो न मन्त्रादिष्वेव; "दर्शपूर्णमासाभ्याम्" इत्यादिविध्युद्देशेष्वपि तत्स्वीकारात । दर्शपूर्णमासपदस्य हि कर्मणि लक्षणेष्टा ।

'आग्नेयम्' 'वायव्यम्' इत्यादौ देवतायां तद्धितश्रवणाच्च देवताप्राधान्यम् । "सास्य देवता" इति हि स्मृतिः। न च द्रव्यं प्रति तस्या अप्राधान्यधीः; यागं प्रत्यनीप्सितत्वेनापि क्रियाकर्मणो द्रव्यस्यापि प्राधान्ये, क्रियां प्रति प्राधान्यस्याप्रसिद्धत्वात् । न हि क्रियोद्देश्यायास्तस्यास्तच्छेषतोपपन्ना ।

"अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत्" इत्यादौ देवतायां चतुर्थीश्रवणाच्च तत्प्राधान्यम् । चतुर्थी च [1]प्रधानार्थ एवेति स्मृत्यादिसिद्धम् । स्वसंबन्धाच्च तस्याः प्राधान्यम् । "स्वाहा देवहविर्दाने" इति च स्मृतिः । न च यागेन प्रयोजनं, न देवतयेति देवताया अप्राधान्यमिति ; देवतया फलसिद्धिप्रयोजनात् । क्रियायास्तु तदाराधनत्वेनैवार्थवत्त्वाच्च । तस्या अपूर्वोत्पादकतया अर्थवत्तायां तु न प्रमाणम् ।

अतः श्रुतिस्मृतिभिर्लोकतश्च देवताया यागं प्रति प्राधान्यं सिद्धम् ।

ननु "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यादौ करणविभक्त्या तत्पदस्य कथमन्वयः ? न च यागसाधनद्रव्यादिपरता तस्य, नामधेयपादे तस्य नामधेयत्वसाधनात् । नाम च नामिसामानाधिकरण्येनान्वयीति समा नामिनोऽपि कर्मकरणता । एवं च दर्शपूर्णमासाभ्यां यागाभ्यामिति सिद्धं भवति । एवंविधाद्वस्तुनः राद्धान्ते क्रियायाः कर्तृव्यापारसाध्यत्वस्य लिङादिवाच्यत्वाभिमानात्, साध्यान्तरान्वये हि करणत्वोपपत्तिः । अपूर्वस्य तु साध्यत्वात् पक्षान्तरेण करणत्वेनान्वयोपपत्तिः । दर्शपूर्णमासाख्ययागाभ्यामपूर्वं भावयेदिति हि तस्यार्थः । एवं करणत्वान्वयार्थमपूर्ववाक्यार्थतैव युक्तेति—तन्न ; अपूर्वसिद्धेरेव तत्कारणत्वानुपपत्तेः ; प्रथममेवापूर्वकारणत्वस्यानिष्टत्वाच्च । फलं प्रति करणीभूतस्यापूर्वं प्रति विषयीभूतस्य पश्चादेव लभ्या अपूर्वकरणतेष्टा । बोद्धृवस्थायामेव ह्यपूर्वप्रतीतिः । तदवस्थायां च यागादेर्विषयत्वमेव, न तत्करणत्वमिति भवत्पक्षेऽपि न करणत्वान्वयः ; पश्चाद्भावित्वात् तदन्वयस्य । तदुक्तम्—

"कृतितत्साध्यमध्यस्थो यागादिर्विषयो मतः ।
कार्ये संघटिताकारे करणत्वेन संगतः ॥"

इति ।

---

1. प्रधानार्थ इति । उद्देश्यश्चतुर्थ्यर्थः । उद्देश्यत्वं च शेषित्वमिति वैयाकरणसिद्धान्तः । शेषित्वं च प्राधान्यमेव ।

तस्य पश्चाद्भाविफलकरणत्वेनान्वयित्वमस्मत्पक्षेऽप्युपपन्नम् । यागादेः फलकरणत्वं च देवताप्रीतिद्वारास्त्येव । देवताप्रीतिकरणत्वाच्च करणत्वेनान्वयोपपत्तिः । एवंच तृतीयान्तनामयुक्तश्रुतौ दर्शपूर्णमासयागाभ्यां देवताप्रीतिं फलं वा साधयेदिति वाक्यार्थः ।

"इन्द्रं यजति" "अग्निहोत्रं जुहोति" इत्यादौ तु तत्तत्कर्मणामेव साध्यत्वमिति तत्परत्वमेव लिङादीनाम् । तत्राप्यार्थं करणत्वमस्त्येव । स्वर्गकामोऽग्निहोत्रमिति हि श्रुतम । स्वर्गकामस्य नातत्साधने प्रयुक्तिरिति तस्या आर्थकरणता । तच्चोक्तं वेदार्थसंग्रहे "[1]भोक्तुकामो देवदत्तगृहं गच्छेत्" इत्यादौ ।

ननु भाष्यादौ लिङादेः क्रियायाः कर्तृव्यापारसाध्यत्वमेवार्थ इत्युक्तम्, न तु देवताप्रीतिफलयोरिति—सत्यम् ; लिङादीनां कर्तृवाचित्वात् कर्तृवाचिनां च कर्तृव्यापारसाध्यपरत्वेनान्वयात् तस्य च क्रियाया एव प्रायिकत्वेन सम्भवात् तत्पर भाष्यादि । न तु देवताप्रीतिफलयोरव्यापारसाध्यत्वाभिप्रायम् । अत एव हि वेदार्थसंग्रहे फलकरणत्वस्य श्रौतत्वात् [2]औपादानिकत्वनिरासः । किं च स्वतः कृतिसाध्यत्वं च क्रियाया एवेति लिङादेस्तत्परत्वोक्तिः । व्यवहितसाध्ये हि देवताप्रीतिफले । विध्युद्देशफलवाक्यानि ......

1. भोक्तुकाम इति । "यथा 'भोक्तुकामो देवदत्तगृहं गच्छेत्' इत्युक्ते भोजनकामस्य देवदत्तगृहगमने कर्तृत्वश्रवणादेव प्रागज्ञातमपि भोजनसाधनत्वं देवदत्तगृहगमनस्यावगम्यते, एवमत्रापि भवति" इति वेदार्थसंग्रहवाक्यमत्रावगन्तव्यम् ।

2. औपादानिकत्वनिरास । इति "कामिनः कर्तव्यतया कर्म विधाय कर्मणो देवताराधनरूपतां फलसिद्धिं च तत्तत्कर्मविधिवाक्यान्येव वदन्ति "वायव्यं श्वेतमालभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति" इत्यादीनि । नात्र फलसिद्ध्यनुपपत्तिः काचिदपि दृश्यत इति फलसाधनत्वावगतिः औपादानिकीत्यपि न संगच्छते" इति वेदार्थसंग्रहवाक्यमत्रावगन्तव्यम् । उपादानं नाम विध्याक्षेपः । कर्मणः फलसाधनत्वप्रकारो देवताप्रीतिद्वारेति वाक्यत एव स्पष्टम् । अतोऽन्यथानुपपत्तिप्रमाणकमपूर्वं परिगृह्य साधनत्वप्रकारवर्णनमयुक्तमित्यर्थः । अत्र देवताप्रीतिफलयोरपि व्यापारसाध्यत्वमुक्तप्रायमित्याशयः ।

3. अत्र ग्रन्थपातः ।

[1]दिदं भवद्भिः । न च स्वसिद्धय एव तस्य स्वर्गसाधनत्वमिति न प्राधान्यहानिरिति ; नियोज्यान्वयात् पूर्वं कार्यप्रतीतेस्तथा वक्तुमयुक्तत्वात् । क्रियाया नियोज्यान्वयायोग्यत्वत एव हि स्थाय्यपूर्वसाध्याभिधानम् । ततः प्रवर्तकवाक्येष्वेव सिद्धार्थपरताव्युत्पत्तिः । साध्यतैव कार्यतेष्टसाधनस्य । तच्च सिद्धरूपम् । स्तन्यतत्साधनपानक्रिययोर्बालेन सिद्धपरत्व[2] एव व्याप्तिर्गृहीता ।

ननु स्तन्यस्यापि साध्यसुखार्थत्वेन साध्यपरतया व्याप्तिग्रह इति—तन्न ; [3]तत्सुखस्याप्यपि स्वार्थत्वावगतेः सिद्धार्थपरतावधारणात् । किंच स्तन्यतत्सुखयोः फलत्वाभिमतेश्च न कार्यतेति न कार्यपरतया व्युत्पत्तिः । अतो 'गामानय' इत्यादिश्रवणसमनन्तरमध्यमवृद्धप्रवृत्तिदर्शो बालस्यैवं धीरुदेति—इष्टसाधनत्वधीपूर्विकेयं प्रवृत्तिः, बुद्धिपूर्वप्रवृत्तित्वात् ; मत्प्रवृत्तिवदिति । इत्याद्यनुमानं कार्यवाक्यार्थपक्ष इवोन्नेयम् । इष्टसाधनस्यैव कार्यता । वेदार्थसंग्रहादौ "गवानयनादिक्रियाया व्युत्पत्तिकाले दुःखरूपतयेष्टविशेषसाधनतयैव कार्यता" इत्यादिग्रन्थे । कार्यता च न साध्यतातिरिक्तेति वेदार्थसंग्रहादावेव स्पष्टम् ।

ननु "कार्यार्थ एव व्युत्पत्तिरिति निर्बन्धो निर्निबन्धनः" इत्यादिभाष्यकारोक्तेः कार्यार्थेऽपि व्युत्पत्तिरभ्युपगतेति चेत्—सत्यम् ; पराभि-

---

1. दिदं भवद्भिरिति । अत्र ग्रन्थपातो मातृकाकोशयोः । अत्रलिङोऽपूर्वात्मककार्यपरत्वं प्राभाकराभिमतं परास्यत इति ज्ञायते । अनेनैव ग्रन्थकर्त्रा नयप्रकाशिकायाम्—'वस्तुतो न कार्यस्य वाक्यार्थत्वमुचितम्, गामानयेत्यादिप्रवर्तकवाक्येष्वपि कार्यार्थव्युत्पत्तेरव्युत्पन्नत्वात् । तच्च कार्यवाक्यार्थवाद्यभिमतकार्यत्वस्य दुर्निरूपत्वं तु' इत्यारभ्य 'समभिव्याहृतस्वर्गकामपदार्थस्य नियोज्यस्य नास्वर्गसाधने क्षणिके क्रियारूपकार्ये कार्यत्वधीरिति हि क्रियातिरिक्तता साध्यते । अतः स्वर्गकामपदसंबन्धयोग्यस्यैवापेक्षितत्वात् तस्य साधनत्वेनैवान्वयः । अतो नियोगस्य स्वतः प्रयोजनरूपता दुर्भणा । अतः कार्यार्थवाद्यभिमतकार्यत्वस्य दुर्निरूपत्वात् शब्दानां कार्यपरत्वेनाद्यव्युत्पत्त्यभावात् सिद्धपरतयापि व्युत्पत्तिसंभवात् सिद्धवस्तुबोधकत्वेनेष्टसाधनत्वस्यैव वेदार्थत्वम्' इत्युक्तमत्रानुसंधेयम् ।

2. सिद्धपरत्व इति । कर्तृव्यापारसाध्यत्वेष्टसाधनत्वरूपासिद्धार्थपरत्वोपयोगिनी व्याप्तिः बालेन स्तन्यपानक्रियानुभवेन गृहीतेति विवक्षितोऽर्थः ।

3. अस्वार्थत्वावगतेरिति । न हि सुखं स्वार्थं भवति ; अपितु तदाश्रयपुरुषार्थमिति सिद्धपरतयैव किं न व्याप्तिग्रह इति भावः ।

मतप्रक्रियायामपि वेदार्थविचारसिद्धिरिति वक्तुं तथोक्तत्वात् । अत एव हि "अपि च कार्यार्थे एव व्युत्पत्ति" इत्यादिग्रन्थजातम् । अथवा कार्यार्थ एवेति ग्रन्थ इष्टसाधनपरतयैव व्युत्पत्तिरित्येवं निरासपरः, तस्यैव कार्यत्वसाधनात् । स्वर्गादीष्टसाधकतत्कर्तृदेवताव्यतिरिक्तानामिष्टसाधनशेषत्वात् कार्यार्थ इत्युक्तिरप्युपपन्ना ।

एवं प्रवर्तकवाक्यव्युत्पत्तावपि सिद्धार्थपरत्वाद् देवताप्राधान्यं सिद्धम् । अप्रवर्तकपदवाक्येष्वपि सिद्धार्थपरतया व्युत्पत्तिरस्ति । [1]तथाहि—अव्युत्पन्नबालसहितोऽन्धो वृद्धो वा क्वचिद् गृहे प्रविष्टः स्वपार्श्वादौ कुत्रचिद् दण्डं निधायोपविष्टे, अन्यपरे च तस्मिन् तत्पार्श्ववर्तिना केनचित् हितैषिणा तदविज्ञातं तत्पश्चाद्देशादौ तद्दण्डे निहिते, 'किमन्येनापहृतो दण्डः' इति स्वहस्तस्पर्शादिनान्विष्य चादृष्टे तस्मिन् पार्श्ववर्तिनं कंचित् प्रति 'किं दण्डो दृष्टो देवदत्त?' इति वृद्धेनोक्ते, वृद्धचेष्टाभिज्ञेन बालेनापि 'अयं दण्डार्थं प्रेषितः किं करिष्यति?' इत्युन्मुखेन [2]अवगम्यमानेनान्येन च तत्रस्थेनैव 'पश्चाद्देश एव दण्डो निहितः' इति प्रत्युक्ते, वृद्धे च दण्डदर्शि निवृत्ततदन्वेषणे, 'वृद्ध इदानीं दृष्टदण्डः, निवृत्ततदन्वेषणव्यापारत्वात् मातृदर्शनप्रवृत्तस्तद्दर्शनेऽहमिव' इति वृद्धस्य तद्दर्शनमनुमाय 'वृद्धस्य दण्डदर्शनं च न प्रत्यक्षेण; पूर्वं तत्सद्भावेऽपि तस्यादर्शनात् । शब्दानन्तर्यात् तत् शब्दकारणकमेव । मम तु मातृदर्शनं मानान्तरात्' इति बालोऽनन्तरं निश्चिनोति । दण्डदिदृक्षोश्च वृद्धस्य तद्दर्शनं वृद्धान्तरेरितशब्दकारणकम्, तदानन्तर्यात्; चक्षुःसंप्रयोगानन्तर्यान्मात्रादिदर्शनस्य चक्षुःकारणकत्ववत्' इति तज्ज्ञानस्य शाब्दत्वानुमानबलेनापि । मातृदर्शनस्य चाक्षुषता तदन्वयव्यतिरेकाभ्यामवधृता । शब्दार्थज्ञानं च तयोः संबन्धनिबन्धनम्, करणजज्ञानत्वात् चाक्षुषघटादिज्ञानवदिति तत्संबन्धवित् बालः, 'प्रथमश्रवणवेलायामेव शब्दस्य नार्थप्रत्यायकत्वं किमिति, यथा वृद्धस्य?' इत्यालोच्य, 'चक्षुरादेरालोकादिसापेक्षत्वं यथा, तद्वदस्याप्यपेक्षणीयं किंचिदस्ति' इति परिकल्पयति । तच्च संबन्धग्रहणाख्यव्युत्पत्तिरेवेति पश्चान्निश्चिनोति ।

1. **भाष्यादिग्रन्थानुक्तं** सिद्धार्थव्युत्पत्तिप्रकारं स्वयं कंचिदाह—**तथाहीत्यादिना ।**

2. **अवगम्यमानेनेति** । उन्मुखेन बालेनावलोक्यमानेन पुरुषान्तरेणेत्यर्थः ।

ननु शब्दादेव वृद्धस्य दण्डदर्शनमिति न बालनिश्चयः, किंतु प्रमाणान्तरेणापि तद्दर्शनधियेति—तन्न; प्रवृत्तिहेतुकार्यज्ञानस्यापि प्रमाणान्तरसंभवधिया शब्दकारणत्वानिश्चयसाम्यात् । अथ दृष्टहेतौ न हेत्वन्तरकल्पनेति; तर्ह्यस्मत्पक्षेऽपि तत् समानम् । कार्यधियः प्रवृत्तिहेतुत्ववत् इष्टावाप्तेरपि निवृत्तिहेतुत्वमित्यादि सर्वमुन्नेयम् ।

किंच प्रमाणान्तरेणापि सिद्धार्थव्युत्पत्त्युपपत्तिः । तथाहि—मात्रादिभिरङ्गुल्यादिभिस्तत्तत्पदार्थनिर्देशपूर्वकं 'तव तातोऽयमास्ते । तं पश्य । तातममुमालोकय । तातमागतमीक्षस्व' इत्येवं तातादिशब्दानुवृत्त्या पदान्तरावापोद्धाराभ्यां च तत्तत्पदार्थनिर्देशेषु शनैर्बालस्य तातादिसिद्धार्थपरताधीरुदेति । अङ्गुल्या तत्तत्पदार्थनिर्देशपूर्वकं बहुशस्तत्तच्छब्दप्रयोगादव्यभिचार्यनुभवो जायते । तत एव च पटुतरसंस्कारः । शब्दोऽर्थप्रमाकरणं तदानन्तर्यात् संप्रयुक्तचक्षुर्वदिति बोधकत्वशक्त्यनुमा ।

किंच अङ्गुल्या पदार्थनिर्देशपूर्वकं बहुशः प्रयुज्यमानशब्दस्यैष महिमा, यद्बालस्य स्वार्थप्रत्यायकत्वम् । एवंविधसामर्थ्यकल्पना चार्थधीदर्शनात् । कार्यादेव हि सर्वत्र कारणकल्पना । बहुशः प्रयोगापेक्षा च सामान्यतो यावद्बोधकत्वावधारणं कतिपयशब्देष्वेव; न सर्वशब्देषु । तदवधारणैश्चापूर्वार्थदर्शने '[1]किमेतदम्ब?' इति पृच्छति । 'कोऽस्य वाचकः' इति तत्प्रश्नाभिप्रायज्ञः तद्वाचकं शब्दं प्रयुङ्क्ते । तथा अपूर्वशब्दश्रवणेऽप्यर्थप्रश्ने 'अस्यार्थ एषः' इति वदति । तथा बालहितैषी वृद्धः 'अस्य शब्दस्यायमर्थः' इति च व्युत्पादयति । एतत् सर्वं लोके दृश्यत एव ।

न चैवंप्रकारेण व्युत्पत्तिः कार्यव्युत्पत्तिपूर्विकेति; तत्र प्रमाणाभावात् । कार्यार्थे व्युत्पत्तिः सिद्धार्थव्युत्पत्तिपूर्वकेत्यपि वक्तुं शक्यत्वाच्च । अतः सिद्धार्थ एवाद्या व्युत्पत्तिः । 'शब्दोऽर्थसंबद्धः, स्वग्रहत्वमात्रेण तत्प्रतीतिहेतुत्वात्, अन्यवत्' इति । 'तत्संबन्धो न संयोगः, शब्दस्य गुणत्वात् । नाप्याश्रयाश्रयिभाव; वाच्यद्रव्यानाश्रितत्वात्' इति प्रायेण वाच्यवाचकरूपं संबन्धान्तरमेवेति च कल्पयति । 'न च तस्य सांकेतिकत्वम्, स्वतो वा परम्परया वा संकेतयितृपुरुषाज्ञानात्' इत्यादिना तस्यौत्पत्तिकत्वमेवेति च ।

---

1. किमेतदम्बेति । अङ्गुल्या निर्दिश्य कतिपयशब्दार्थशिक्षाबलेन, 'यावदर्थं वै नामधेयशब्दाः, तैरर्थप्रत्ययः' इत्युक्तरीतिं बालो यदा परामष्टुं पारयति, तदा अपूर्वार्थदर्शने नामधेयजिज्ञासया, हे अम्ब, किमेतदिति पृच्छतीत्यर्थः ।

ननु प्रायेण लोके द्रविडादिभाषास्वेव बालानां व्युत्पत्तिदर्शनात् तासां चार्थसंबन्धस्य संकेतमूलत्वात् नौत्पत्तिकसंबन्धव्युत्पत्तिराद्येति— तन्न; संकेताविभागेन वाच्यवाचकयोः संबन्धमात्रस्य व्युत्पाद्यमानत्वात् । देववाणीषु व्युत्पत्तौ न्यायपाटवे च सति हि तद्विभागः ।

[1]अथवा द्रविडादिभाषाणामपि वृद्धपरम्परयैव तत्तत्पदार्थपरत्वेन प्रयुज्यमानत्वात् तत्संबन्धस्याप्यौत्पत्तिकतास्तु । तत्साधुपदत्वव्यवस्थापनाय पाणिन्यादिसूत्रवदगस्त्यादिसूत्राणि सन्तु । गाव्यादिशब्दवत् तत्राप्यपभ्रंशप्रयोगः सादिरस्तु । पुरुषादिव्यक्तिपरत्वेन सांकेतिकदेवदत्तादिशब्दवत् तद्भाषानुरूपं संकेतनामानि सन्तु । तथापि सर्वशब्दानां न संकेतमूलः संबन्धः । किंतु केषांचिदेव । अन्येषां त्वाकृत्यादिविशिष्टार्थवाचित्वेनौत्पत्तिकत्वोपपत्तेः 'पशु' 'ओं' 'आम्' इत्यादिषु तद्भाषाशब्देषु देववाण्यैक्यदर्शनाच्चौत्पत्तिकव्युत्पत्त्युपपत्तेः । एवं निश्चये मात्रादिभिरेवंविधसंबन्धज्ञापनायैव पदार्थनिर्देशपूर्वकशब्दप्रयोग इति च निश्चिनोति ।

एतेन [2]शङ्के इत्यादिपदमात्रव्युत्पत्तिरुपपादिता । पदमात्रेऽपि व्युत्पत्त्यभ्युपगमो भाष्ये—"एवं किल बालाः" इत्यादिग्रन्थे ; वेदार्थसंग्रहे च—"यथा बालः तातोऽयम्" इत्यादिग्रन्थे च । एवंविधा लोकसिद्धव्युत्पत्तिर्लघ्वी च ; एकवृद्धादेव तत्सिद्धेः । कार्यव्युत्पत्तौ तु वृद्धद्वयापेक्षेति गुर्वी[3] ।

नन्वत्रापि पदे वाक्ये च व्युत्पत्तिरिति गौरवमिति—तन्न ; उभयथापि[4] दृश्यमानत्वात् । न हि दृष्टेऽनुपपन्नं नाम । वृद्धद्वयादेव व्युत्पत्तिरिति निबन्धने तु यत्र क्वाप्येकवृद्धमात्रेण सह वसतो बालकस्य शब्दव्युत्पत्त्यभावप्रसङ्गः । स्वदेशभ्रंशान्मातापित्रोरन्यतरमात्रस्य कीकटादिदेशवासोऽप्युपपद्यत एव । बालस्य तत्तद्देशवासेऽपि स्वभाषामात्रव्युत्पत्तिर्दृश्यते । अतः कार्यार्थ एव व्युत्पत्ति-

1. अथवेत्यन्वारुह्य वादः । वास्तववस्तु पक्षः पूर्वोक्त एव ।
2. शङ्के इति ।
   "मन्येशङ्केध्रुवंप्रायोनूनमित्येवमादिभिः ।
   उत्प्रेक्षा व्यज्यते तद्वदिवशब्दोऽपि तादृशः ॥"
   इत्यालंकारिकसमयसंकेतितः शङ्केशब्द उत्प्रेक्षाव्यञ्जक इति भावः ।
3. गुर्वीति । लोकसिद्धव्युत्पत्तिरिति विशेष्यमनुषञ्जनीयम् ।
4. उभयथापीति । पदे वाक्ये चेत्यर्थः ।

रिति निर्बन्धो निर्मूलः । कार्यार्थे व्युत्पत्तावपि क्रियाकार्य एव, तदतिरिक्तकार्यस्य दुर्निरूपत्वादित्युक्तम् । क्रियाकार्यव्युत्पत्तावपि न सिद्धार्थपरत्वहानिरित्युक्तम् ।

अतो न वेदवाक्यानां परब्रह्मपरत्वे काचिद्धानिः । आग्नेयादिवाक्यानामप्यग्न्यादिविशिष्टपरमात्मपरत्वप्रसाधनात् अग्न्यादिमात्रपरत्वप्रयोगो गौणः, 'अग्निर्माणवकः' इत्यादाविव ।

सिद्धार्थव्युत्पत्तिसाधनात् मन्त्रार्थवादानामपि स्वार्थपरता । न चैवं वाक्यभेदः ; कर्मादिविध्यपेक्षितदेवताचैश्वर्यप्रतिपादनादेकवाक्यत्वोपपत्तेः ।

ननु देवताया विग्रहादिमत्त्वे वेदस्यानित्यार्थसंयोगादनित्यतेति — तन्न ; घटादिशब्दवदिन्द्राद्याकृतिविशिष्टार्थवाचित्वेनानित्यार्थसंयोगित्वाभावात् । न च विग्रहवत्त्वे बहुत्र यज्ञसंनिध्यनुपपत्तिः ; वाक्यशेषादिषु श्रूयमाणाणिमाद्यैश्वर्यसद्भावात् । शास्त्रसिद्धत्वात् हविरादानस्यापि नानुपपत्तिः । न च देवतोद्देशेन भूम्यादिषु त्यक्तहविषोऽक्षयत्वदर्शनात्[1] नादानमिति ; रसभोजित्वश्रवणात् तदुपपत्तेः । 'यावदेका देवता कामयते तावदाहुतिः प्रथते' इत्यङ्गुष्ठमात्रहविषोऽपि यावद्देवताकामं प्रथनश्रवणात् तृप्तिहेतुत्वम् । प्रीतिवरप्रदाने च स्पष्टे श्रूयेते ।

ननु महाप्रलये यथाश्रुति कृत्स्ननाशाङ्गीकारे शब्दात्मकवेदस्यापि नाशोऽङ्गीकार्यः । शब्दो ह्याकाशगुणः । आकाशश्च कार्यः । अतो न वेदानादिनित्यता ; न च शब्दार्थसंबन्धौत्पत्तिकता च । किंच पूर्वकाण्डे शब्दानां सर्वगतत्वनित्यत्वे प्रसाधिते । तद्विरोधश्च । अतो वेदनित्यत्वाङ्गीकारे न युगपत्प्रलयोऽङ्गीकार्य इति चेत् — तन्न ; शब्दानुपूर्वीविशेषस्यैव वेदत्वात् । तस्य चापुंप्रभवस्यैव नित्यत्वात् । शब्दानां प्रलयोत्पत्तावपि तदविशेषात् । तत्कालेऽपि परमगुरोः परमात्मनः स्थितत्वान्न संप्रदायविच्छेदोऽपि । शब्दार्थसंबन्धौत्पत्तिकत्वं तु शब्दार्थयोर्नाशेऽपि न विरुद्धम् ; तस्याप्यपुंप्रभवरूपत्वात् । यथा यागादिक्रियाया अनित्यत्वेऽपि तद्वाचकशब्दसंबन्धनित्यत्वम्, एवमत्रापि । व्युत्पादकपरमाचार्यपरमात्मस्थितेर्न व्युत्पत्तिविच्छेदश्च । शब्दनित्यत्वादिसाधनं तु चिरस्थायित्वादिपरमिति वक्ष्यते[2] ।

---

1. अक्षयत्वदर्शनादिति । देवतया भुक्तत्वे हि क्षयः स्यात् । अक्षीणं तु तत् लक्ष्यत इति भावः ।

2. वक्ष्यत इति । शब्दनिरूपणप्रकरणे इति शेषः ।

एवं यागादीष्टसाधनस्यैव कार्यत्वे देवताप्राधान्यादौ च न काचिदनुपपत्तिः । इष्टसाधनक्रियाया एव कार्यत्वे च तत्र कर्तुरेवान्वयः । एवं चालौकिकप्रयोगसारूप्यं लौकिकस्य प्रयोगस्य । कर्ता च लिङादिवाच्यः; "लः कर्मणि च" "कर्तरि शप्[1]" इत्यादिस्मृतेः ।

ननु न कर्तुर्वाच्यता; कृत्याक्षिप्तत्वात्तस्य । अनन्यलभ्य एव हि वाच्यः । तत्संख्याभेदस्तु नान्यतो लभ्य इति तत्परो लिङादिः । '[2]चकारात् कर्तरि' इत्यादिस्मृतिरपि तत्परेति वस्तुबलवादी । शब्दबलवादी तु संख्याया अनन्यतो लभ्यत्वाल्लिङादेस्तत्परा । स्मृतिरपि तत्परेत्याह । तस्या वाच्यत्वे कर्तृगतत्वमुपाधिमात्रम्; न तु वाच्यम् । कर्तुर्न हि वाच्यतेति चेत्—तन्न; कृतेरपि क्रियाक्षिप्तत्वेन लिङाद्यवाच्यत्वापातात् । न हि कृतिव्यतिरेकेण क्रियोत्पत्तिः; संख्याया अपि क्रियाक्षिप्तत्वादवाच्यतापत्तिश्च ।

ननु अकारकस्य न क्रियाक्षेपः । सा च न कारकम् । कारकोपादाने च तदपेक्षेति—तन्न; विशिष्टस्यैव कारकत्वाद्विशेषणस्यापि तदन्तर्भावात् । किंच कारकस्यापि संख्याव्यतिरेकेण कारकत्वासिद्धेस्तदाक्षेप इति न वाच्यता; केनाप्यन्यतो लाभात् । न ह्याक्षेपकनियमः । अन्यतो लभ्यत्वमेव ह्यवाच्यत्वे युक्तिः । एवं शौक्ल्यादिगुणानामप्यन्याक्षिप्तत्वेन न वाच्यता । एवं गोत्वादीनामपि । संख्याभेदगुणविशेषजातिविशेषविधयस्तु नियमार्थाः प्रसज्येरन् । एवंच आकृत्यधिकरणे जात्यादिवाच्यतासाधनं व्यर्थम् । स्वर्गादिफलत्वं च नियोज्यविशेषणत्वेनान्वितं न फलतयेति साध्यतद्विशेषणफलाक्षिप्तमपूर्वमपीति तस्यापि न वाच्यता । साध्यस्वर्गाद्यर्थमेव ह्यपूर्वम् । विषयनियोज्यौ तु न वाच्यावित्युक्तम् । [3]करणत्वादिवत् । क्रियाकार्यं तु न वाच्यम्; लाक्षणिकत्वाभिमानात् ।

1. "लः कर्मणि" इति सूत्रे कर्तृपदाश्रवणात् कथं कत्रर्थकत्वमित्याशङ्कायां तत्रत्यचकारविवक्षितत्वं तस्येति विवक्षन् कर्तृपदघटितं पूर्वसूत्रमुपादत्ते '**कर्तरि शप्**' इति ।

2. **चकरादित्यादि** । "लः कर्मणि च" इति पाणिनिसूत्रे "चकारात् कर्तरि" इति तद्व्याख्यारूपभाष्यादिस्मृतिरित्यर्थः । **तत्परेति** । कृतिपरेत्यर्थः । कर्तृगतसंख्यापरेति वा ।

3. **करणत्वादिवदिति** । क्रियया कारकाणामाक्षेपसंभवादिति भावः ।

"व्रीहिभिर्यजेत" इत्यादौ जातेरेव करणत्वाभिमानात् [1]तस्य चावाच्यत्वात् मुखान्तरेणापि जात्याद्यवाच्यतापत्तेश्च ।

एवमनन्यलभ्यस्य वाच्यतावादिनां मते लोके वेदे वा न कस्यापि वाच्यत्वसंभवः । वाच्यार्थत्वसंभवे हि लाक्षणिकादिसिद्धिः । अतो [2]नानन्यलभ्यः शब्दार्थः । किंतु शब्दात् यत् व्युत्पत्ताववगम्यते तत् सर्वं तदर्थः । क्लृप्तशब्दैकार्थैकदेशत्वात् निर्वाहस्तु गौणः । विधेयं तु काममनन्यलभ्यं भवतु । अन्यतो लभ्यस्यापि न वाच्यत्वहानिः [3]देहानामेवमनूद्यत्वात् । अतः कर्ता वाच्यः । तद्विशेषणं च स्वर्गादिः ।

न च कर्तुः क्रियाविशेषणत्वात् तद्विशेषणस्यापि तच्छेषता ; सा चानुपपन्ना, साध्येष्टत्वादिति—न ; कर्तुः क्रियाविशेषणत्वाभावस्तस्योक्तत्वात् । किंच नियोज्यविशेषणत्वेऽपि कार्यशेषत्वापत्तिः समा । न हि बोद्धा कार्यं प्रति प्रधानम् ।

किंच बोद्धुरार्थत्वेन न शब्दवाच्यता । न हि स्वर्गकामादिपदस्य कार्यतया बोद्धृपरता, अतत्प्रतीतेः । न चार्थतया बोद्धुशाब्दत्वम्, बोद्धृरभावे कर्तुरभावादिति; काण्डाद्यभावे व्रीह्याद्यभावात् व्रीहिशब्दस्य काण्डादिपरत्वापातात् । आर्थस्य च न चोदनार्थतयान्वयः ।

[4]विषयोऽपि न शब्दवाच्यः; यजेतेत्यादौ यागस्यापूर्वविषयत्वाप्रतीतेः । विषयस्य वाच्यत्वस्वीकारे 'धनार्थी राजगृहं गच्छेत्' इत्यादावपि विषयत्वधीः स्यात् । न च तदस्ति ।

एतेनेदं निरस्तम् ; ननु—"वाक्यं तदेव हि प्राह नियोज्यविषयान्वितम्" इति । "ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना" इत्यत्र भाष्ये बोधबोध्यत्वे दूष्युक्तो ज्योतिष्टोमादिकर्मविधिरिति वदद्भिर्भाष्यकारैः

1. तस्य । करणत्वस्य ।

2. नेति । अनन्यलभ्यः शब्दार्थ इति न्यायो नेत्यर्थः ।

3. देहानामिति । कर्तृविशेषणभूतो देहो न वाच्यः, अन्यतो लभ्यश्चेत्यर्थः ।

4. नियोज्यविषयान्वितं वाक्यवेद्यमित्यत्र नियोज्यस्य वाच्यत्वं प्रतिक्षिप्य विषयस्य वाच्यत्वं प्रतिक्षिपति—विषयोऽपीति । विषयत्वेन रूपेण विषयो न वाक्यात् प्रतीयत इत्यर्थः ।

बोद्धुश्चोदनार्थतोक्तेति—तन्न; तस्य ज्ञानवदार्थबोद्धृपरत्वात् । न हि ज्ञानं चोदनार्थः; अतः 'मत्कर्तृकं कार्यम्' इत्यार्थमेव बोद्धृत्वम् । न चर्त्विजां तर्हि 'मत्कर्तृकं कार्यम्' इति बोद्धृता; दक्षिणापरिक्रीतत्वेन तेषामन्यार्थत्वात् ।

अतः "स्वर्गकामो यजेत" इत्यादौ न नियोज्यविषयान्वितकार्यताधीः; किंतु देवताराधनात्मकतया यागस्य कर्तृव्यापारसाध्यत्वधीरेव ।

अथ को लिङादिवाच्यः? "विधिनिमन्त्रण" इत्यादौ विध्याद्यर्थेषु हि लिङादिस्मृतिरिति; उच्यते—इष्टतत्साधनयोरन्यतरस्य पुरुषव्यापारसाध्यत्वमेव हि विधिरिति । विधिः प्रेरणेति हि शाब्दाः । प्रेरणा च प्रवर्तकत्वम्[1] । तच्च पुरुषविशेषं प्रति साध्यस्यैवेति तदेव विधिरूपोऽर्थः । साध्यत्वावगतौ हि पुरुषः प्रयतत एव । तदुक्तं वेदार्थसंग्रहे—"इच्छाविषयतया प्रतीतस्य स्वयत्नोत्पत्तिमन्तरेणासिद्धिरेव प्रेरकत्वम् । तत एव प्रवृत्तेः" इत्यादिना । तत्रेच्छाविषयतयेत्युक्तिरिष्टसाधनस्यापि प्रदर्शनार्था; तस्यापि साध्यत्वाविशेषात् । अत एव हि तत्र "यज देवपूजायामिति देवताराधनभूतयागादेः प्रकृत्यर्थस्य कर्तृव्यापारसाध्यतां लिङादयोऽभिदधति" इत्युक्तिः । अतः प्राप्ताप्राप्तविवेकेन साध्यत्वमेव लिङादिवाच्यो विधिः । तदाश्रयो यागादिस्तु विधेयः । अस्मिन्मते भावार्थस्यैव विधेयत्वमिति न निर्बन्धः; दध्यादीनामपि होमसाधनत्वाकारेण साध्यत्वाद्विधेयत्वोपपत्तेः । गुणानुरक्तभावार्थस्य विधेयत्वं तु हेयम्; होमादिभावार्थस्य प्राप्तत्वात् । भावार्थस्यैव विधेयत्वे च सर्वत्र श्रुतिविधेयतैव स्यात्; लिङाद्याश्रयतया क्लृप्तस्यैव सर्वत्र विधेयत्वात् । तथाच न[2] वाक्यादिविधेयम् ।

---

1. प्रवर्तकत्वमिति । प्रवर्तनत्यर्थः । अयं भावः—विधिनिमन्त्रणेति सूत्रे विध्यादीनां चतुर्णां प्रवर्तनामुखभेदेन ग्रहणं कृतम् । अतश्चतुष्टयसाधारण्येन प्रवर्तनैव लिङर्थः । यथाहुः—

"अस्ति प्रवर्तनारूपमनुस्यूतं चतुर्ष्वपि ।

तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया ॥"

इति । यद्विषयकत्वेन ज्ञानस्य प्रवृत्तिजनकत्वम्, सैव प्रवर्तना । स च विषयः इष्टसाधनतैवेति सैव विध्यर्थ इति भावः ।

2. न वाक्यादीति । श्रुत्यर्थविधानं क्वचित्, क्वचिच्च वाक्यार्थविधानमिति मीमांसकेष्ट न सिध्येदिति भावः ।

किंच दध्यादि च वाक्यविधेयम् । जुहोतिसमभिव्याहारात् तस्य साध्यत्वावगतेः । न हि दध्नेति पदमात्रात् साध्यत्वावगतिः । सिद्धरूपस्यापि दध्यादेः परिस्पन्दात्मकतया साध्यता, होमान्वितदधिसाधनत्वादेरपि वाक्यार्थतेति न क्रियादेरेव वाक्यार्थता । अन्यान्वितस्वार्थाभिधायित्वं वाक्यानामिति च वक्ष्यते[1] । अतः साध्यत्वमेव सर्वत्र विध्यर्थः ।

नन्वज्ञातज्ञापनं विधिरिति[2] व्यवहारो भाष्यादौ । शक्तिश्च ज्ञापनमिति—तन्न; विधिवाचकत्वेन शब्दे तन्निर्देशस्य लाक्षणिकत्वात् । अथवा यत् अज्ञातं तदेव ज्ञाप्यत इत्यज्ञातज्ञापनम् । तस्मात्[3] तदर्थात् तस्य तज्ज्ञेयतैव सिध्यतीत्यर्थः । [4]अज्ञाते हि ज्ञानविषयत्वयोग्ये ज्ञेयत्वबुभुत्सेति ज्ञानकर्मत्वाकारेण साध्यतेति प्रेरकत्वमिति तस्य विधित्वोपपत्तिः । किंच शब्दगतज्ञापनरूपशक्तेश्च न शब्दवाच्यतेति न विधित्वोपपत्तिः । शब्दधीतद्वाचकशक्तिभ्यामन्य एव 'यजेत' इत्यादिशब्दवाच्यः । कर्तृवाचकलिङादिप्रत्ययस्य [5]तद्वाचकत्वं च यागादिप्रकृत्यर्थस्य [6]तद्व्यापारसंबन्धप्रकारवाचित्वद्वारा । तदुक्तं वेदार्थसंग्रहे—"कर्तृवाचिनां प्रत्ययानां प्रकृत्यर्थस्य कर्तृव्यापारसंबन्धप्रकारो हि वाच्यः" इत्ययादिना । [7]अथवा लिङादिपदरहितवाक्येषु अर्थस्य तथा ज्ञाप्यमानत्वात् तत्र च विधिवाचकप्रत्ययाभावात् तत्पदयुक्तवाक्येषु विधिवाक्यत्वेन विधिव्यवहारदर्शनादन्यत्रापि तद्व्यवहारो लक्षणयैवास्तु ।

---

1. वक्ष्यत इति । अन्विताभिधानप्रकरण इति शेषः ।

2. विधिरितीति । अज्ञातज्ञापनं विधिरिति व्यवहारात् अभिधैव भावना विधिरिति न्यायरत्नमालाकृतः पार्थसारथिमिश्रस्य पक्षो भाष्यसंमत इति शङ्कितुराशयः ।

3. तस्मादिति । अज्ञातज्ञापनपदस्यैवमर्थकत्वात् अज्ञातं यत् ज्ञाप्यं स विधिरित्येव सिध्यतीत्यर्थः ।

4. अज्ञातं सर्वं कथं विधिः स्यात्, प्रेरकत्वस्यैव विधित्वादित्याशङ्क्य अज्ञाते सर्वत्र प्रेरकत्वं केनचिद्रूपेणोपपादयति—अज्ञाते हीति । ज्ञानविषयभावार्हेऽस्य जिज्ञासा जायते । ज्ञानकर्मत्वार्हं च तद् ज्ञानकर्मतया बुभुत्सासाध्यं भवति । यच्च साध्यं तत् स्वर्गादि लोके प्रेरकं प्रयोजकमिति व्यवह्रियते । अतोऽज्ञातस्य सर्वस्य विधित्वमित्याशयः ।

5. तद्वाचकत्वम् । विधिवाचकत्वम् ।

6. तद्व्यापारेति । कर्तृव्यापारेत्यर्थः ।

7. प्रवर्तकवाक्यापेक्षयान्यत्राज्ञातज्ञापकवाक्येषु विधिव्यवहारो लक्षणयैव । ततो न तत्र विधिशब्दमुख्यार्थसमन्वयश्चिन्तनीय इति पक्षान्तरमाह—अथवेति ।

[1]ननु श्रीगीताभाष्ये "यः शास्त्रविधिमुत्सृज्य" इत्यत्र "शास्त्रं वेदः, विधिरनुशासनम्" इत्यनुशासनस्य विधित्वमुक्तम्। तथा भाष्येऽपि सांख्यपक्षनिराकरणाधिकरणे च "स्वशासनावबोधि शास्त्रं च प्रदर्श्य" इति शास्त्रस्य शासनावबोधित्वमुच्यते। अतः शासनं नियोगः प्रेरणेति पर्याया इति पुरुषगतधर्म एव विध्यर्थत्वेनाभिप्रेत इति चेत्—तन्न; "तत्रेष्टसुखादिना पुरुषेण स्वप्रयत्नादृते यदि तदसिद्धिः प्रतीता, ततः प्रयत्नेच्छुः प्रवर्तते" इत्यारभ्य "इच्छाविषयस्य प्रेरकत्वं च प्रयत्नाधीनसिद्धिकत्वमेव; तत एव प्रवृत्तेः। तथा विधिवाक्येष्वपि धात्वर्थस्य कर्तृव्यापारसाध्यतामात्रं शब्दानुशासनसिद्धमेव लिङादेर्वाच्यम्" इत्यन्तभाष्यविरोधात्; पूर्वोदाहृतवेदार्थसंग्रहविरोधाच्च। तत्र हि कर्तृव्यापारसाध्यत्वमेव लिङादिवाच्यमिति कण्ठोक्तम्।

"यः शास्त्रविधिम्" इत्येतच्छ्लोकभाष्ये तु विधिशब्देन विधायकशास्त्रमभिमतम्। अत एव हि "वेदाख्यं मदनुशासनमुत्सृज्य" इत्युक्तिः। न हि वेदः पुरुषधर्मः।

भाष्ये तु शासनशब्दः कर्मादिकर्तव्यतापर उक्तः। अत एव हि तत्रैव भाष्ये—"एतानि कर्माणि समीचीनानि; एतान्यसमीचीनानीति कर्मद्वैविध्यं संविधाय" इत्याद्युक्त्वा "स्वशासनावबोधि शास्त्रम्" इत्युक्तिः। शासनमपि वस्तुतः परस्य हितार्थकर्तव्यताज्ञापनमेव। ज्ञापनं च ज्ञाप्यनिष्ठमिति ज्ञाप्यं कर्तव्यमेव प्रेरकम्। न हि कर्तव्यत्वानवगतौ शासनमात्रात् स्वतन्त्रपुरुषप्रवृत्तिः। शासनमात्रात् प्रवृत्त्युक्तिस्त्वौपचारिकी। वेदस्य परमात्मशासनत्वं तु परमहितैषिपरमात्महृदयनिहितार्थावबोधित्वात्।

न च तथात्वे वेदस्यानित्यतापि; सर्वदा तदर्थैकरूप्यात्। अतो ज्ञाप्यसाध्यार्थिपुरुषापेक्षयैव प्रैषादिव्यवहारः।

एतेन न्यायकलापेनैतदपि निरस्तम्—"आप्तस्य हितकामस्य नियोगो विधिः प्रवर्तना" इति यदस्मदीयैकदेशिभिरुक्तम्। तत्पक्षो भाष्यादिविरुद्धश्च।

---

1. आप्ताभिप्रायो विधिरिति उदयनपक्षो भाष्यसंमत इति शङ्कते—नन्विति।

[1]कर्तृवाच्यत्वसाधनप्रसङ्गात् विध्यर्थोऽपि निर्णीतः । अधिकार्यपि न कर्त्रतिरिक्तः; तस्यैव कर्मैश्वरत्वसाधनात् । कर्मैश्वर्यमेव हि परेषामधिकार इष्टः । स तु पृथक्त्वेनेष्टश्च । अधिकारित्वं स्वामित्वम् । कर्तृत्वं तु क्रियाशेषत्वमिति विरोधीति । कर्तुः शेषत्वनिरासात् तत् निरस्तम् ।

अतः षष्ठाध्यायोऽपि कर्तृनिरूपणपरः । नियोज्योऽपि स एव; तस्यैव फलभाक्त्वेन नियुज्यमानत्वात्; "शास्त्रफलं प्रयोक्तरि" इति न्यायात् । नियोज्यतापि भाष्यकाराङ्गीकृता । यत एवमुक्तं श्रीगीताष्टादशाध्याये—"नन्वेवं परमात्मायत्ते जीवात्मनः कर्तृत्वे जीवात्मा कर्मण्यनियोज्यो भवति" इति ।

तस्य स्वर्गकामादिपदसमर्प्यता तु नेष्टा । किंतु आर्थ एव । यत एवमुक्तं वेदार्थसंग्रहे—"स्वर्गकामो यजेत" इत्यादिषु लकारवाच्यकर्तृविशेषणसमर्पणपराणां स्वर्गकामादिपदानां नियोज्यसमर्पणपरत्वं शब्दानुशासनविरुद्धत्वेनावगम्यते" इति ।

आर्थो नियोज्योऽपि न कार्यबोद्धा । किंतु स्वेष्टसाधनस्य स्वकर्तृकत्वबोद्धा । तथात्वावगतौ हि नियोज्यते पुरुषः । प्रेर्यत्वमेव हि नियोज्यत्वम् । तस्य आर्थता च साङ्गाध्ययनादीषदर्थावबोधे रागान्मीमांसाप्रवृत्तौ च निर्णीतवेदार्थपुरुषस्याविधितः सिद्धत्वात् । विषयस्वभावादेवार्थज्ञानसिद्धिः । रागान्मीमांसाप्रवृत्तिश्च भाष्योक्ता ।

अतो नियोज्यत्वावस्थायाः कर्तृत्वातिरिक्तत्वेऽपि नियोज्योऽर्थसिद्ध इत्यलमतिविस्तरेण ।

अतः कर्तृकरणादिसर्ववस्तूनां ब्रह्मविशेषणत्वेन तद्वाचकसर्वशब्दानां तत्तद्विशेषणविशिष्टपरमात्मवाचित्वात् परब्रह्मभूतः परमात्मा नारायण एव सर्वपदवाक्यानामर्थ इत्ययमेवार्थोऽनवाप्तप्रतिपक्षाद्यवस्थः सुस्थः प्रकाशते सर्वत्रेति सर्वं निरवद्यम् ।

1. **कर्तृवाच्यत्वेति** । कर्तुर्लिङादिवाच्यत्वेत्यर्थः ।

मीमांसाख्यमहावह्नेः प्रदीपोऽयं प्ररोपितः ।
अज्ञानतमसा छन्नदृष्टीनामर्थसिद्धये ॥

स्वहस्तावाप्तवाक्यार्थप्रदीपस्य मनीषिणः ।
उपायोपेयसंसिद्धौ न क्लेशो न च वि(नि)ग्रहः[1] ॥

इति
श्रीमदात्रेयनाथसूरिसूनुमेघनादारिसूरिविरचिते
नयद्युमणौ
वाक्यार्थप्रदीपाख्यं प्रकरणम् ।

1. विग्रहः । विपरीतग्रहः; विमतिरिति यावत् । प्रदीपाभावे विपरीतग्रहो भवेत्; न त्वस्मिन् सतीति प्रकृतानुकूलं व्याख्येयम् । निग्रह इति पाठकल्पने तु परैः पराजयो नेत्यर्थः स्पष्ट एव ।

## ५. अन्विताभिधाननिरूपणम्

[1]अन्वितार्थाभिधायित्वमूरीकृत्य प्रसाधितम् ।
[2]परब्रह्माभिधेयत्वं वाक्यानां तत् प्रसाध्यते ॥

अर्थान्तरसंसृष्टस्वार्थाभिधायीनि पदानीति हि दर्शनम् । अत एवमुक्तं वेदार्थसंग्रहे—"एवमेव सर्वपदानां स्वार्थाभिधायित्वं संघातविशेषाणां

1. अन्वितेत्यादि । इदमत्रावधेयम् - वाक्यार्थप्रतीतिविषये मीमांसकानां मतद्वयमस्ति - अन्विताभिधानम्, अभिहितान्वयश्चेति । तत्र प्रथमपक्षः प्राभाकराणाम् । द्वितीयो भाट्टानाम् । प्रथमस्वरूपनिरूपणं यथा प्रकरणपञ्चिकायाम्—

"पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकम् ।
नयसंपादितव्यक्ति पश्चाद् वाक्यार्थबोधकम् ॥"

इति । श्रुतं पदजातं वाक्यार्थबोधकमित्यन्वयः । अयं भावः—प्रथमतो वाक्यश्रवणकाले पदानि श्रूयन्ते । तानि च पूर्वमेवार्थविशेषेषु व्युत्पन्नानि अत्र वाक्ये श्रूयमाणानि एकसबन्धिज्ञानमपरसबन्धिस्मारकमिति न्यायात् तानेवार्थविशेषान् स्मारयन्ति । एवं पृथक् स्मृतेष्वर्थेषु आकाङ्क्षादिभिः परस्परमन्वये संपादनीये श्रुतिलिङ्गादिभिर्न्यायैरङ्गाङ्गिभावनिर्णयो भवति । ततो नानाविशेषणविशिष्टप्रधानैकार्थप्रतीतिः । स एव च वाक्यार्थः । स च पदशक्त्यैव जन्यते । अतः 'पदजन्यपदार्थोपस्थितिः शाब्दबोधे हेतुः' इति व्युत्पत्तिभङ्गोऽपि न । प्रथमजातविशकलितार्थप्रतीतेः स्मरणरूपत्वात् न तत्र पदशक्तिः । अत एकैव पदशक्तिर्योग्येतरान्वितं स्वार्थमभिदधातीति न शक्तिद्वयकल्पनमपि ।

अभिहितान्वयपक्षस्तु—प्रथमं श्रुतैः पदैः परस्परानन्विताः स्वार्था अभिधानशक्त्या बोध्यन्ते । एवमभिहितानां पदार्थानां योग्यतादिवशात् परस्परमन्वये नानापदार्थसंसर्गात्मको वाक्यार्थः प्रथमावगतैः पदार्थैरेव बोध्यत इति ।

अत्र पक्षे पदानां शक्तिरेका ; पदार्थानां संसर्गरूपवाक्यार्थबोधनशक्तिरपरा ; पदानामेव पदार्थेषु संसर्गबोधनशक्तिजनकशक्तिरन्येति शक्तत्रयकल्पनमापततीति गौरवमाविष्कुर्वन्ति अन्विताभिधानवादिनः ।

अनयोश्च पक्षयोः प्रथम एव श्रीभाष्यादिग्रन्थारूढ इति निरूप्य तमेवाद्रियतेऽयं ग्रन्थकारः । एतद्विसारस्तु न्यायपरिशुद्धिसर्वार्थसिध्योरवगन्तव्य इति ।

2. परब्रह्माभिधेयेत्यत्र बहुव्रीहिः । अभिधायित्वमिति पाठश्चेत् न क्लेशो भवेत् ।

च यथावस्थितसंसर्गविशेषवाचित्वं च जानाति" इति । संघातः संबन्धः; स एव विशेषो येषां पदानां, तानि वाक्यानि । संबन्धविशिष्टानि पदानि वाक्यानीत्यर्थः । तेषाम् । यथावस्थितः संसर्गो विशेषः येषां पदार्थानां ते यथावस्थितसंसर्गविशेषाः; तद्वाचित्वम्; अर्थान्तरसंसृष्टपदार्थवाचित्वमित्यर्थः । अत एव ह्युत्तरत्र "समभिव्याहृतपदान्तरवाच्यान्वययोग्यमेवेतरपदप्रतिपाद्यमित्यन्विताभिधायिपदसंघातरूपवाक्यश्रवणसमनन्तरमेव प्रतीयते" इत्युक्तिः ।

अतः संसर्गरूपोऽन्वयो न वाक्यार्थोऽभिमतः । अनुपपन्नश्च, अन्वितस्यैव पदात्मकवाक्यप्रतिपाद्यत्वात् । वाचकत्वेऽप्येतदविशिष्टम् । अन्वितवाचकतैव हि वाक्यव्यापारः । एतेनानन्दमयाधिकरणे "सर्वेष्वेव वाक्येषु पदानां व्युत्पत्तिसिद्धार्थसंसर्गविशेषमात्रं प्रत्याय्यम्" इति भाष्यमपि व्याख्यातम् । अत एव ह्युत्तरग्रन्थे "तत्र समानाधिकरणवृत्तानामपि नीलादिपदानां नैल्यादिविशिष्ट एवार्थो व्युत्पत्तिसिद्धः पदान्तरार्थसंसृष्टोऽभिधीयते" इत्युक्तिः ।

अथवा वाक्यानामान्वितपदार्थाभिधायित्वेऽप्यथाना पदमात्रावगम्यत्वात् अन्वयस्यैवावशिष्टत्वात् तस्यैवार्थाद्वाक्यात् सेत्स्यत्वात् "संसर्गविशेषवाचित्वम्" इत्याद्युक्तिः । वाक्यमप्येकार्थवशीकारलब्धैकसंघातरूपधर्मकाणि पदान्येव । अन्यथा तत्संघातरूपधर्मस्य वाक्यत्वे वाक्यस्य शब्दता न स्यात् । अर्थगतसंघातरूपधर्मस्यार्थत्वे च न शब्दता । न हि शब्दगतो धर्मः शब्दः । अत एवमुक्तं भाष्ये प्रथमसूत्रे स्फोटनिराकरणे "गकारादिबोधकस्यैव श्रोत्रग्राह्यत्वेन शब्दत्वात्" इति । वर्णा एव शब्दाः । तेषां पदत्वव्यवहारस्त्वेकार्थवशीकारादेव ।

[1]एवमुदाहृतभाष्यादिभिरन्वितस्वार्थाभिधायित्वमेवाभिमतम्; नैल्यादिविशिष्ट एवार्थः पदान्तरसंसृष्टोऽभिधीयत इति द्रव्यस्य याक्यार्थत्वाभिमानात् । अन्यथा तादृशान्वितक्रियाभिधेयत्वोक्तिः स्यात् । अत एव हि तत्रैव "'नीलमुत्पलमानय' इत्युक्ते नीलिमादिविशिष्टमेवानीयते" इति द्रव्यप्राधान्यनिर्देशः । नीलमिति कर्मान्तरतया निर्दिष्टस्य क्रियेप्सितस्य क्रियाशेषत्वोपपत्तिश्च । तथोत्तरत्रापि "यथा च विन्ध्याटव्यां

1. कार्यं वा क्रिया वा सर्वत्र वाक्यार्थ इति न; द्रव्यादेरपि वाक्यार्थत्वमिष्टमित्याह—एवमिति ।

मदमुदितो मातङ्गगणस्तिष्ठतीति पदद्वयावगतविशेषणविशिष्ट एवार्थः प्रतीयते" इति ग्रन्थे विन्ध्याटव्यादिसंबन्धिमातङ्गगणार्थपरत्वमुक्तमिति प्रतीयते।

अत एव ह्युत्तरग्रन्थे "तत्तद्विशेषणविशिष्टमेव ब्रह्म प्रतिपत्तव्यम्" इति ब्रह्मपरत्वाभिधानम्। 'स्वर्गकामोऽग्निहोत्रं जुहुयात्' इत्यादौ क्रियाप्राधान्यमुक्तम्, धात्वर्थस्यैव साध्यत्वाभिधानात्। यागादेः कर्तृफलार्थत्वतो न क्रियाप्राधान्यहानिस्तत्र। अतो द्रव्यगुणकर्मस्वन्यतमार्थान्वित[1]स्वार्थाभिधायित्वमेव वाक्यानामिष्टं भाष्यकारस्य। स्फोटस्य तु न वाक्यत्वमिति वाक्यार्थप्रकरण उक्तं वाक्यार्थप्रदीपे। अतो न ततो बोधः। वाक्यशेषादिना देवताप्राधान्यं[2] वेदे सर्वत्र शास्त्रे वाऽस्तु। लोके तु गवानयनं कार्यमित्यादौ गवान्वितक्रिया वाक्यार्थः। बौद्धाभिमत[3]विज्ञानादिवाक्यं तु लोकाप्रसिद्धमिति न तदुपन्यासः। अतो वर्णानामेव वाक्यत्वं सर्ववैदिकानामिष्टम्।

अतः तदङ्गीकारेणान्विताभिधानमेव साध्यते। भाट्टास्तु तत्र परिपन्थिनः। प्राभाकरा अप्यर्थान्तरान्विताभिधानपरिपन्थिनः। अतः पूर्वकाण्ड उक्तमिति पुनरुक्तिरप्रसक्तेति पृथक्साधनार्थवत्ता।

तथाहि—पदैरभिहिता अर्था वाक्यार्थं प्रतिपादयन्ति। न तु पदान्यर्थान्तरान्वितस्वार्थाभिधायीनि; अन्वयेऽन्वितपदार्थे चाभिधानशक्तिद्वयकल्पनागौरवात्।

न चान्वित एव शक्तिः; न [4]पृथगन्वय इति; विशिष्टादर्थाद्विशेषणस्यार्थान्तरत्वाद्विशेषानुपपत्तेः; पदार्थानां सर्वावस्थानां स्वरूपस्य समत्वात्, अन्वितत्वस्य च तदवस्थाविशेषत्वादाक्षेपलभ्यत्वात् पदार्थानामेव वाक्यार्थबुद्ध्युत्पादकत्वोपपत्तेः।

---

1. स्वार्थेत्यारभ्य गवान्वितेत्यन्तो भागः A. कोशे न दृश्यते।

2. देवताप्राधान्यमिति। यागापेक्षया देवतायाः प्राधान्यम्, इष्टसाधनस्य प्रधानार्थत्वम्, इष्टसाधनत्वेन ब्रह्मण एव वाक्यार्थत्वं च प्राक् वर्णितं स्मारितमिव। शास्त्रे इति स्मृतिग्रहणम्।

3. विज्ञानेति। ज्ञानातिरिक्तपदार्थानङ्गीकारात् वाक्यर्थश्च विज्ञानमेवेति तन्मतम्। तत्त्वबिन्दुग्रन्थेऽपि स्पष्टमेतत्।

4. पृथगिति। अन्वयमात्रे शक्तौ विशेषावगमो न स्यादिति न तन्मात्रे शक्तिरित्यर्थः।

नन्वेवं तर्हि 'गामानय' इत्यादौ गवानयनस्य नान्वयनियमः; क्रियायाः कारकमात्राकाङ्क्षित्वात् अश्वादेरप्याक्षेपसंभवात् । कारकस्यापि क्रियामात्राकाङ्क्षित्वाद् बन्धनक्रियान्वयस्यापि संभवादिति—तन्न; पक्षान्तरेऽप्येतद्दोषसाम्यात् । 'गामानय' इत्युक्ते प्रमाणान्तरेण संनिहितान्वयवादिनापि योग्यान्विताभिधानसंभवात् । न च तथात्वे प्रतीयमानैकवाक्यत्वहानिरिति; अभिहितान्वयपक्षेऽप्यश्वान्वये तद्धानेः समत्वात् । यद्यपि क्रियायाः कारकमपेक्ष्यं सामान्यतः, कारकस्य च क्रिया अपेक्ष्या; तथापि प्रतिपादकपदद्वयस्यैकविशिष्टार्थप्रतिपत्तिपरत्वलक्षणैकवाक्यत्वप्रतीत्यविरोधात् श्रुतार्थयोरेव परस्परनियमः । अतो न पदार्थसामर्थ्यमात्रादन्वितत्वधीरिति नातिप्रसङ्गः । अतो गवादिपदसमर्पितगवाद्यर्थाः स्वभावादेव येन केनचिदन्वितस्वात्मप्रतिपादकाः ।

किंच कथंचित् पक्षद्वयेऽपि दोषसाम्यापादनेऽप्यभिहितान्वय एव युक्तः । पक्षान्तरेऽपि हि पदार्थस्वरूपावगतिरभ्युपेया; अन्यथा संनिधेर्दुर्लभत्वात् । ततश्च पदार्थप्रतीत्युत्तरकालमेव वाक्यार्थावगतिरिति वाक्यार्थधियोऽर्थावगत्यानन्तर्यात् तत्कारणत्वमेव युक्तम् । न च पदार्थावगत्युत्तरकालमपि पदानुसंधानानुवृत्तिरिति; तत्र प्रमाणाभावात्; दीर्घतमवाक्येषु तदनुसंधानाशक्तेश्च । तत्सद्भावेऽपि पदार्थावगतिमात्राद्वाक्यार्थधीरित्येतत् सार्वजनीनम् ।

[1]यत्तु परैः पदानां प्राथम्यादन्विताभिधानमित्युक्तम, तत् पदार्थानामेव प्राथम्यसाधनाद्विपरीतसाधनत्वान्निरस्तम् । अभिधातृत्वं तु पदार्थद्वारैव, न स्वत इति पदार्थानामसिद्धम् ।

न च तात्पर्योपगमादन्विताभिधानशक्त्यभ्युपगमः; 'काष्ठैः पचति' इत्यादौ काष्ठादेर्ज्वालादिव्यवधानादपि पाकसाधनत्वस्येष्टत्वात् । व्यवधाननिश्चयात् पदार्थानुसन्धानानन्तरितवाक्यार्थे साक्षात्पदार्थसाधनत्वात् तेषां तद्द्वारेणैव साधनत्वादव्यवहितमेव साधनत्वम् । अतः

"प्राथम्यादभिधातृत्वात् तात्पर्योपगमादपि ।
पदानामेव सा शक्तिः परमभ्युपगम्यताम् ॥"

1. यत्तु इत्यादिना
"प्राथम्यादभिधातृत्वात् तात्पर्योपगमादपि ।
पदानामेव सा शक्तिर्वरमभ्युपगम्यताम्"
इति प्राभाकरकारिकोक्तं क्रमेण दूषयति । वक्ष्यति चैतत् ।

इति परोक्तं हेतुत्रयमप्यनुपपन्नम् ।

नन्वेवं पदानां नाभिधायकत्वम्, पदार्थस्वरूपावगतेः स्मरणादविशिष्टत्वादिति—तन्न; शब्दानन्तरमर्थप्रत्ययदर्शनात् प्रत्यायकत्वस्यैव कल्प्यत्वात् । न च शब्दाद्बोधः, ततोऽर्थसिद्धिरिति; प्रमाणाभावात् । किंच न ह्यभिधानत एवान्वितधीः । किं तर्हि? गङ्गाघोषादौ लाक्षणिकतीरादेर्घोषाद्यन्वितत्वधीः । न हि तीरादिर्गङ्गाशब्दाभिधेयः । प्रागेवान्वितः[1] ।

ननु गङ्गाशब्दस्य स्वार्थसंबन्धितीरादिस्मारकत्वात् तत्स्मारितार्थान्वितं घोषशब्दः स्वार्थमाहेति—तन्न; गङ्गाघोषादिवाक्येषु सर्वपदानां लक्षणावृत्तत्वादन्विताभिधानप्रतीत्यभावापातात् । प्राभाकरा हि लिङादीनां कार्यमेवाभिधेयम्; अन्यपदानां तदन्वितोऽर्थ इत्याहुः । न हि गङ्गाघोषादिवाक्येषु कार्यं तदन्वितो वार्थः । अन्वितधीस्तु तेषामप्येव वास्तु; साधुपदस्मारितार्थान्वयनियमो वेति सर्वत्र तथैवास्तु । पदार्थानामन्वये चाकाङ्क्षायोग्यतैकवाक्यत्वानि सहकारीणि सन्तु ।

किंच किं सामान्येनान्विताभिधानम्? उत विशेषेणेति । न तावदाद्यः; अर्थशक्त्यादितस्तत्संभवात् । अनन्यथासिद्धौ हि कल्पना । सामान्यतोऽभिधाने विशिष्टबुद्ध्यनुदयप्रसङ्गश्च । न हि सामान्यान्विताभिधानस्य विशेषे शक्तिः । पदार्थानां ह्यन्वयोऽभ्युपेतः । नापि द्वितीयः; विशेषानन्त्यात् प्रतियोगं प्रतिपदं च शक्तिकल्पनापत्तेः; संबन्धग्रहणाशक्तौ शाब्दव्यवहारोच्छेदप्रङ्गाच्च ।

किंच किं पदान्तरेणान्विततयोक्तेनार्थविशेषेणान्वितः स्वार्थो वाच्यः पदान्तरेण? उत नेति? न तावदाद्यः; अन्योन्याश्रयणात् । नापि द्वितीयः; पदान्तरवैयर्थ्यात् । अन्यपदानुक्तार्थेनाप्यन्वितस्वार्थाभिधाने किं पदान्तरेण? किंच आन्वितपदार्थाभिधानमत्र शक्त्यैवेति पक्षान्तरे गौरवम् ।

तथाहि—पदानामर्थस्वरूपे शक्तिकल्पनमुभयोः साधारणम् । अभिहितान्वयपक्षे तु पदार्थानामन्वितप्रतिपादकत्वं क्लृप्तमेव । नियममात्रं त्वेकवाक्यतया कल्प्यम् । तत्तु लघीयः । पदानां त्वत्यन्तमक्लृप्तमेव सामर्थ्यमन्विते । तत् कल्प्यम् । स्वरूपक्लृप्तिश्च गुर्वी नियमकल्पनादिति ।

---

1. प्रागेवेति । अभिधानस्यैवाभावे नतरामन्वितत्वाभिधानमित्यर्थः ।

[1]तदेतदनुपपन्नम् । 'गामानय' इत्यादिवाक्येषु बालैरर्थान्तरान्वितस्वार्थ- एव पदानां व्युत्पाद्यमानत्वान्नाक्लृप्तमेवान्वितप्रत्यायकत्वम् । यच्चोक्तम्—

"क्लृप्तमन्वितसामर्थ्यं पदार्थानां स्वभावतः ।
एकवाक्यतया तत्र कल्प्यं नियममात्रकम् ॥"

इति ; तच्च गरीयः । वाक्यार्थग्रहणे हि पदार्थानामपृथग्ग्रहणम् । बालो हि गवानयनादिवाक्यश्रवणसमनन्तरं मध्यमवृद्धप्रवृत्तिलिङ्गेन तस्येष्टसाधनत्व- धियमनुमाय तस्याः शब्दानन्तर्यात् कारणत्वमात्रं प्रथममनुमिनोतीत्यविशेषेण प्रथमं समुदितार्थमेव शब्दार्थतयावगच्छति ।

अतश्च 'गां बधान' इत्यादौ बन्धनाद्यन्वितगवाद्यर्थप्रतीतेरावापो- द्धाराभ्यामन्वितार्थमेवावैति । तथा 'देवदत्त, अनेन मार्गेणापसर ; आगच्छ' इत्यादावर्थान्तरान्वितक्रियावगतिः । एवम् 'देवदत्तस्य स्थितिः' 'राजात्रास्ते' 'पितरं पश्य' इत्यादौ सिद्धार्थपरेष्वप्रवृत्तिपरेषु च व्युत्पत्तिः ।

न चान्वयेऽन्विते च शक्तिकल्पनागौरवम् ; अन्वित एव शक्ते- रन्यत्राकल्पनात् । न ह्यानयनादिसाध्यगवाद्यवगतौ साध्यसाधनत्वरूपान्वयस्य पृथक् प्रत्ययः ; तस्यापि विशिष्टप्रतीत्यन्तर्भावात् । अन्यथा अन्वयरूपविशेषणस्य पृथक्प्रत्याय्यत्वे [2]यदाग्नेयादिवाक्यानां विशिष्टार्थपरतया न वाक्यभेदपरिहारः स्यात् ; विशेषणविशेष्यसंबन्धानामपि पृथक्प्रत्याय्यत्वात् ।

किंच शब्दव्यतिरेकेण प्रत्यक्षेणैवानयनसाध्यगवाद्यर्थग्रहतः साध्य- साधनत्वग्रहे प्रत्यक्षस्य पृथक् शक्तिरस्ति? न वा? आद्ये स्वानुभवविरोधः । द्वितीयस्त्वस्मत्सिद्धान्तानुकूलः । अतः शब्देऽपि प्रत्यक्षवदेव शक्तिकल्पना ; 'देवदत्त, गामानय' इत्यादौ शब्दानन्तरं देवदत्तकर्तृकक्रियासाध्यगवादेर्दर्शनादे- तदर्थप्रतिपादकत्वानुमानात् शब्दानाम् । न च पदमात्रप्रतिपादितपदार्थानां

---

1. एवं विस्तरेण भाट्टसंमतमभिहितान्वयपक्षमनूद्य खण्डपति- तदेतदित्यादिना ।

2. यदाग्नेयेति । "यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति" इति देवताद्यनेकविधानाद् वाक्यभेद इत्याशङ्क्य "तद्गुणास्तु विधीयेरन् अविभागाद् विधानार्थे, न चेदन्येन शिष्टाः" इति सूत्रेण सर्वविशिष्टक्रियारूपैकार्थ- विधानान्न वाक्यभेद इत्युक्तम् । आन्वितानाभिधाने विशकलितविधानात् पूर्वपक्षो दुष्परिहर इत्याशयः ।

विशेषरूपान्वितत्वस्याक्षेपलभ्यत्वात् नान्वयविशिष्टेऽपि शक्तिकल्पना, गौरवादिति; पदार्थानामेवान्वये वाक्यार्थबोधकत्वे च पदाभिहितानामेवान्वयानुपपत्तेः। प्रमाणान्तरसंनिहितस्याश्वादेरप्यानयनान्वयसंभवात्; वाक्यार्थस्याशाब्दत्वापाताच्च। आकाङ्क्षादावपि न विशेषः।

ननु प्रमाणान्तरसंनिहिताश्वाद्यन्विताभिधानसंभवः पक्षान्तरेऽपीति· न; तथात्वेनाव्युत्पत्तेः। शब्दसमर्पितार्थान्विताभिधानोपपत्तौ प्रमाणान्तरसमार्पितान्विताभिधानस्यानाकाङ्क्षितत्वाच्च। अभिधानाभिधेयापर्यवसाने त्वाकाङ्क्षितं योग्यं संनिधाप्यान्वितमभिधत्ते। एवं दहराक्षिविद्यादौ सकलेतरव्यावर्तकसत्यज्ञानादिगुणानुपदेशाद् ब्रह्मणोऽभिधेयत्वपूर्ताविनुपपत्तौ[1] आकाङ्क्षायामानन्दमयादिविद्योदितसत्यज्ञानादिगुणजातं संनिधाप्य तदन्वितं ब्रह्मोपास्यतयाभिधीयत इति भाष्यादौ प्रसाधनात् अभिधेयापर्यवसानादन्यतः संनिधानमिष्टम्। अध्याहारादिदर्शनाच्च। सौर्यादौ कर्मतन्त्रेषु सूर्यादिपदोहात् अभिधानापर्यवसानमपीष्टम; पक्षान्तरे तु पदेषु निवृत्तव्यापारेष्वर्थानां येन केनाप्यन्वितबोधकत्वमिति प्रसङ्गापरिहारः।

अथ पदाभिहितानामेवार्थानामपूर्तौ योग्याकाङ्क्षितसंनिहितार्थान्तरान्वयो लोकव्युत्पत्तित इति न दोषवैषम्यमिति; तर्हि पदेष्वर्थगतशक्त्याधानशक्तिकल्पनाधिक्यम्; व्युत्पत्तितः पदाभिहितानामेवान्वयसामर्थ्याङ्गीकारात्। अर्थानामेवान्वयस्वभावत्वे तु न पदाभिहितत्वापेक्षा। एतेन पदद्वयस्यैकविशिष्टार्थप्रतिपत्तिलक्षणैकप्रतीत्यविरोधाय श्रुतार्थयोरेव नियम इत्युक्तं निरस्तम; पदार्थानामन्वितबोधकत्वस्य पदावान्तरव्यापारत्वेऽपि पूर्वोक्तशक्तिकल्पनागौरवात्। पदार्थेऽप्यन्वितबोधकत्वशक्तिकल्पना चाधिका।

न च गवादिपदार्थानामन्वितबोधकत्वमिति न तत्कल्पनेति; 'दश दाडिमानि षडपूपाः कुण्डमजाजिनं पललम्' इत्यादिपदसमर्पितार्थानामन्वयबोधकत्वागतात्। न च तत्र पक्षान्तरेऽप्यन्विताभिधानं किमिति न स्यादिति; तत्र पदानां पदार्थमात्रनिर्देशपरत्वेन प्रकरणेनान्वितत्तयाऽनभिधानात्। पक्षान्तरे तु पदप्रतिपादितार्थानामन्वयस्वभावत्वमुक्तमित्यन्वयोऽवश्यंभावी। न चायोग्यत्वादनन्वय इति; स्वाभाविकत्वेऽप्ययोग्यत्वापातात्। अनन्वये च स्वभावहानिप्रसङ्गः। अथ स्वाभाविकत्वेऽपि योग्यत्वादिरपि सहकारीत्या-

---

1. पूर्ताविनुपपत्तौ। पूर्तिविषयेऽनुपपत्तौ सत्याम्।

काङ्क्षितयोग्याभिहितपदार्थान्वय इति; पदाभिहितघोषरूपयोग्यार्थलक्षिततीराद्यनन्वयप्रसङ्गात् । अतोऽर्थेष्वपि बोधकत्वशक्तिकल्पनाधिक्यम् ।

ननु पदानामन्वित एव शक्तिग्रहाभिधानात् 'दश दाडिमानि' इत्यादिपदानां न केवलार्थपरत्वमिति--तन्न; पदानां पृथक्पदार्थेष्वपि व्युत्पत्त्यभ्युपगमात् । न हि प्राभाकराणामिव वाक्येष्वेव व्युत्पत्त्यभ्युपगमोऽस्माकम् । 'अस्य शब्दस्यायमर्थः' इत्यादौ च व्युत्पत्तिर्हि पदेषु पृथग् दृश्यते । 'कोऽस्य वाचकः? अस्यायं वाचकः' इत्यादिप्रश्नोत्तराभ्यां च । एवं दृष्टे च, पदे वाक्ये च व्युत्पत्तिगौरवमिति न चोद्यम् । पदानामन्वितार्थबोधकत्वैकनियमे 'कोऽयम्? राजा' 'स्फ्यश्च कपालानि च' इत्यादिलौकिकवैदिकप्रयोगाणामानर्थक्यम् ।

न हि 'कोऽयम्? राजा' इत्यादिप्रश्नोत्तरपदानां क्रियाकारकाद्यन्वितपदार्थबोधकत्वम् । तथा स्फ्यश्चेत्यादीनां पदार्थस्वरूपोत्पत्तिपराणामपि । अतः पदार्थमात्रस्य बोध्यत्वाभिमतौ पदप्रयोगः, अन्वितार्थस्य बोध्यत्वाभिमतौ वाक्यप्रयोग इत्युभयथापि व्युत्पत्तिर्लोकसिद्धा । वाक्ये तु पदानामन्वित एव तात्पर्यम; न केवले । पदश्रवणात् पदार्थमात्रप्रतीतिस्तु स्मृतिरूपा; केवलप्रयोगे पदार्थानामनुभूतत्वात् । तदेवं पदानि श्रुतानि स्मारितानन्वितस्वार्थानि आकाङ्क्षायोग्यत्वादिप्रतिपादितन्यायकलापैः समुपेतवचनव्यक्तिकानि पश्चाद्वाक्यार्थबोधकानि । तदुक्तं न्यायज्ञैः—

"पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकम् ।
न्यायसम्पादितव्यक्ति पश्चाद्वाक्यार्थबोधकम् ॥"

इति ।

किंच अपूर्ववाक्यार्थवादिमते केवलपदार्थस्मृतिरनुपपन्ना, अन्वितपदार्थ एव व्युत्पत्तेः केवलपदार्थस्याननुभूतत्वात् । न चान्वितान्तर्गतत्वात् केवलस्वरूपस्यापि स्मृत्यर्हतेति; [1]अन्वयरूपसंबन्धस्य व्यतिरेकेण कदाचिदप्यनुपलब्धेः । अतः केवलपदार्थस्मार्यत्वसिद्ध्यर्थं पदार्थानां तत्परता अभ्युपेया । तत्परत्वाभावे च तदर्थस्मृत्यनुपपत्तौ नाभिमतार्थान्तरान्वितबोधकत्वोपपत्तिः ।

1. अन्वयति । तत्र तत्र वाक्यप्रयोगेऽनुभूतस्य तत्तत्सबन्धविशेषस्य मिथो व्यतिरेकसंभवेऽपि सामान्यतोऽन्वयस्यैव शक्यकोटिप्रवेशस्य शक्त्यानन्त्यपरिहाराय स्वीकार्यत्वात् तदुपस्थितेरवर्जनीयत्वाच्च नानन्वितार्थस्मरणं प्राभाकरमते स्यादिति तत्कारिका तेषामनुपपन्नेति भावः ।

पदानां वाक्यान्तरान्विताकारवदर्थस्मारकत्वानुपपत्तौ तदाकारवदर्थान्तरान्वित-स्वार्थाभिधायित्वप्रसङ्गात् । एवं तत्तद्वाक्येष्वपि प्रतियोगिसंबन्धित्वमेव स्मार्यमिति स्मृत्यनुपपत्तौ नान्योन्याश्रयपरिहारस्तन्मते । केवलपदार्थव्युत्पत्तौ तु वाक्यस्य प्रधानतयान्वितैकार्थपरत्वेऽपि तस्मिन् पदैः पदार्थानां स्मृत्यर्हतास्त्येव । स्मृतेषु न्यायापादितवचनव्यक्तिषु तदर्थवादिषु पदेषु तेषां वाक्यार्थबोधकत्वे तु नान्योन्याश्रयता ।

अन्वितबोधकत्वे चाकाङ्क्षादयः सहकारिणः । आकाङ्क्षा च बोद्धुः प्रतियोगिषु जिज्ञासा । सा चाभिधानाभिधेयापर्यवसानमूला । तदुक्तं नयज्ञैः—

"अन्वितस्याभिधानार्थमुक्तार्थघटनाय वा ।
प्रतियोगिषु जिज्ञासा या साकाङ्क्षेति गीयते ॥"

इति । 'देवदत्त, दण्डेन गामानय' इत्यादौ यद्यपि दण्डपदव्यतिरेकेण वाक्यपूर्तिः, तथापि श्रुतदण्डपदानर्थक्यपरिहाराय वाक्यप्रधानार्थस्य गोस्तद्विषयाकाङ्क्षा । यद्यपि पदार्थानामेव वाक्यार्थत्वम्, तथापि प्रधान-गुणभावेनैकार्थपरं वाक्यम्; प्रधानार्थत्वाद् गुणानाम् । तदुक्तम्—

"भूयांसो यद्यपि स्वार्थाः पदानां तत् पृथक् पृथक् ।
प्रयोजनतया त्वेकं वाक्यार्थं संप्रचक्षते ॥

तत्प्रतीत्येककार्यत्वाद्वाक्यमप्येकमुच्यते ।
प्रतिपत्तिर्गुणानां हि प्रधानैकप्रयोजना ॥"

इति । तदेवं प्रधानार्थत्वात् सर्वस्याकाङ्क्षापि तन्निमित्तैव । एवंविधा-काङ्क्षापि पदे विभज्यमाने । आकाङ्क्षाभावे तु नान्वयः । सापि प्रतियोगिषु कारणसंनिपातात् क्रमात् । यथा—'ब्रह्म विजिज्ञासस्व' इति ब्रह्मणो ज्ञेयत्वाभिधाने 'तत् किंलक्षणकम्?' इत्याकाङ्क्षायाम्, जगज्जन्मादिकारणतया लक्षिते, सकलेतरव्यावृत्तत्वेन तत्स्वरूपावगतिजिज्ञासायां [1]सत्यज्ञानादिभिस्तत्स्वरूपशोधने, प्राप्यत्वावगतौ, 'केन तत् प्राप्यते?' इत्याकाङ्क्षायाम्, वेदनाद्यपरपर्यायध्यान-प्राप्यत्वावगतौ, ध्यानस्वरूपावगतिजिज्ञासायां' दर्शनसमानाकारमाफलमसकृदावृत्तं ब्रह्मविषयस्मृतिसन्तानरूपमिति तदवगतौ, 'कथं तज्जन्यते?' इत्याकाङ्क्षायाम्,

1. जिज्ञासायामिति । आकाङ्क्षायामित्यर्थः; अवगतिशब्दस्य पृथक् प्रयोगात् ।

अनभिसंहितस्वर्गाद्युचितकर्मात्मज्ञानादिपरिकर्मितमनोजन्यमित्युक्ते, तत्सिद्धौ 'तस्य कथं प्रापकत्वम्?' इति जिज्ञासायाम्, ब्रह्मप्रीत्यापादनद्वारेति ब्रह्मण एवोपायत्वाभिधाने, 'कुत्र तस्य प्राप्यत्वम्?' इत्याकाङ्क्षायाम्, अर्चिरादिगत्या देशविशेषे इति तदवगतौ, 'तत्र तत्प्राप्य किं करिष्यति?' इत्याकाङ्क्षायां, सर्वप्रकारभोग्यं तद्ब्रह्मानुभवतीति जिज्ञासाक्रमेण सर्वो वेदभागः सर्वार्थान्वितं ब्रह्माहेति। तथा लौकिकवैदिकसर्वावान्तरवाक्यानामप्येवं जिज्ञासाक्रमेणान्विताभिधानं द्रष्टव्यम्। तदुक्तं नीतिज्ञैः

"जिज्ञासा जायते बोद्धुः संबन्धिषु यथा यथा।
तथा तथैव शब्दानामन्वितार्थाभिधायिता॥"

इति।

संनिधिर्नाम पदार्थस्य बुद्धौ विपरिवृत्तिः। तस्यास्तु शब्दजन्यतैवेति न निर्बन्धः; अध्याहृतार्थेनाप्यन्वयदर्शनात्। अध्याहारोऽपि न शब्दस्य; अर्थस्यैवोपपादकत्वेन तस्यानाकाङ्क्षितत्वात्। सोऽपि संनिधापकसामग्रीक्रमात् क्रमभावी। अन्वितबोधोऽपि तदनुरोधादेव। तदुक्तम्—

"सहसैव न सर्वेषां संनिधिः प्रतियोगिनाम्।
तथा तथा क्रमेणैव शब्दैरन्वितबोधनम्॥"

इति।

योग्यता नाम संबन्धार्हत्वम्। तदवगतिश्च प्रत्यक्षात्। यद्यपि वेदार्थस्य न प्रत्यक्षयोग्यत्वम्; तथापि सामान्येन लोके योग्यत्वावधारणात् तदपि। तदवधारणं समभिव्याहाराच्च। समभिव्याहारादपि लोके व्युत्पत्तिः। यथा 'उत्फुल्लोऽयं तामरसस्तिष्ठति' इत्यादावव्युत्पन्नतामरसार्थस्यापि पूर्वपश्चाद्योगितया पङ्कजपरत्वावधारणं तामरसशब्दस्य। वाक्यार्थावधारणोपयोगिन्यायस्वरूपं तदुपकारकत्वं च दृश्यते।

न्यायो[1] नाम तर्कः। तर्को विचारो विमर्श ऊहो मीमांसा च पर्यायाः। स चानुभूतिविशेषः; न तु स्मृतिः, तस्याः संस्कारमात्रजत्वात्। ज्ञानस्य प्रमाणार्हता विषयजत्वात्। स तु विषयः पूर्वं नानुभूत

---

1. आकाङ्क्षासंनिधियोग्यत्वादिप्रतिपादितन्यायसंपादितव्यक्तिकत्वस्य न्यायशकारिकाविवक्षितस्य विवरणे प्रवृत्तः आकाङ्क्षादिनिरूप्य न्यायं निरूपयति—**न्याय इति।**

इत्यनुभूतित्वमेव । ज्ञानस्य तु स्मृतित्वानुभूतित्वव्यतिरेकेण विधान्तरत्वं नेष्टम् । श्रीगीतापञ्चदशाध्याये उक्त ऊहः—"ऊहनमूहः । ऊहो नाम, इदं प्रमाणमित्थमेव प्रवर्तितुमर्हतीति प्रमाणप्रवृत्त्यर्हताविषयं [1]सामर्थ्यादिनिरूपणजन्यं[2] प्रमानुग्राहकं ज्ञानम्" इति । प्रमाणप्रवृत्त्यर्हत्वं नाम अर्थविशेषप्रतिपादनसामर्थ्यम् । तदेवोहज्ञानस्य विषयः साक्षात् परम्परया वा । ज्ञानं तन्निश्चयः, "ज्ञानं वस्तुनिश्चयः" इति तत्रैवोक्तत्वात् ।

अत एव हि 'न विलक्षणत्वात्' इत्यधिकरणभाष्ये "तर्को नामार्थस्वभावविषयेण वा सामग्रीविषयेण वा निरूपणेनार्थविशेषे प्रमाणं व्यवस्थापयत्तदितिकर्तव्यतारूपमूहापरपर्यायं ज्ञानम् । तदपेक्षा च सर्वेषां प्रमाणानां समाना । शास्त्रस्य तु विशेषेणाकाङ्क्षासंनिधियोग्यताज्ञानाधीनप्रमाणभावस्य सर्वत्रैव तर्कानुग्रहापेक्षा" इति भाषितम् । जगत्कारणतया प्रतिपाद्यवस्तुन ईक्षणनिरूपणात् श्रुतेः परमात्मकारणत्वपरत्वार्हतानिश्चयः । तद्विरुद्धस्वभावत्वनिरूपणात् प्रधानपरत्वनिरासश्चार्थस्वरूपनिरूपणतर्कस्योदाहरणम । जन्मादिवाक्यं न जगत्कारणवस्तुप्रतिपादनार्हम्, तस्यानुमानसिद्धत्वादिति सामग्रीविषयः पूर्वन्यायः । अन्येऽपि तर्कविषयाः प्रमाणान्तरासिद्धत्वादयः । प्रमाणान्तरासिद्धत्वं हि श्रुतिप्रामाण्यविघातसामग्री । तद्विषयानुमानस्य दुष्टत्वात् न प्रमाणान्तरसिद्धतेति राद्धान्तोऽपि तद्विषय एव । आकाङ्क्षादिसद्भावनिरूपणमपि सामग्रीनिरूपणमेव । आकाङ्क्षादयोऽपि सामग्रीकोटिनिविष्टा इति पूर्वोदाहृतभाष्य एव स्पष्टम् । अक्षयादिविद्यासु ब्रह्मणः सकलेतरवस्तुव्यावर्तनस्यापेक्षितत्वात् सत्यज्ञानाद्याकाङ्क्षितमिति आकाङ्क्षादिसामग्रीनिरूपणोदाहरणम् । अक्षयादिविद्यापरं वाक्यमानन्दमयादिविद्यासूदितसत्यज्ञानादियुक्ततया ब्रह्मप्रतिपादनार्हम्, तस्यास्तदाकाङ्क्षित्वात् । तदर्थसंगत्याद्याकाङ्क्षास्ति तद्विद्यासु, ब्रह्मणः सकलेतरव्यावृत्तत्वेन ध्येयत्वात् व्यावृत्तेश्च सत्यत्वाद्यधीनत्वादिति सामग्रीनिरूपणाधीनतर्कस्योदाहरणम् । एवं सर्वत्रोह्यम् ।

एवं प्रसङ्गादाकाङ्क्षादयोऽपि निरूपिताः । एतत् सर्वमभिहितान्वयपक्षेऽप्यविशिष्टम् । पदार्थानामन्वयबोधकत्वशक्त्यादिकल्पना त्वधिका ।

---

1. सामर्थ्यादीति । गीताभाष्ये सम्प्रति दृश्यमानः पाठः सामग्र्यादीति ।

2. सामर्थ्यादिनिरूपणजन्यम् । प्रमाणतद्विषयीभूतार्थयोः सामर्थ्यादिनिरूपणजन्यम् । आदिशब्दश्च प्रमाणप्रमेयसामग्र्यभिप्रायः ।

श्वेतिमाश्वत्वगन्तृत्वैः प्रत्येकं प्रमाणान्तरसिद्धैरन्योन्यान्वयदर्शनात् पदार्थानामन्वयशक्तिः क्लृप्तैव । तदुक्तम्—

"पश्यतः [1]श्वेतिमारूपं हेषाशब्दं च शृण्वतः ।
खुरनिष्पेषशब्दं च श्वेतोऽश्वो धावतीति धीः ॥"

इति । श्वेतिमारूपं श्वेतिमानवधारितगुणिविशेषं प्रत्यक्षेण पश्यत इत्यर्थः । हेषाशब्दादश्वत्वानुमा । खुरशब्दात् गन्तृत्वानुमा । एवमनुमानसिद्धार्थैरेव श्वेतोऽश्वो धावतीत्यपि धीरिति—तन्न; हेषाखुरशब्दाभ्यामश्वत्वगन्तृत्वयोरनुमानसमय एव हेषाखुरशब्दाश्रयपुरोवर्तिद्रव्यगतत्वेनान्विततयैवान्वीयमानत्वादनन्वयार्थनिमित्तत्वाभावात् । यत्र लिङ्गम्, तत्रैव हि लिङ्गिधीः । हेषाखुरशब्दोद्भवमुनिश्चयेऽपि नाश्वगन्तृत्वाश्रयनिश्चयः । पारिशेष्यादश्वत्वनिश्चयोऽप्यर्थापत्त्यैव । अर्थजान्वयधीः ।

किंच नार्थानामन्वयबोधकतोपपन्ना । प्रमाणषट्कव्यतिरिक्तप्रमाणानभ्युपगमात् ।

न च पदार्थप्रमाणता लोकसिद्धा । प्रमाणान्तरगम्यत्वे तु नार्थगम्यता । अर्थेषु शक्तिः कल्प्या । शब्दानां मुख्यत्वात् तत्रैव तत्कल्पनम् । न तु शब्देपश्चाद्भाव्यर्थेषु । पदेषु शक्तिश्चोभयाभ्युपेया । अन्वयरूपधर्म एव त्वाधिक्यम् । धर्मिकल्पनातो धर्मकल्पना तु लघ्वी ।

एतेन वाक्यार्थधियोऽर्थानन्तर्यान्न प्राथम्यं पदानामित्युक्तं निरस्तम्; पदानां साक्षादभिधातृत्वमसिद्धमिति च । वाक्यार्थधीरुभयसाधारणी ।

1. श्वतमारूपमिति पाठ्यमिति आरूपमित्यस्य ईषदभिव्यक्तस्वरूपमित्येवंरूपोऽर्थ इति च श्लोकवार्तिकन्यायरत्नाकरदर्शिनां सुगमम् । परं त्विदमत्रावधेयम्—श्वेतिमारूपमित्येव मातृकयोः, सर्वत्र श्लोकवार्तिककोशेषु ग्रन्थान्तरेषु च पाठो दृश्यते । श्वेतिमशब्दस्य नियतपुंलिङ्गत्वमभिसंधाय न्यायरत्नाकरे श्वेतमारूपमिति पठित्वा आङ ईषदर्थत्वमवलम्ब्य व्याख्यातम् । परं तु "लिङ्गमशिष्यं लोकाश्रयत्वात्" इति व्याकरणस्मृतिं प्रमाणीकृत्य श्वेतिमेति नपुसकलिङ्गे रूपमादाय श्वेतिमरूपमनिर्धारितगुणिविशेषं पश्यत इति, श्वेतिमेति स्त्रीलिङ्गे डाबन्तं रूपमादाय श्वेतिमाख्यं रूप पश्यत इति वार्थवर्णनमपि शक्यमिव भाति । इति स्थितस्य गतिश्चिन्तनीया । प्रमाणपरतन्त्राः सुधियेऽत्र प्रमाणम् ।

तत्कारणमत्र किं प्रथमप्रतिपन्नपदानि? उत परं प्रतिपन्ना अर्थाः? इति संशये प्राथम्यस्यैव प्राबल्यम् । अन्यथोपक्रमन्यायभङ्गः । अर्थानां तत्प्रतीतिजनकत्वं चासिद्धम् । एवं पदानामेव साक्षादभिधातृत्वोपपत्तौ न पारम्पर्याद्युचितम् ।

यच्चोक्तं पदतिरोधानेऽर्थतस्तद्धीरिति—तदपि न, अनेकवर्णात्मकपदेषु सर्वपूर्ववर्णतिरोधानेऽन्त्यवर्णानन्तरमर्थप्रतीतेरन्त्यवर्णस्यैवार्थधीहेतुत्वप्रसङ्गात् ; तथा वाक्यार्थधियोऽपि वाक्यान्तपदार्थस्यैव हेतुतेति अन्याहेतुत्वप्रसङ्गाच्च । न च तदिष्टम् ; पदानामभिधातृत्वं वाक्यार्थं प्रति साक्षाद्वा परम्परया वोभयाभ्युपतम् । अतः पदानामभिधातृत्वयुक्तिः सुस्था । तात्पर्योपगमादि च । तात्पर्योपगमो नाम पदानां वाक्यार्थपरत्वम् । तत्परैरभ्युपगतमिति प्रदर्शितम् ।

ननु पदाना न प्रमितिहेतुत्वम् ; किं तु स्मारकत्वमेवेति भाट्टमतम् ; यथोक्तम्—"पदमभ्यधिकाभावात् स्मारकान्न विशिष्यते" इति । तदप्यसत् ; तत्पक्षेऽपि पदाभिधानशक्तिव्यतिरिक्तशक्तिद्वयकल्पनागौरवात् । अस्मत्पक्षे तु वर्णानां युगपत् स्मृतिस्थत्वाद्युपपत्तिर्वाक्यार्थप्रदीप उक्ता । सापि पक्षान्तरेऽपि समा ।

यत्तु लौकिकसर्ववाक्यानां लक्षणावृत्तित्वादन्वयधीः, नाभिधानत इत्युक्तम्—तत्तु प्राभाकरदूषणमेव ; न त्वस्मन्मतस्य ; लौकिकसर्ववाक्यानामपि ब्रह्मपरत्वेन मुख्यवृत्तत्वात् । तत्र कस्यचिद्वाक्यार्थस्य वाक्यार्थान्वयानुपपत्तौ तु तत्संबन्धिनोपलक्षितस्यान्वयोऽपि युक्त इत्युक्तम् । तदुक्तम्—

"वाच्यस्यार्थस्य वाक्यार्थे संबन्धानुपपत्तितः ।
तत्संबन्धवशप्राप्तस्यान्वयाल्लक्षणोच्यते ॥"

इति ।

यत्तु यत्र निन्दा तत्र संख्याया अभिधानात् न सर्वलक्षणेति प्राभाकरैरुक्तम्, तच्चासत्, इतरपदवत् तेषामप्यपूर्वानन्वयस्य समत्वाल्लौकिकेषु । यत्तु तैः सिद्धार्थपरवाक्येष्वभिप्रायादर्थधीरित्युक्तम्—तच्चासत्; प्रवृत्तिपरवाक्येष्वपि तथात्वापातात् । न च कार्यधियः प्रवृत्त्यव्यभिचारात् तत्र न तथात्वमिति ; इष्टसाधनत्वधीत एव प्रवृत्तेरुक्तत्वात् ।

यत्तु न सामान्येनान्विताभिधानम्, अर्थशक्त्यापि तत्सिद्धेरित्यभिहितान्वयवादिनोक्तम्—तन्न ; कल्पनागौरवादेवार्थशक्तिनिरासात् ।

न चानन्त्याद्विशेषान्वितव्युत्पत्त्यशक्तेराकाङ्क्षायोग्यतासंनिधिसहकारिण-स्तदभावात् पदेष्वपि पृथग्व्युत्पत्तिरस्तीत्युक्तम् । तद्व्युत्पत्तौ चाकाङ्क्षादि-वशात् वाक्यव्युत्पत्त्यनुसारेण तद्विशेषपर्यवसाने हि नानन्त्यम् । सामान्या-न्विताभिधानेऽपि सामान्यस्य स्वाश्रयपर्यन्तस्यैव वाच्यत्वात् विशेषपर्यवसाना-न्नानुपपत्तिः । विशेषान्वयादिचोद्यपरिहारौ पक्षान्तरेऽपि तुल्यौ ।

यत्तु प्राभाकरैः कार्यान्वितस्वार्थाभिधायित्वमेवेत्युक्तम्, तत् तदभि-मतकार्यस्य दुर्निरूपत्वसाधनात् परब्रह्मान्वितत्वसाधनाच्च निरस्तम् । यत्तु तैरर्थान्तरान्विताभिधाने गौरवमुक्तम्, तदुभयथापि दुष्टत्वान्निरस्तम् । कल्पनायां हि गौरवं दोषः । कार्यविशेषान्वेषणायां च बुद्धिव्यापाराधिक्यात् गौरवम् । कार्यं च नेष्टसाधनातिरिक्तमित्युक्तम् ।

अतोऽर्थान्तरान्वितस्वार्थाभिधायीन्येव पदानि । तानि च ब्रह्मपराण्ये-वेत्युक्तं वाक्यार्थप्रदीप इति सर्वं सुस्थम् ।

इत्येवं पूर्वकाण्डस्थसमीरितनयोक्तिषु ।
त्याज्योपादेयभेदेन सम्यगर्थसमीरणात् ॥
अर्थान्तराभिधानाच्च मतान्तरनिरासतः ।
अर्थान्तरान्वितस्वार्थं पदान्याहुरितीरितम् ॥

इति
श्रीमदात्रेयनाथसूरिसूनुना मेघनादारिसूरिणा विरचिते
नयद्युमणौ
अन्विताभिधानप्रकरणम् ।

## ६. शब्दनिरूपणम्

रामानुजमुनेर्भावो गम्भीरोऽयं प्रकाश्यते ।
श्रावणानां तु शाब्दानां स्थायित्वविषयोऽधुना ॥

यद्यपि कार्यात्मिकाकाशगुणस्य कार्यता श्रुतित एव सिद्धा; तथापि तार्किकाणामिव न क्षणिकत्वमिष्टम् । यत एवमुक्तं देवताधिकरणभाष्ये—"प्राकृत-प्रलये तु स्रष्टुः प्रजापतेर्भूताद्यहंकारपरिणामशब्दस्य च विनष्टत्वात् कथं प्रजापतेः शब्दपूर्विका सृष्टिरुपपद्यते ? कथंतरां विनष्टस्य वेदस्य नित्यत्वम् ?" इति । अतः प्राकृतप्रलयावधि शब्दस्य स्थायितेष्टा, तावत् स्वाश्रयाकाशाविनाशात् । अत एव ह्याकाशस्य "न वियदश्रुतेः" इति चिरकालस्थायित्वाभिधानम् । शब्दस्य तामसाहंकारपरिणतत्वोक्तिः स्वाश्रयाकाशपरिणामादौपचारिकी । द्रव्यस्यैव हि कार्यत्वेन परिणामभाक्त्वम्; न तु गुणानाम् । शब्दस्य गुणत्वं च भाष्यादौ स्पष्टम् । अतो यावद्देशव्यापी भवत्याकाशः, तावदाकाशसर्वदेशव्यापी शब्दोऽपि वर्तते चिरकालस्थायीति च दर्शनम् । एवंच पूर्वकाण्डोक्तस्य[1] नित्यत्वादेरप्यविरोधः; [2]अमरनित्यत्ववत् तस्य चिरकालस्थायिपरत्वेनाप्युपपत्तेः । बहुदेशवर्तित्वादाकाशस्य तद्वर्तित्वेन तद्गुणत्वादसर्वगतत्वनिरासोऽप्युपपन्नः । एवं कथंचिन्नयनं तु शब्दाश्रयाकाशादेः परिच्छिन्नत्वात् ।

लौकिका अपि शब्दा वैदिका एव । तच्च वेदार्थसंग्रहादौ स्पष्टमुप-पादितम् । ननु तत्रैव "परमपुरुषवत् तत्स्वरूपतदाराधनतत्फलज्ञापक-वेदाख्यशब्दजातं नित्यमेव" इति ग्रन्थात् वैदिकशब्दानां स्वतो नित्यत्वाभिमतिः प्रतीयते; न तु चिरकालस्थायित्वमिति—तन्न; पूर्वोदाहृतभाष्यविरोधात्; "प्राकृतप्रलये तु चतुर्मखवेदाख्यशब्दादौ विनष्टे" इत्यादिसारोक्तिविरोधाच्च ।

1. पूर्वकाण्डोक्तस्येति । शब्दनित्यत्वाधिकरण इति भावः । यदाहुः-
"वर्णात्मकाश्च ये शब्दाः नित्याः सर्वगतास्तथा ।
पृथग्द्रव्यतया ते तु न गुणाः कस्यचिन्मताः ॥"
इति । अत्र हि भाट्टैः शब्दानां नित्यत्वं विभुत्वं द्रव्यत्वं चाभिप्रेतम् ।

2. अमरेति । "अपाम सोमममृता अभूम" इत्याद्युक्तेरिति भावः ।

नित्यत्ववचनं त्वानुपूर्वीविशिष्टत्वाकारेण वेदाख्यशब्दराशेरपुंप्रभवत्वपरम् । अत एव हि दीपसारयोः "वेदांश्च पूर्वानुपूर्वीविशिष्टान् आविष्कृत्य" इत्याविष्कारमात्रोक्तिः ।

अतो न वैदिकलौकिकशब्दानां नानात्वमभिमतम् । नानात्वे च वैदिकानां व्युत्पत्त्यभावादबोधकता । शब्दार्थसंबन्धौत्पत्तिकता च वेदार्थसंग्रहे अविशेषेणोक्ता । तदौत्पत्तिकत्वसिद्ध्यर्थमेव हि शब्दस्य स्थायित्वोक्तिर्भाष्यादौ । स्थायित्वाभावे तु प्रतिक्षणं शब्दानां भिन्नत्वात् नौत्पत्तिकतासिद्धिः ।

ननु औत्पत्तिकत्वस्य चक्षुरादेर्द्रष्टृत्वशक्तिवत् स्वाभाविकत्वरूपत्वादनित्यत्वेऽपि तस्योपपत्तिरिति—तन्न; शब्दस्य ज्ञाततया कारणत्वात् तद्धेतुव्युत्पत्त्यनुपपत्तेस्तस्यासत्कल्पत्वात् । न हि प्रतिक्षणं भिन्नेषु व्युत्पत्त्युपपत्तिः ।

ननु घटत्वादिजातिवत् शब्दत्वजात्यङ्गीकारेण तदौत्पत्तिकत्वोपपत्तिरिति—तन्न; संस्थानस्यैव जातित्वाङ्गीकारात् । तस्य च द्रव्यमात्रनिष्ठत्वात् गुणेषु जात्यनभ्युपगमात् । अतः शब्दस्य क्षणिकत्वे नौत्पत्तिकतेति तत्सिद्ध्यर्थं क्षणिकत्वादि निराकरणीयम् । अतः शब्दस्थायित्वादिसाधनमर्थवत् । शब्दाधिकरणे पूर्वकाण्डे तत्सिद्धावपि तद्व्याख्यातृभिरन्यथा तत् व्याख्यातमिति पृथक्प्रवृत्तिरप्यर्थवती । तदधिकरणयाथार्थ्यं तु भाष्यकारेण पूर्वेदाहृतभाष्यादौ द्योतितम् ।

एवंविधशब्दस्थायित्वादौ तार्किकाः प्रत्यवतिष्ठन्ते । तथाहि—शब्दानित्यत्वस्य प्रत्यक्षसिद्धत्वात् सोऽनित्य एव । अनित्यता हि स्वरूपप्रच्युतिः, तदुपलक्षितसत्तान्वयो वा; उभयथापि घटाद्यनित्यत्ववत् [1]तदिन्द्रियप्रमाणसिद्धौ तस्य प्रत्यक्षादनित्यता । कार्यत्वप्रत्यक्षाच्चानित्यता । कार्यत्वं हि कारणाधीनत्वम् । तस्य च ताल्वादिकारणानुविधायित्वं प्रत्यक्षम्; घटादेर्दण्डाद्यन्वयव्यतिरेकानुविधायित्ववत् ।

न च ताल्वादेरभिव्यञ्जकत्वमेवेति; दण्डादेरपि तथात्वापातात् । कारणसामग्री ह्येषा यत्सद्भावे पदार्थोपलम्भो नियतः । अत्र च ताल्वादिव्यापारे वर्णविशेषोपलम्भो नियतः । अभिव्यञ्जकसामग्री ह्येषा यत्सद्भावेऽपि पदार्थ-

1. तदिन्द्रियेति । शब्दस्य वर्णात्मकस्य ग्राहकमिन्द्रियं श्रोत्रम्; न तु नादमात्रग्राहकमिति तद्विषये इन्द्रियं प्रमाणमित्यस्य सिद्धावित्यर्थः ।

विशेषोपलम्भो न नियतः; यथा ह्यालोकादिसद्भावेऽपि घटादिविशेषोपलम्भो न नियतः। अतस्ताल्वादेरभिव्यञ्जकवैधर्म्यान्नाभिव्यञ्जकता।

किंच किमभिव्यक्तिः शब्दानाम्? उत श्रोत्रस्य? नाद्यः; [1]सर्वशब्दानामेकेन्द्रियग्राह्यत्वादेकदेशस्थत्वाच्च ताल्वाद्येकव्यापारे युगपत् सर्वशब्दोपलब्धिप्रसङ्गात्। न द्वितीयः; श्रोत्रस्याभिव्यक्तिसंस्कृतत्वात् सर्वशब्दोपलब्धेरनिवार्यत्वात्। शब्दानामसंनिहितदेशस्थत्वे तु श्रोत्रात्मकाकाशस्य गत्यशक्तेर्न ग्रहणशक्तिः।

"अभिव्यञ्जकवैधर्म्यादभिव्यक्तेरसंभवे।
प्रयत्नानन्तरं दृष्टेरभिधानं प्रयत्नजम्॥

सकृच्च सस्कृतं श्रोत्र सर्वशब्दान् प्रकाशयेत्।
घटायोन्मीलितं चक्षुः पटं न हि न पश्यति॥"

इति संग्रहः।

'विमतः शब्दो जायते, महाभूतासाधारणगुणत्वात् गन्धादिवत्' इत्यनुमानाच्च शब्दानां कार्यता। ततश्चानित्यता।

अनित्यत्वेऽपि न चिरस्थायिता; किं तु क्षणिकत्वमेव; [2]व्यापारानतक्षणव्यतिरिक्तक्षणेष्वनुपलब्धेरिति संक्षेपः।

अत्रोच्यते—तस्य न पराभिमतानित्यत्वम्, तदनित्यत्वप्रत्यक्षासिद्धेः। न हि घटादिविनाशित्ववत् तस्यैन्द्रियकता, विकल्पासहत्वात्। किं तद्विनाशस्य प्रत्यक्षत्वम्? शब्दानुपलब्धिर्वा? नाद्यः; तत्स्वरूपप्रच्युतेः प्रत्यक्षतोऽनुपलब्धेः। द्वितीये तु तदनुपलब्धिमात्रान्न विनाशासिद्धिः; तत्प्रत्यक्षता वा। अनुपलब्धिर्नामोपलब्ध्यभावः; न च तदभावस्य विनाशरूपता। न हि बधिरस्य शब्दोच्चारणसमये तदनुपलब्धिरिति तस्य विनाशः; अनुपलब्धिमात्रादभावसत्त्वे, अन्धकारस्थघटादेरप्यभावापत्तिः।

1. सर्वेति। एकेन्द्रियग्राह्याणामेकप्रदेशस्थितानां हि घटपटादीनां युगपदुपलब्धिरानुभविकी सति दीपादिप्रसरे। तथैवेहापि स्यात्; शब्दनां श्रोत्रैकग्राह्यत्वात् आकाशरूपस्य देशस्य चैकत्वादिति भावः।

2. व्यापारानतक्षणेति। व्यापारं प्रति आनतो यः क्षणः तस्मादित्यर्थः। ताल्वादिव्यापारासन्नकतिपयक्षणेति यावत्।

न च तत्प्रध्वंसाभावग्रह इति तद्विनाशप्रत्यक्षतेति ; विकल्पासहत्वात् । किं प्रध्वंसग्रहस्य विनाशप्रत्यक्षस्य च मिथो भेदः ? ऐक्यं वा ? आद्ये प्रध्वंसप्रत्यक्षेऽपि विनाशप्रत्यक्षासिद्धिः । अतस्तत्प्रध्वंसाभावविनाशयोर्नैक्यम्, तयोर्भिन्नत्वादिति द्वितीयोऽपि निरस्तः । विनाशो नामोत्पन्नकार्यस्य पाश्चात्याभावहेतुः क्रिया ।

न च "णश अदर्शने" इत्यभावस्यैव धातुवच्यतेति । क्रियावचनत्वाद्धि धातुता । न ह्यभावः क्रिया । अतस्तत्साधनवाची तद्धातुः । कामं भवतां विनाशप्रध्वंसावेकार्थौ ; एवमपि न शब्दप्रध्वंसोपलब्धिः, घटादिप्रध्वंसोपलब्धिवत् पाकजपार्थिवरूपादिप्रध्वंसोपलब्धिवद्वा । योग्यानुपलब्ध्या विनाशकल्पनायां त्वनित्यत्वस्य न प्रत्यक्षता ; अर्थापत्तिकल्प्यत्वात् । [1]उपलब्धियोग्यापादकतायास्तु नानित्यत्वप्रत्यक्षोपयोगिता ; किंतु तदभावकल्पनायाम्[2] । घटादेस्तु मुद्गराभिघातकपालादिदर्शनात् न प्रध्वंसे विप्रतिपत्तिः । तत्रापि देशविशेषादर्शनमात्रात्[3] न नाशप्रत्यक्षता । योग्यत्वादिना त्वसद्भावः कल्प्य एवेति योग्यानुपलब्धिमात्रात् न प्रध्वंसप्रत्यक्षता ।

न च [4]तत्कल्पनायामपि शब्दस्य न स्थायितेति ; प्रत्यभिज्ञाप्रत्यक्षादेव तत्सिद्धेः । ततस्तत्स्थायित्वे चानुपलब्धिरन्यथाप्युपपन्नेति न विनाशकल्पना ।

न च गकारादिप्रत्यभिज्ञायाः तत्सामान्यविषयत्वादन्यथासिद्धत्वादि ; सामान्यस्य प्रमाणशून्यत्वादसिद्धेः । न च गकारादिष्वनुवृत्तधीतस्तत्सिद्धिरिति ; गकारस्यैकत्वेनानेकव्यक्त्यभावात् । यत्र हि [5]व्यक्तिभेदपुरःसर्यभेदधीः, तत्र हि सामान्यम् ।

1. उपलब्धियोग्यापादकताया इति । उपलब्धियोग्यपदार्थविषये या आपादकता 'यदि स्यात् उपलभ्येत' इति स्यादित्युक्तसद्भावनिष्ठा, तस्या इत्यर्थः ।

2. कल्पनायामिति । उपयोगितेति शेषः ।

3. देशविशेषादर्शनमात्रादिति । देशविशेषे अदर्शनमात्रादित्यर्थः ।

4. तत्कल्पनायामपीति । न विनाशस्य प्रत्यक्षम्; किंतु अर्थापत्त्या कल्पनेति पक्षेऽपीत्यर्थः ।

5. व्यक्तिभेदेत्यादि । तदुक्तम्—"तदेवौषधमित्यादौ सजातीयेऽपि दर्शनात्" इति ।

न च नानादिक्कालवक्तृभेदे गव्यक्तिभेदधीर्गत्वैक्यधीश्चेति; अभिव्यञ्जकसामग्रीभेदात् तन्नानात्वधियोऽन्यथासिद्धत्वात्। संस्थानमेव गोत्वादिजातिः। संस्थानं च द्रव्यगुणः, न गुणगतम्। शब्दस्यान्यविशेषणत्वैकस्वभावत्वात् जात्यादेरिव नाकारान्तरापेक्षा च। जात्यादेर्हि स्वाश्रयस्य पदार्थान्तरतो व्यावर्तकत्वेनैव स्वेनैव स्वव्यावर्तकतापि सिद्धा। गुणेषु न जातिरिति प्रमेयनिरूपणे वक्ष्यते। भिन्नवक्तृसमुत्थनानाभूतपरस्परानपेक्षाभिव्यञ्जकपवनैरभिव्यक्तिभेदे सामग्रीभेदात् गादेर्नानात्वोपलब्धिः, तिमिरव्यवधानसामग्रीभेदान्नेत्रप्रवृत्तिभेदे चन्द्रानेकत्वग्रहवत्। तदुक्तम्—

"अभिव्यञ्जकनानात्वाच्छब्दो नानेव लक्ष्यते।
नेत्रप्रवृत्तिभेदेन चन्द्रस्तैमिरिकैरिव॥"

इति। किंच तस्य क्षणिकत्ववादिभिरपि नानादेशत्वधीर्भ्रान्तिरित्यङ्गीकार्या[1]; श्रोत्रदेश एवोपलभ्यमानशब्दोत्पत्त्यङ्गीकारात्। न च श्रोत्रस्य गत्या तद्ग्रहोपपत्तिः; आकशस्य श्रोत्रत्वाङ्गीकारात्। वायोः प्रातिकूल्यानुकूल्ययोर्विशेषविरहेण दूरस्थशब्दोपलब्ध्यापातात्; उभयत्रापि श्रोत्रगमनासंभवात्। अप्राप्य तु न तद्ग्रहः; वातप्रातिकूल्यादावुपलब्धितौल्यापातात्। अतस्तत्पक्षेऽपि नानादेशत्वमेव। तदुक्तम्—

"नानादेशोपलम्भे च सर्वेषां भ्रान्तिसंमतिः।
कर्णच्छिद्रगतस्यैव शब्दस्य ग्रहणं यतः॥"

इति। अस्मत्पक्षे तु नभो न श्रोत्रम्; सर्वेन्द्रियाणामाहंकारिकत्वश्रुतेः। तच्च प्रमेयनिरूपणे उपपादयिष्यते। अतः शब्दाभिव्यक्तिः श्रोत्र एवेति न नियमः, अन्यत्राप्याकाशे लभ्यात् संपर्कात्। पृथिव्यादेरपि तस्य गुणत्वाच्च सर्वत्रोपलब्धियोग्यता। अतो यत्र शब्दाभिव्यञ्जकवायुविशेषसद्भावः, तत्रैव समभिव्यक्तिः।

शब्दश्च वर्णावर्णात्मकभेदात् द्विविधः। अकारादिर्वर्णात्मकः। ध्वन्याद्यपरपर्यायोऽन्यः। तत्रावर्णात्मकस्याभिघातजवायुमात्रमभिव्यञ्जकम्। वर्णात्मकानां तु ताल्वादिस्थानविशेषजो वायुविशेषो ध्वनिविशेषसहितानामेवाभिव्यञ्जकः। अवर्णात्मकोऽपि प्रत्यभिज्ञयैक एव। न च वायोरेव ध्वनित्वम्, [2]शब्दपर्यायत्वप्रसिद्धेः। तद्भूयस्त्वादिस्तु अभिव्यञ्जकवायुभूयस्त्वादिनिबन्धनः।

1. भ्रान्तिरित्यङ्गीकार्या। भ्रान्तित्वेनाङ्गीकार्येत्यर्थः।
2. शब्दपर्यायत्वेति। ध्वनेरित्यादिः।

ननु "वेणुरन्ध्रविभेदेन भेदः षड्जादिसंज्ञकः । अभेदव्यापिनो वायोः" इति वायोरेव नादत्वमुक्तमिति—तन्न; वायोरश्रावणत्वात् । नादाभिव्यञ्जकत्वायै षड्जादिव्यवहार औपचारिकः । पार्थिवाद्युपष्टब्धाकाशसौक्ष्म्यादिनापि ध्वनिसौक्ष्म्यादिः ।

अतो ध्वनीनां नाभिव्यञ्जकत्वम् । किंतु वायोरेव । अत एव हि "वायुर्नाभेरुत्थित उरसि विस्तीर्णः कण्ठे विपरिवृत्तो मूर्धानमाहत्य परावृत्तो वक्त्रे विचरन् विविधान् शब्दानभिव्यनक्ति" इति शबरोक्तिः ।

अतः शब्दस्य वर्णात्मकस्य न ध्वन्यनित्यत्वसाम्यापादनदूषणानि । न च ध्वनीनामनित्यत्वोपपत्तिः; वर्णसमानाश्रयादिभ्यः । अतो राद्धान्तैकदेशिनां नादानित्यत्वाभ्युपगमो भयत एव[1] ।

ननु अभिव्यञ्जकवायोः प्रथमसंयोगदेश एव शब्दाभिव्यक्तौ शब्दश्रोत्रयोर्गत्यभावात् कथं तद्ग्रहणमिति । उच्यते—श्रोत्रस्याणुपरिमितद्रव्यत्वेन गत्युपपत्तिरिति । न च तथात्वे वायुप्रातिकूल्यादौ शब्दोपलब्ध्यविशेषापातः; कार्यकल्प्यत्वात् कारणसामग्र्या यथोपलब्धि प्रातिकूल्यादेः सामग्रीत्वेन कल्प्यत्वात् । श्रोत्रदेश एव शब्दाभिव्यक्तिपक्षेऽपि तारतम्यादेः सामग्रीभेदः कल्प्य एव ।

न ह्येकरूपाभिव्यक्तिः समीपदूरदेशे । शब्दस्य समीपे हि स्फुटोपलब्धिः । दूरे त्वस्फुटा । तत्र वायुवेगोऽनादिः कल्प्यः । अनुकूलवातस्यात्यन्तप्राबल्येऽपि न शब्दोपलब्धिः । तथा प्रतिकूलवाताल्पत्वे दूरस्थोऽपि श्रूयत इति न तस्यानुकूल्यादिमात्रस्य तदुपलब्ध्यादिहेतुत्वम् । अतः श्रोत्रस्य [2]स्वाश्रयदेशाभिव्यक्तशब्ददेशयोरन्तराले स्वग्राह्यविरोधिशब्दान्तराभावे तद्ग्रहणसामर्थ्यमिति, प्रबलशब्दहेतौ श्रोत्रस्य तदुपपादकसामर्थ्यमिति च कल्प्यम् । एतत् पक्षान्तरेऽपि समम् । एवमभिव्यञ्जकदेशस्थत्वप्रतीतेरबाधो लाभः । अन्यथा भ्रान्तित्वपरिकल्पनया तद्बाधः कल्प्यः । अभिव्यञ्जकदेशस्थैव हि शब्दप्रतीतिः । न च तस्याः प्रतिपन्नोपाधौ बाध इति न भ्रान्तिता । श्रोत्रदेश एव तदभिव्यञ्जकसिद्धौ तद्भ्रान्तिसिद्धिः । न हि तत्र प्रमाणम् ।

---

1. भयत एवेति । आप्लुत्य भल्लूकवदापतद्भयः प्रतिवादिभ्यो भीत्यैवेत्यर्थः ।

2. स्वाश्रयेति । स्वाश्रयदेशस्य अभिव्यक्तशब्ददेशस्य चेत्यर्थः ।

अन्यदेशस्थशब्दप्रतीतेर्भ्रान्तित्वसिद्धौ श्रोत्रदेश एव तदभिव्यक्तिसिद्धिः, एतत्सिद्धौ तत्सिद्धिरित्यन्योन्याश्रयणं च । न त्वाकाशस्य श्रोत्रतेत्युक्तम् ।

अतः श्रवणेनापि नेत्रवत् गत्वैव ग्रहः । नेत्रस्य रूपपरिग्रहेऽवकाशालोकादिः सहकारी । श्रोत्रस्यापि गत्यवकाशानुकूलवातादिः । न हि निश्छिद्रपिहितकवाटपदान्तरवस्थितैर्बाह्यशब्दः सामीप्येऽपि श्रूयते । तदन्तर्गत्यवकाशे दूरस्थोऽपि श्रूयते । श्रोत्रदेशे तदभिव्यक्त्युत्पत्तिक्षययोरप्यवकाशादिः सहकारीष्ट एव ।

किंच कौष्ठ्यादिवायोः कर्णनेमिभागस्पर्शानुपलब्धेश्च न श्रोत्रदेशे तदभिव्यक्तिः । वायोः स्पर्शनत्वेऽनुमेयत्वे[1] वा तन्नेमिस्पर्शात् तत्प्रतीतिः स्यात् । न हि तत्सूक्ष्मत्वादनुपलब्धिरिति ; भेर्याद्यभिघातजवातप्राबल्येऽपि तदनुपलब्धेः साम्यात् । चक्षुषा स्थूलरूपिद्रव्यस्य दूरादल्पतया ग्रहणवत् शब्दस्यापि दूरान्मन्दतया ग्रहणमप्युपपन्नम् ।

ननु श्रोत्रस्याणुत्वेन गत्वैव तद्ग्रहे त्वगिन्द्रियादेरपि गत्वैव स्वोपलब्धिः स्यादिति—मैवम् ; पक्षान्तरेऽपि त्वगिन्द्रियादेर्मध्यमपरिमाणत्वाभिमानाच्चक्षुर्वद्गत्वैव ग्रहणापत्तिसाम्यात् । अतो यथोपलम्भमेव कारणकल्पना । अतस्तत्तया[2] गकारादेरैक्ये हि अभिव्यञ्जकाभावादेवायोग्यतयानुपलब्धिः । अभिव्यक्तिश्च शब्दानामेव । अभिव्यञ्जकवायोः गत्वरत्वादेवाभिव्यक्त्यस्थैर्ये शब्दस्फूर्त्यस्थैर्यम् ; मेघतिमिरान्धकारितोल्कामार्गाभिव्यज्यमानपदार्थस्फूर्त्यस्थैर्यवत् । प्रयत्नजानामपि खननादीनां जलाभिव्यञ्जकत्ववत् ताल्वादिजानामभिव्यञ्जकताप्युपपन्ना । अतस्तत्र तेषामभिव्यञ्जकतैव । न च शुक्तिकारजतादिवद्भेदाग्रहात् भ्रान्तिरिति ; गकारादेर्व्यक्त्यैक्यस्योक्तत्वात् । उच्चैः स्वरादिरप्यभिव्यञ्जकवायुप्राबल्यदैर्घ्यादिकृत औपचारिक एव । अतो गत्वादेः श्रावणत्वाद्यौपाधिकत्वाद्युक्तिरनुक्तोपालम्भः; उपाधेरपि भेदनिर्वाह्यत्वात् ; शब्दस्यौपाधिकत्वमिष्टमेव । यत्तु तस्य श्रोत्रग्राह्यत्वौपाधिकत्वे गोत्वादेरपि सास्नादिनौपाधिकत्वप्रसङ्ग इत्युक्तम् ; न तदिष्टमस्मत्पक्षे । तच्च प्रमेयनिरूपणे वक्ष्यते ।

---

1. **अनुमेयत्वे वेति** । श्रोत्रदेश एव शब्दग्रहणपक्षे तद्धेतोर्वायोरपि कर्णदेशप्राप्तेर्वक्तव्यत्वात् तत्स्पर्श उपलभ्येत । वायोः स्पार्शनत्वे सोऽप्युपलभ्येत । स्पर्शग्रहणेन वायोरनुमेयत्वेऽपि वायुस्पर्शोपलब्धिर्हि न व्याहन्येतेति भावः ।

2. **तत्तयेति** । 'सोऽयं गकारः' इति प्रत्यभिज्ञाविषयतयेत्यर्थः ।

अतो गकारादेरेकत्वधीरनन्यथासिद्धेति स्थायित्वानुमानादिसिद्धौ समानदेशैकेन्द्रियग्राह्यत्वेऽपि युगपत्सर्ववर्णोपलब्धिकार्यादर्शनादभिव्यञ्जकभेदकल्पनाप्युपपन्ना ।

किंच घटादेरेकेन्द्रियग्राह्यस्य नैकाभिव्यञ्जकता । [1]अभिव्यङ्ग्यत्वप्रयोजकरूपिद्रव्यत्वरूपत्वाभ्यामेकाभिव्यङ्ग्यत्वप्रयुक्तत्वस्य शङ्क्यमानत्वात् । उपाधिशङ्कायामपि नानुमा ।

किंच एकेन्द्रियग्राह्यघटादेः सर्वस्यालोकाभिव्यक्तिदर्शनात् ताल्वादिजवायुविशेषस्यापि सर्ववर्णाभिव्यञ्जकत्वमनुमाय पारिशेष्यात् तदुत्पत्त्यनुमा । अतः अनुमानपुरःसरमनुमानं दुर्बलम्, प्रत्यभिज्ञापूर्वकमभिव्यञ्जकान्तरसाम्यबाधात् । नियतविषयत्वेनाभिव्यञ्जकभेदानुमानं तु प्रबलम्; प्रत्यक्षपूर्वकत्वादेतदनुमानस्य । अतो नाभिव्यञ्जकवैधर्म्यमात्रात् कारणता । आलोकादेः खननादेर्वैधर्म्यान्नाभिव्यञ्जकता च स्यात् ।

किंच एकेन्द्रियग्राह्यैकदेशस्थानामप्यञ्जनाद्यभिव्यञ्जकभेदनियतो ग्रहणभेद इति दृश्यते स्थलगुप्तनिधानादौ । योग्यत्वादेव हि तस्य मनुष्यदृश्यत्वम् । तथा योगिनामपि द्व्यणुकादिद्रष्टृत्वशक्तिरभ्युपगता । सापि सहकार्यभिव्यञ्जकवैधर्म्यादेव ।

न चैकेन्द्रियग्राह्यत्वे तु नाभिव्यञ्जकवैधर्म्यमिति; पटलाद्यर्दितानामञ्जनविशेषानक्तनयनावस्थायां पदार्थविशेषादर्शनात् तदक्तावस्थायां तद्दर्शनात्तद्वैधर्म्यसिद्धेः । अतो न सर्वाभिव्यञ्जकसारूप्यम् ।

यत्तु सामग्रीसमवधाने कार्यत्वे पदार्थोपलब्धिनियतिः, नाभिव्यङ्ग्यत्व इत्युक्तम्; तत्तु अभिव्यङ्ग्यस्थायित्वे गगनादिवत् अभिव्यञ्जकसमवधाने खननादिवत्तदभिव्यक्तिः । यतः प्रत्युक्तः कूपाकाशादेर्हीनकरणाद्यभिव्यङ्ग्यत्व-

---

1. अभिव्यङ्ग्यत्वेति । समानदेशस्थवस्तुगतमेकेन्द्रियग्राह्यत्वं किमेकाभिव्यञ्जकत्वे प्रयोजकम्? किं वा तद्गतं रूपिद्रव्यत्वम्? तद्द्रव्यगुणगतं रूपत्वं वेति प्रयोजकान्तरशङ्कायामेकेन्द्रियग्राह्यत्वस्य नैकाभिव्यङ्ग्यत्वसाधकतेति भावः । शास्त्रदीपिकायां तु अन्यदुक्तम्—"दृष्टा च समानेन्द्रियग्राह्याणामप्यभिव्यञ्जकव्यवस्था । सावित्रं हि तेजो घटादीनामेवाभिव्यञ्जकम्; न नक्षत्राणाम् । निम्बत्वक् चन्दनगन्धस्यैवाभिव्यञ्जिका; न गन्धान्तराणाम् । तस्माददोषः" इति । अन्यच्चायमेव ग्रन्थकारोऽनन्तरं दर्शयिष्यति ।

व्यभिचारोऽभिव्यञ्जकसमवधाने। किंच पदार्थदर्शनानियतिस्तु तत्तत्पदार्थस्वभावकृता; न त्वभिव्यञ्जकस्वभावकृता। अतः 'अभिव्यञ्जकवैधर्म्यात्' इत्यादयो हेत्वाभासा एव।

यत्तु तासमहाभूतासाधारणगुणत्वाद्गन्धवदित्यनुमानम्, तत् सिद्धसाधनम्; शब्दस्याश्रयविनाशाद्विनाशाभ्युपगतेः। तदनुमानान्न क्षणिकता। प्रत्युत गन्धादिवदक्षणिकतैव। अयोग्यतयाप्यनुपलब्ध्युपपत्तेः न तावन्मात्रादपि क्षणिकता। "वाचा विरूपनित्यया" इत्यादिश्रुत्या च तत्स्थायिता। तत्र नित्यत्ववचनमपि "तन्मात्राणि भूतादै लीयन्ते" इत्यादौ तल्लयादेः श्रवणाच्चिरकालस्थायित्वपरमेव। न त्वनाद्यन्तवन्नित्यत्वपरम्। एवंच न शब्दाधिकरणविरोधोऽपि। तत्सूत्राण्यप्येतदनुगुणं योजनीयानीति शब्दस्थायित्वादिः सिद्धः। अन्यत्तु विस्तरभयात् नोक्तमिति।

इति
श्रीमदात्रेयनाथसूरिसूनुना मेघनादारिसूरिणा विरचिते
नयद्युमणौ
शब्दनिरूपणप्रकरणम्।

## ७. श्रुतिलिङ्गादिनिरूपणम्

श्रुत्यादीनां स्वरूपस्य तद्बलाबलयोरपि ।
तन्त्रानभिज्ञबोधाय विवेकः क्रियते स्फुटम् ॥

श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्या विनियोजिकाः पदार्थस्वरूपज्ञापिकाश्च; एतत्प्रमाणव्यतिरेकेण पदार्थस्वरूपज्ञापकाभावात् । यद्यपि श्रुतिरेव सर्वत्र प्रमाणम्; तथापि श्रुतित्वाद्यवस्थायुक्ताया एव प्रमाणता । तत्र श्रुतिर्नाम द्वितीयान्तादिपद श्रवणम् । "ऐन्द्र्या गार्हपत्यम्" इत्यादि तदुदाहरणम् । लिङ्गं च पदानामभिधानसामर्थ्यम् । "कदाचन स्तरीरसि नेन्द्र सश्चसि" इति तदुदाहरणम् । वाक्यं चान्योन्यान्वितत्वेनैकार्थाभिधायीनि पदानि । "द्वादशोपसत्ताहीनस्य" इति तदुदाहरणम् । इतिकर्तव्यतार्थप्रधानं प्रकरणम् । "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति तदुदाहरणम । स्थानं नाम संनिधिः क्रम इति च पर्यायः । तस्य च पाठसंनिधित्वेनोदाहरणं प्रसिद्धम् । आख्या चाध्वर्यवमित्यादिः ।

[1]ननु न पदान्तरनिरपेक्षा गार्हपत्यमित्यादिश्रुतिर्विनियोक्त्री । न चेन्द्रपदाभिधानसामर्थ्यमात्रादिन्द्राभिधानम्, अन्वितस्यैव वाक्यस्याभिधायकत्वात् । अतः श्रुतिलिङ्गे न वाक्यात् पृथक् प्रमाणमिति—मैवम्; अन्वयव्यतिरेकाभ्यां गार्हपत्यमित्यस्यैव विनियोजकत्वात् । पदान्तराणां च गार्हपत्यपरत्वेऽप्यविरोधात् तत्परतासिद्धिः ।

ननु यद्यपि गार्हपत्यपदशक्त्यैव गार्हपत्यप्रतीतिः, यथैवेन्द्रपदशक्त्यैवेन्द्रप्रतीतिः; तथापि कथं गार्हपत्यपदस्य श्रुतित्वम्, अन्यस्य लिङ्गत्वमिति—मैवम्; उपस्थानप्रतिसंबन्धिगार्हपत्यस्य पदमात्रेणागमकत्वात् "कदाचन स्तरीरसि नेन्द्र सश्चसि" इत्यत्रेन्द्रशब्दश्रवणात् तत्समभिव्याहृतपदकदम्बकाद्वा इन्द्रोपस्थानं प्रतीयते । केवलं त्विन्द्राभिधानसामर्थ्यमिन्द्रपदस्य । तत्सामर्थ्य-

---

1. नन्वित्यादि । अयमर्थः—श्रुत्युदाहरणे गार्हपत्यमिति पदमात्रं न प्रमाणम । "कदाचन स्तरीरसि नेन्द्र" इति लिङ्गोदाहरणे सामर्थ्यमात्रं न प्रमाणम् । किंतु वाक्यमेव । शाब्दबोधस्यान्वितार्थविषयकत्यात् वाक्याभावे तदयोगात् । अतः श्रुतिलिङ्गयोर्वाक्यापेक्षया पार्थक्यं कथमिति ।

मात्रादिन्द्रोपस्थानपरता शब्दस्य । तदेकवाक्यतयेतरपदानामपि ऐन्द्रेऽनुविद्ध एव द्वितीयान्तगार्हपत्यश्रुत्या विनियोगः ।

ननु कः प्रकरणविनियोज्यः पदार्थः? फलवत्संनिधावफलं तदङ्गमिति न्यायात् स्वर्गफलप्रयाजाद्यन्वितं दर्शपूर्णमासप्रधानमभिधीयत इति श्रौतमेव शेषत्वं प्रयाजानामिति यतः । श्रुत्याद्यविनियुक्तपदार्थशेषत्व एव हि प्रकरणं प्रमाणम् । किंच अन्यपदार्थान्वितस्वार्थाभिधायिनः शब्दा व्युत्पन्नाः । प्रकरणप्रमाणेन विनियोगे हि प्रयाजादिवाक्यार्थानां दर्शपूर्णमासादिवाक्यार्थेनान्वयो वाच्यः प्रकरणे प्रमाणे । अन्यदा त्वशाब्दं प्रकरणविनियोज्यं स्यात्; वाक्यार्थानां परस्परान्वयाव्युत्पत्तेः । न च [1]फलाफलनयात् करणेतिकर्तव्यतात्वाविभागेनान्वयप्रतीतिः; इतिकर्तव्यतयैवान्वयात् श्रौतत्वोपपत्तेः । न ह्यनिर्धारितविशेषस्यैदमर्थ्येनान्वयसंभवः । अतो न प्रकरणविनियोज्यसद्भाव इति न प्रकरणं नाम प्रमाणमिति—तन्न; फलवदफलनयेन फलवद्दर्शपूर्णमासवाक्येषु विधायकः शब्दः आग्नेयादेः प्रयाजादेश्च करणेतिकर्तव्यतात्वाविभागेनाग्नेयप्रयाजाद्यन्वितस्वार्थपर इति, तदवस्थायामवान्तरवाक्यार्थतां हित्वा तात्पर्यानुगुणं पदार्थतयानीतैः प्रयाजादिभिः प्रधानान्वयात् । करणेतिकर्तव्यतात्वेनान्वये च वाक्यार्थयोरन्वयापत्तेरैदमर्थ्यमात्रेणान्वयात् । करणस्येतिकर्तव्यतारूपविशेषान्वयस्य प्रकरणप्रमाणगम्यत्वात् । ऐदमर्थ्यलक्षणो यः सामान्यसंबन्धः शाब्दः, तदाक्षिप्तत्वात् करणेतिकर्तव्यतालक्षणसंबन्धस्यापि शाब्दता सिद्धा; प्रतीतसामान्यान्वयस्य विशेषान्वयमात्रापादकत्वात् प्रकरणप्रामाण्यस्य । लोके [2]'आरोग्यार्थी भेषजं पिबेत्, अश्विनौ नमस्कुर्यात्' इत्यादौ प्रकरणविनियोज्येऽशाब्दत्वं प्रतीयत इति न शाब्दत्वं तस्य ।

नन्वैदमर्थ्यमात्रस्यैव शाब्दत्वात् स्थानस्याशाब्दत्वान्न तस्य विनियोजकत्वमिति न स्थानं नाम प्रमाणमिति—तन्न ; प्रतीयमानैदमर्थ्यव्यवस्थापरत्वात् स्थानप्रमाणस्य शाब्दत्वोपपत्तेः । "दब्धिरस्यदब्धो भूयासम्" इति मन्त्र उपांशुयाजमन्वधीत उदाहरणम् । प्रकरणाविशेषात् स सर्वप्रधानार्थ इत्याशङ्क्य, असीति मध्यमपुरुषस्य संनिध्यपेक्षत्वादुपांशुयाजस्य संनिधानात् प्रकरणाविरोधाच्च तच्छेषः । अन्यथा त्वनियमेनानेकप्रधानान्वये मन्त्रस्य विकल्पेनान्वयो दुष्परिहर

---

1. फलाफलनयादिति । फलवत्संनिधौ अफलं तदङ्गमिति नयादित्यर्थः ।

2. आरोग्यार्थीति वाक्यमारोग्यफलोद्देशेन भेषजपानविधायकम् । प्रकरणात् तदितिकर्तव्यतात्वेनावगम्यते अश्विनमस्कार इति भावः ।

इत्युक्तम् । नन्वाध्वर्य्यवादिसमाख्याया न प्रमाणता; तस्या लौकिकत्वात् लौकिकवाक्यवत् प्रमाणान्तरसापेक्षत्वात्, प्रमाणान्तरस्य चाभावादिति—तन्न; तदाख्याया लौकिकत्वेऽप्यपौरुषेयत्वेनानादित्वात् प्रमाणान्तरापेक्षाभावाद्विनियोजकत्वोपपत्तेः ।

एतेन वेदान्तेऽपि श्रुत्यादिरूपं व्याख्यातम् ।

ननु [1]ग्राहकव्युत्पत्तिः किं भाष्यकाराभिप्रेतेति? ओमिति ब्रूमः । गुणोपसंहारपादे पुरुषविद्यायां फलवदफलोपयोगदर्शनात् फलवदफलन्याय एव ग्राहकव्युत्पत्तिः, तन्न्यायव्यतिरेकेणादर्शनात्; तत्रैव प्रमाणोपयोगाच्च ।

[2]"ब्रह्म गमयति" इति द्वितीयाश्रुतिः परब्रह्मपरत्वे उदाहरणम् । कार्यचतुर्मुखपरत्वे गत्युपपत्तिरूपलिङ्गम् । तथा "तदैक्षत" इत्यादीति लिङ्गानि प्रसिद्धानि । [3]"नारायण परो ज्योतिः" इत्यादि वाक्यम् "दह्रं विपाप्मम्" इत्यदिविद्योपास्यविशेषनिर्धारणार्थमिति प्रकरणम् । काण्वमाध्यन्दिनयोः "यः पृथिव्यां तिष्ठन्" "यः सर्वेषु तिष्ठन्" इत्यादिना श्रूयमाणयोः पर्याययोः "य आत्मनि तिष्ठन्" इत्यादिस्थाने श्रूयमाणम् "यो विज्ञाने तिष्ठन्" इत्यादि क्रमस्योदाहरणम् । पुरुषविद्येत्याख्या

1. ग्राहकव्युत्पत्तिरिति । अत्रेदं बोध्यम्—प्राभाकरैः ग्राहकग्रहणमिति श्रुत्याद्यतिरिक्तं किंचित् स्वीकृतम् । तन्मते आरादुपकारकेषु प्रयाजादिष्वेव प्रकरणव्यापारः । संनिपातिनां ग्राहकग्रहणाख्येन प्रमाणेनापूर्वार्थत्वम् । ग्राहकग्रहणं नाम अवघातादीनां प्रधानापूर्वेण प्रयोजनप्रयोजनिभावेनान्विताभिधानमेव । यद्यपि ग्राहकस्यापूर्वस्यावघातादिना न साक्षादुत्पादनम्, अथापि अवघातादीनां श्रुतिलिङ्गवाक्यैः व्रीह्याद्यर्थत्वे स्ववाक्यत एव ज्ञायमाने तादृशव्रीह्यादीनां प्रधानापूर्वेण ग्रहणात् व्रीह्यादिद्वारा ग्राहकार्थत्वावसायः । इदमेवाभिप्रेत्यावघातादेरौपादानिकं क्रत्वर्थत्वमित्यपि तैरुच्यते । इदं च ग्राहकग्रहणं सप्तमाद्ये निरूपितमिति तेषामाशयः । अयं तु ग्रन्थकारः प्रकरणवशात् प्रयाजादेरप्यन्विताभिधानविषयत्वात् भाट्टवत् प्रकरणातिरिक्तं तदस्वीकुर्वन्नेव फलवन्न्यायं सामान्यत आहेति ।

2. वेदान्ते श्रुतिलिङ्गादिसर्वोदाहरणस्थलप्रदर्शनं ब्रह्मेत्यादिना ।

3. "नारायण परो ज्योतिः" इति वाक्योदाहरणम् । "यदतः परो दिवो ज्योतिः" इत्याद्युक्तो नारायण इति तद्वाक्यगम्यम् । एतद्घटितनारायणानुवाकस्य "दह्रं विपाप्मम्" इत्युक्तदहरविद्योपास्यनिर्धारणार्थत्वत्पूर्वपक्षे प्रकरणोदाहरणत्वम् । पूर्वपक्षदर्शितमप्युदाहर्तुमिष्टमिति कार्यचतुर्मुखेत्यादिपूर्ववाक्यत एव सुज्ञानम् ।

श्रुत्यादिषु च पूर्वं पूर्वं बलवत्; इतरद् दुर्बलम्।

ननु लिङ्गात् कथं श्रुतिबलीयस्त्वम्? प्रधानसंनिध्यधीनत्वात् प्रधानगृहीतयोः श्रुतिलिङ्गशेषत्वयोः समत्वादिति। उच्यते—गार्हपत्यमिति द्वितीयान्तपदेन मन्त्रस्य गार्हपत्यशेषत्वस्य शीघ्रत्वात्। उपतिष्ठते; अभिदध्यादित्यर्थः। गार्हपत्यस्य मन्त्राभिधेयता हि गार्हपत्यमिति द्वितीयान्तपद-श्रवणमात्रात् प्रतीयते। इन्द्रमभिदध्यादिति नेन्द्रपदमात्रात्; न च पदान्तरैः। इन्द्रपदाभिधानसामर्थ्यात् तदुपस्थानपरता कल्प्या। अतो लिङ्गस्य विप्रकृष्टता।

ननु विप्रकृष्टत्वेऽपि गार्हपत्योपस्थानश्रुत्या एकशेषत्वेऽपि लिङ्गादिन्द्रो-पस्थानशेषत्वमप्यस्तु। न तु लिङ्गस्य बाधः; विरोधाभावात्। न च गार्हपत्योपस्थाने मन्त्रस्य गौणार्थता, इन्द्रोपस्थाने मुख्यार्थतेति विरोध इति वाच्यम्; एकप्र-करणेऽप्युभयप्रमाणत उभयत्र विनियोगात्; मन्त्रोच्चारणावृत्त्या [1]गौणमुख्यार्थस्या-विरोधात्। इन्द्रस्य देवतात्वेन प्रकाशश्चापेक्षितः। न च श्रुतिविरोधे स्मृतेर्वेदानुमानबाधवल्लिङ्गबाध इति वाच्यम्; लिङ्गस्यापि प्रत्यक्षवेदभेदत्वेन स्मृतिसाम्यादुभयत्र विनियोग इति चेत्—तन्न; श्रुत्या [2]द्वारशेषत्वसिद्धेः प्रधानगृहीतत्वमन्त्राम्नानयोश्चरितार्थत्वात् लिङ्गेन ग्राहकसंबन्धाधीनेन स्फुटं द्वारसमर्पणाक्षेपेणेतिकर्तव्यताकाङ्क्षिप्रकरणसव्यपेक्षेण[3] विलम्बितेनाप्यविनियो-ज्यत्वात्। न हि विनियोजकलक्षणप्रकरणनिरपेक्षलिङ्गस्य विनियोजकत्वम्; प्रधानस्येतिकर्तव्यतात्वाकाङ्क्षाभावे विनियोजकत्वाभावात्। ग्राहकमन्त्राम्नानयो-रानर्थक्ये हि विनियोगाकाङ्क्षा। न हि सा आकाङ्क्षाश्रुत्या विनियोगे। एवंच मन्त्रस्य न प्रयोगावृत्तिकल्पना, गौणकल्पमुख्यार्थताक्लृप्तिः।

एतेन "ब्रह्म गमयति" इत्यादिश्रुतेः ब्रह्मणः प्राप्यस्य सर्वगतत्वेन तत्प्राप्तिविरोधिगमनानुपपत्तिरूपाल्लिङ्गात् चतुर्मुखप्राप्तिप्रमापकात् प्राबल्यमुक्तम्। निःसंशयम् "अमानवः स एनान् ब्रह्म गमयति" इति नपुंसकलिङ्गद्वितीयान्तपदेन

---

1. गौणमुख्यार्थस्य। गौणमुख्योभयविधार्थपरस्य मन्त्रस्य।

2. द्वारशेषत्वेति। मन्त्रस्य प्रधानार्थता गार्हपत्योपस्थानद्वारेति श्रुत्या बोधितमिति भावः।

3. प्रकरणसव्यपेक्षेणेति। लिङ्गस्य सामान्यधर्मबोधकप्रमाणापेक्षाया इष्टत्वादिति भावः। विलम्बितेनापीति। शीघ्रविनियोजकत्वस्येव विलम्ब्य विनियोजकत्वस्याप्यभाव इति भावः।

श्रुतिरूपेण प्रधानपरब्रह्मोपासनसंनिहितेन परब्रह्मोपासनप्रतीतेः शीघ्रत्वात् । सर्वगतं प्राप्यमर्थं प्रति गमनानुपपत्तिलिङ्गस्य, अन्यत्र श्रुतहिरण्यगर्भोपासनार्थकल्प्यसंनिधानस्य कल्प्याकाङ्क्षार्थप्रकरणोत्कर्षसापेक्षस्याचिरादेर्हिरण्यगर्भप्रापकत्वकल्पनस्यात्यन्तदुर्बलत्वात् । सर्वगतस्यापि देशविशेषस्थस्यैव प्राप्यत्वेन श्रवणात् गमनमप्युपपन्नमित्युक्तम् ।

लिङ्गवाक्यविरोधस्योदाहरणम् "[1]स्योनं ते सदनं करोमि, घृतस्य धारया सुशेवं कल्पयामि, तस्मिन् सीदामृते प्रतितिष्ठ, व्रीहीणां मेध सुमनस्यमानः" इति । तत्र 'सदनं करोमि' 'प्रतितिष्ठ' इति लिङ्गाभ्यां सदनप्रतिष्ठापने प्रतीयेते । 'तस्मिन् सीद' इति पूर्वार्थप्रदर्शनेनैकवाक्यता च । तत्र वाक्याल्लिङ्गं प्रबलम् ।

ननु लिङ्गस्य वाक्यानपेक्षस्य न विनियोजकत्वम् । पदानां संभूयकारिताव्युत्पत्तेः [2]अन्वितार्थावगतानुष्ठेयार्थप्रकाशकलिङ्गेन वाक्यसापेक्षेण मन्त्रविनियोग इति वाक्याल्लिङ्गं दुर्बलम् । अतो वाक्यबलात् "स्योनं ते" इत्यादिमन्त्रद्वयस्योभयत्र विनियोगः । न च 'तस्मिन् सीदामृते' इत्यादीनां पदानां सदनाप्रकाशकत्वान्न सदने विनियोगः; तथा 'स्योनं ते' इत्यादिपदानां प्रतिष्ठापनाप्रकाशकत्वान्न प्रतिष्ठापने विनियोग इति वाच्यम् ; स्योनादिपदानामपि सदनाप्रकाशकत्वात् सदनपदानन्वयापत्तेः । 'तस्मिन् सीद' इत्यादिपदानामपि प्रतिष्ठापनानन्वयः । अतो लिङ्गस्य संनिहितयोग्यसर्वपदापेक्षमेव विनियोजकत्वमिति चेत्—मैवम्; ऋङ्मन्त्रवत् पाठमात्रात् यजुःपदानां संभूय बोधकत्वाभावाद् 'स्योनं ते' इत्यादिमन्त्रद्वयमपि यजुरेव । किंत्वनुष्ठानार्थनिश्चयात् संभूय बोधकत्वम् । तन्निश्चयश्च लिङ्गादिति लिङ्गपूर्वकमेव पदान्वयाकाङ्क्षेति लिङ्गाद्विप्रकृष्टं वाक्यम् । अन्वयार्थपूर्तिस्तु स्योनादिपदमात्रात्, न त्वनुष्ठेयार्थान्तरपरात् वाक्यात् । 'तस्मिन्' इति परामर्शश्च भिन्नवाक्यत्वेऽपि 'एतस्यैव रेवतीषु' इत्यत्रेव संभवतीति वाक्यं दुर्बलमेव । तत्र हि ज्योतिष्टोमप्रकरणे

---

1. हे पुरोडाश, स्योनं सुखकरं ते स्थानं करोमि कल्पयामि । घृतस्य धारया सुशेवं सुखशयनयोग्यं तत् स्थानं कल्पयामि । तस्मिन् सीद उपविश । हे व्रीहीणां मेध सारभूत, शोभनमनस्कः सन् अमृते मरणरहिते तत्र स्थाने प्रतिष्ठितो भवेति मन्त्रार्थः ।

2. अन्वितार्थावगतेति । अन्वितार्थरूपेणावगतेत्यर्थः ।

"एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत" इत्यस्य पृथग् वाक्यत्वेऽपि एतस्यैवेत्यस्मिन्नपूर्वार्थपरामर्शो [1]दृश्यते ।

वेदान्ते तु "सदेव सोम्येदमग्र आसीत्" इत्याद्यनुमानरूपवाक्यं प्रधानकारणत्वे हेतुः । परब्रह्मकारणत्वे त्वीक्षणरूपं लिङ्गम् । पदान्तरान्वयनिरपेक्षम् "ऐक्षत" इत्यादिपदाभिधानसामर्थ्यमात्राच्च न कारणत्वावगतिः । वाक्यं तु प्रतिज्ञाहेत्वादिपरपदान्वयापेक्षितया विलम्बितम् । ईक्षणलिङ्गस्यानन्यथासिद्धत्वसाधनपराणि "गौणश्चेत्" इत्यादिसूत्राणि ।

वाक्यप्रकरणविरोधे तत्रैव "अग्निरिदं हविरजुषत" इत्यादिसूक्तवाके "अवीवृधेतां महो ज्यायोऽक्राताम्" इत्याद्युभयदेवतापरपदसमुदाय उद्दरणम् । तत्र वाक्यस्य प्रकरणात् प्राबल्यात् पौर्णमासादावग्नीषोमादिदेवतानां विभज्यान्वयवत् तच्छेषत्वेन विभज्य तेनान्वयः ।

ननु कृत्स्नस्य सूक्तवाकस्योभयत्रान्वयः; वाक्यात् साक्षात् पदार्थान्वयवत् इतिकर्तव्यतार्थप्रकरणाद्व्यप्रधानाकाङ्क्षया पदार्थान्वयस्य समर्थत्वात् प्रधानाकाङ्क्षायाः प्राबल्यात् प्रकरणस्यैव प्राबल्यादिति मैवम्—न; प्रकरणात् सर्वकरणदेवतान्वयस्य कल्प्यत्वात्; वाक्यात् "अवीवृधेताम्" इत्यादिपदानामग्नीषोमादिपदैक्यस्य क्लृप्तत्वात् । क्लृप्तकल्प्ययोश्च क्लृप्तप्राबल्याद्वाक्यात् प्रकरणबाध एव ।

वेदान्तेऽपि "दह्रं विपाप्मम्" इत्यादिप्रस्तुतं प्रधानभूतं विद्याद्वयं प्रकरणमुपास्यविशेषनिर्धारकाकाङ्क्षि । "सहस्रशीर्षं देवम्" इत्यनुवाकस्य प्रकरणेन प्रमाणेन दहरोपासनैकवाक्यभावः कल्प्यः । "नारायण परो ज्योतिः" इत्यादिना "अथ यदतः परो दिवो ज्योतिः" इत्यादिषु जगत्कारणतयोक्तमुपास्यवस्तु 'परं ज्योतिः' इत्यादिशब्दैर्निर्दिश्य नारायणत्वविधानावगतेर्वाक्यादनेकविद्यान्वयस्य क्लृप्तत्वात् प्रकरणबाधः सिद्धः ।

---

1. दृश्यत इति । अस्य विचारः पूर्वमीमांसायां रेवत्यधिकरणे (2-2-12) द्रष्टव्यम् । तत्रापूर्वयागपरं तद् वाक्यमित्युक्तम् । एतस्यैवेति पदं प्रकृतवाक्यविधीयमानपरामर्शि । पूर्वप्रस्तुताग्निष्टुद्यागसादृश्यमादाय एतस्यैवेति एवकारघटितपदोपपत्तिरित्यन्यदेतत् । तावान् क्लेशः प्रकृते तस्मिन् सीदेति वाक्ये नास्ति । अथापि पूर्वोत्तरवाक्ययोः परस्परान्वयं विनैवोपयोगोऽविशिष्टः ।

प्रकरणस्थानयोर्विरोधे तु राजसूयप्रकरणे अभिषेचनीयक्रमे “अक्षैर्दीव्यति, राजन्यं जिनाति” इत्यादिरुदाहरणम्। तत्र स्थानात् प्रकरणस्य प्राबल्यात् प्रकरणेन सर्वप्रकरणान्वयो विदेवनादेः।

ननूभयोरपि वाक्यार्थान्वयहेतुत्वात् प्रकरणस्थाने तुल्यबले। आकाङ्क्षालक्षणं हि प्रकरणम्। स्थानं तु संनिधिः। तदुभयमप्यन्वयहेतुः। न च स्थानस्य संनिधिमात्रत्वादन्वये आकाङ्क्षापेक्षेति वाच्यम्; आकाङ्क्षाया अपि संनिध्यपेक्षत्वेन तुल्यत्वात्। प्रकरणस्वारस्यात् सर्वान्वये संनिधिस्वारस्यादेवान्वयोऽपि स्यादिति।

मैवम्; अभिधानपर्यवसान एव पाठसंनिधेरुपयोगात् अभिषेचनीयनिरपेक्षम् ‘अक्षैर्दीव्यति’ इत्यादिवाक्यानां पर्यवसितत्वात्। पर्यवसाने च विनियोजकप्रमाणसंनिधेरेव बलवत्तया आकाङ्क्षाभावे च पाठसंनिधेरप्रयोजकत्वात्। अभिषेचनीयस्थानस्य तद्देवनादेराम्नानार्थत्वेनाप्युपपत्तेरन्वयार्थत्वाभावात् स्थानबाध एव।

वेदान्तेऽपि दहरविद्याप्रकरणे जीवात्मपरप्रजापतिवाक्यसंनिधौ श्रूयमाणमपि “एवमेवैष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य” इत्यादि प्रकरणाकाङ्क्षया अन्वयहेतुस्थानाख्यसंनिधेर्दुर्बलत्वात् प्रकरणान्वयिपरविद्याशेषमेव।

न च “एवमेवैष संप्रसादः” इत्यादेः वाक्यात् परविद्याशेषत्वम्, न प्रकरणादिति वाच्यम्; परंज्योतिःशब्दस्यादित्यादिपरत्वेन जीवपरत्वेनापि योजयितुं शक्यत्वात्। प्रकरणे तु परंज्योतिरादिशब्दानां परमात्मपरत्वमिति प्रकरणादेव परमात्मशेषता। प्रकरणात् तच्छेषत्वे च स्थानात् प्रजापतिवाक्यशेषताशङ्कापि न युक्ता।

स्थानसमाख्ययोर्विरोधे तु दर्शपूर्णमासयोः ‘पौरोडाशिकम्’ इति समाख्याते काण्डे सांनाय्यक्रमे “शुन्धध्वं दैव्याय कर्मणे देवयज्यायै” इति पात्रप्रोक्षणार्थो मन्त्र उदाहरणम्। तत्र समाख्यायाः स्थानाद् दुर्बलत्वात् सांनाय्यपात्रप्रोक्षण एव विनियोगः। न पुरोडाशपात्रप्रोक्षणे।

ननु समाख्यायाः पुरोडाशान्वयबोधकत्वात् संनिधेः सांनाय्यपात्रस्याप्यवगम्यमानत्वेन समबलत्वादुभयत्रान्वयः। न च समाख्यायाः पौरुषेयत्वेन

दुर्बलत्वान्न तयोः साम्यमिति वाच्यम्; समाख्यायाः सर्वत्राप्रमाणतापत्तेरिति चेत्;

मैवम्; संनिधानकल्पनापूर्वकं समाख्याया अन्वयहेतुतया प्रमाणत्वेन विलम्बितत्वात्; स्थानस्य तु संनिधित्वेनाविलम्बितत्वात्। न हि समाख्या संनिधानकल्पनाव्यतिरेकेण प्रमाणम्। अतः समाख्यायाः स्थानप्रमाणेन बाध एव।

वेदान्तेऽपि उपकोसलविद्यासंनिधौ श्रूयमाणाग्निविद्याया आख्यातः पृथक्फलसाधनविद्यात्वानवगतिः; किंतु स्थानप्रमाणेनाक्षिविद्याङ्गत्वमेव। पृथग्विद्यात्वे फलस्य कल्प्यत्वेन विलम्बितत्वात् फलान्तरसंनिधेः कल्प्यत्वाच्च। फलवदुपकोसलविद्यासंनिधिः क्लृप्तः। [1]अग्निविद्यायाः फलश्रुतिरर्थवाद इत्युक्तं भाष्ये।

ननु भाष्ये स्थानप्रमाणादक्षिविद्याङ्गतोक्तेति—तन्न; अक्ष्यन्तराधिकरण एव ब्रह्मविद्याया असमाप्तेस्तन्मध्यगताग्निविद्या ब्रह्मविद्याङ्गमिति स्थानप्राबल्यस्योक्तत्वात्। नन्वेवमपि तत्र मध्यगतशब्दः प्रकरणप्रमाणपर इति—तन्न; तस्य स्थानप्रमाणपरत्वेनापि योजयितुं शक्यत्वात्।

एवं विप्रकर्षाद्दौर्बल्यं पूर्वपूर्वेभ्य उत्तरेषाम्; विरोधे चैतेषां बाध इति सिद्धम्।

ननु विरोधे दुर्बलस्य प्राप्तस्य प्रमाणस्य बाधः; उताप्राप्तस्येति। न तावदाद्यः, प्राप्तस्य बाधायोगात्। प्राप्तिर्नाम निश्चयः; बाधो नाम मिथ्यात्वम्। नापि द्वितीयः, अप्राप्तस्य बाधायोगादिति। उच्यते—सर्वज्ञानानां यथार्थत्वेऽपि प्राबल्यनिबन्धनं निश्चयात्मकत्वम्। प्राबल्यं च शीघ्रोदयादिना। शीघ्रता चोक्ता श्रुत्यादेः। अतः प्रबलप्रमाणसंनिधौ प्राप्तस्यापि दुर्बलप्रमाणस्य न कार्यकरता, प्रबलाभिभूतत्वात्। आदित्योदये चन्द्रसंनिधिसद्भावेऽपि चन्द्रिकाया यथादित्यरश्म्यभिभूतत्वेनाकार्यकरत्वमेव

---

1. ननु अग्निविद्यायाः "अपहते पापकृत्याम्; लोकी भवति · सर्वमायुरेति; ज्योग्जीवति; नास्यावरपुरुषाः क्षीयन्ते; उप वयं तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च" इति फलश्रवणात् न फलस्य कल्प्यत्वम्। अतः पृथग्विद्यात्वमेवेत्यत्राह—**अग्निविद्याया इति**। अर्थवादत्वादेवानेकफलकीर्तनं घटते। एषां च मोक्षाधिकृताविरोधित्वं भाष्य एवोपपादितम्।

वस्तुतो बाधः; प्राप्तज्ञानस्य ज्ञानान्तरेण बाधायोगात्; वृत्तिज्ञानस्याचिरस्थायित्वेन नश्वरत्वाच्च । विरोधिज्ञानोदय एव हि पूर्वज्ञानस्य विनाशः । न हि मुद्गरादिना घटादिरिव ज्ञानं ज्ञानान्तरेण बाध्यते । अतः फलापहार एव बाधः सर्वत्र प्राप्तदुर्बलप्रमाणस्य । शुक्तिकारजतज्ञानयोः प्रत्यक्षत्वेऽपि रजतहेत्ववयवानामल्पत्वाच्छुक्त्यवयवबाहुल्याच्च तद्ग्राहकयोरपि प्राबल्यदौर्बल्ये । दुर्बलप्रमाणकार्यरजतव्यवहारबाध उक्तो यथार्थख्यातिवादे । तत्र शुक्त्यवयवबाहुल्ये [1]नयनदोषादिना रजताद्भेदो न गृहीतः । श्रुतिलिङ्गादौ तु चित्तदोषाद्विप्रकर्षो न गृहीतः पूर्वपक्षदशायाम् । विप्रकर्षात् तत्प्राबल्यादिज्ञानेऽपि श्रुत्यादिसद्भावेऽपि लिङ्गादिप्रमाणावलम्बनं तु प्रमाणाग्रहणकृतमिति तार्तीये श्रुतिलिङ्गादौ, षाष्ठे अपच्छेदादौ, दाशमिके कृष्णलादौ च प्राप्तबाध एव; अप्राप्तबाधायोगात् ।

ननु लिङ्गस्य श्रुतिविरोधेऽपि प्रामाण्यं नापगतमिति अनुष्ठानरूपव्यवहारबाधोऽपि न स्यात् । अनुष्ठानफलत्वात् प्रमाणस्येति—तन्न; श्रुतिसंनिधौ फलाभावेऽप्यन्यत्र तल्लिङ्गस्यैव विनियोजकत्वेन फलसद्भावात् । किंच प्रमाणस्य सतः सर्वत्र फलेन भाव्यमिति न नियमः; धारावाहिकविज्ञानेष्वविशेषेण प्रामाण्येऽप्युत्तरज्ञानानां व्यवहारफलाभावात् । तत्रापि प्रथमज्ञानस्य प्राबल्ययुक्तिप्राबल्यात् व्यवहारहेतुता नान्येषाम् । एवं श्रुतेः शैघ्र्याद् गार्हपत्योपस्थानविनियोगे सति मन्त्रस्यामननशेषत्वयोश्चरितार्थत्वात् न पुनस्तत्रैव लिङ्गादपीन्द्रप्रकाशने विनियोगः ।

ननु धारावाहिकविज्ञानानां सर्वेषामेकविषयत्वात् प्रामाण्येऽप्युत्तरज्ञानानां कृतकरत्वेन न फलम्; लिङ्गस्य तु प्रामाण्ये भिन्नविषयत्वेनानुष्ठानफलमवश्यमिति—तन्न; श्रुतिलिङ्गयोरप्येकमन्त्रविषयत्वेन समत्वात् । भिन्नविषयत्वे तु न विरोध इति न बाध्यबाधकभावः ।

नन्वेकमन्त्रविषयत्वेऽपि श्रुतिलिङ्गयोः पृथक्प्रमाणत्वाद् गार्हपत्येन्द्रोपस्थानविनियोगद्वयपरतेति न विरोध इति—तन्न; फलवत्संनिधावफलत्वेन श्रूयमाणमन्त्रशेषत्वानिर्वाहद्वारा विशेषाकाङ्क्षायां तत्समर्पकप्रमाणद्वयावतारे प्रबलप्रमाणेन गार्हपत्यद्वारसमर्पणात् मन्त्राख्यविषयस्यैकद्वारशेषत्वमेव विषयः । गार्हपत्यशेषत्वं किं गार्हपत्योपस्थानान्निर्वाह्यम्? उतेन्द्रशेषत्वमिन्द्रो-

1. नयनदोषादिनेति । अगृहीते इति शेषः ।

पस्थानादिति हि शङ्का । अतः सर्वथैकविषयत्वं श्रुतिलिङ्गयोरिति स्थितम् । अतः प्रबलप्रमाणान्मन्त्रस्य द्वारशेषत्वे निरूढे पुनरपि तत्र बुभुत्साभावान्न विलम्बितप्रमाणेन तत्समर्पणमिति ।

श्रुतिलिङ्गादीनां संनिपातेऽपि प्रमाणाबाधादेव बाधचिन्ता युक्ता । न ह्यग्न्यनुष्णत्वानुमानवल्लिङ्गादिः प्रमाणम्; श्रुतिसंनिधावनुष्ठानहेतुत्वाभावेऽपि तल्लिङ्गस्यैव तत्र प्रमापकत्वात् । द्रव्यत्वं तु न कदाचिदग्न्यनुष्णत्वानुमापकम् । अतो न श्रुत्यादिविरोधे लिङ्गादेर्हेत्वाभासतुल्यता । अतः फलासिद्धिरेव बाधशब्दार्थः; न तु द्रव्यत्वलिङ्गादग्निगतानुष्णत्वज्ञानानुदयवत् लिङ्गादिन्द्रोपस्थानज्ञानानुदयः । विरोधे दुर्बलस्य प्रामाण्याभावे सर्वत्रापि तथात्वापातः; तस्याप्रामाण्यस्य निश्चितत्वात् । ततश्च "त्रिः स्वाध्यायं वेदमधीयीत" इति स्वशाखायाः कृत्स्नाया विनियुक्तत्वेऽपि "बर्हिर्देवसदनं दामि" इत्यादिमन्त्रलिङ्गाद्बर्हिर्लवनप्रमापकत्वस्य हानिः स्यात् ।

ननु तर्हि प्राप्तत्वादेव न बाधः शक्य इति—तन्न; पूर्वापरापच्छेदेऽपि तथात्वापत्तेः । न तु प्राप्तबाध इष्टः । तत्र ह्यपच्छेदयोः क्रमेण प्राप्तयोः तद्विषयत्वेन प्राप्तयोर्नैमित्तिकयोः सदक्षिणादक्षिणत्वेन विरुद्धार्थयोरपि न पूर्वनैमित्तिकशास्त्रबाधः । किंत्वेकप्रयोगे विरुद्धत्वेन सदक्षिणादक्षिणयोर्युगपदनुष्ठानाशक्तेरन्यतरानुष्ठानबाधे प्राप्ते, उत्तरस्य पूर्वबाधकत्वमुक्तं तत्रापीति प्राप्तबाध एव; पूर्वापच्छेदनिमित्तस्य ज्ञातत्वेन नैमित्तिकशास्त्रस्यापि प्राप्तत्वात् । उत्तरनिमित्तं तु जायमानं पूर्वनिमित्तस्य स्वनैमित्तिकानुष्ठानद्वारा विरोधित्वेन तदबाधमानमुदेतीति तत्राप्यनुष्ठान एव विरोधात् । तथा कृष्णलेऽवघातः अतिदेशप्राप्तप्राकृतव्रीहिदष्टवैतुष्यप्रयोजनाभावाद् बाध्यत इति प्राप्तबाध एवेत्यनुष्ठानबाध एव ।

एतेनेदं निरस्तम्; यद् [1]गुरुमतावलम्बिभिरुक्तम्—लिङ्गादेरन्यत्र दृष्टं

---

1. गुरुमतेति । "सामान्यतः प्राप्तिं मन्वाना विशेषमपश्यन्तः स्मृतिप्रमोषनिमित्तं प्राप्तिज्ञानं व्यपदिशन्ति । विशेषावगमात् तेषां निवर्तते" इति गुरुग्रन्थः । अयमर्थः—लिङ्गविनियोज्यबर्हिर्लवनमन्त्रादिगतस्यार्थप्रकाशनसमर्थमन्त्रत्वरूपसामान्यधर्मदर्शनात् ऐन्द्रीमन्त्रेऽपि लिङ्गं प्राप्तमिति भ्रान्तिज्ञानं जायते । भ्रान्तिज्ञानं नाम ग्रहणस्मरणात्मकज्ञानद्वयम् । 'इदं रजतम्' इति शुक्तिकाग्रहणरजतस्मरणोभयात्मकम् । इदं च रजतस्मरणं स्मृतिप्रमोषः; आपणदृष्ट-

विनियोजकत्वं स्मरतो ग्राहकमानामानयोश्चरितार्थविषयेऽपि[1] स्मृतिप्रमोषाद्वि-नियोगप्रमितिव्यवहारो भेदाग्रहकारितः प्राप्तभेदग्रहाद्बाध्यत इति ; लिङ्गप्रमितेः स्मृतित्वाभावात् ; स्मृतित्वे च प्रमापकत्वाभावात् । प्रमापकत्वे च प्राप्तिश्च स्यात् । तच्चाशक्यम् । न चाभासप्राप्त्या बाधोपपत्तिः; वस्तुतो बाधाभावात् । बाध्यत्वेनाङ्गीकारे षाष्ठदाशमिकयोरपि आभासत्वापत्तिप्राप्तेः तत्र प्राप्तिद्रढिमा । तृतीयादिषु प्राप्तेराभासत्वं बाधदार्ढ्यं च । प्रामाण्याभासत्वे कथं बाधदार्ढ्यम् ? अतो बाध्यत्वे दृढा प्राप्तिरङ्गीकार्या । अतो न बाधवैषम्यम् । अतः प्रमाणेन प्राप्तस्य बाधः प्रबलप्रामाण्यस्य बाधकत्वं तृतीयषष्ठयोः । दशमे तु कार्यतो बाध इति निरवद्यत्वेन सर्वं सुस्थम् ।

इति
श्रीमदात्रेयनाथसूरिसूनुना मेघनादारिसूरिणा विरचिते
नयद्युमणौ
श्रुतिलिङ्गादिनिरूपणम्

रजतस्य 'तद् रजतम्' इति तत्तांशस्मृतिप्रमोषेण रजतांशमात्रस्मरणात् । अत एव शुक्तिग्रहणरजतस्मरणयोर्भेदाग्रहः । तद्वदिहापि लिङ्गाविनियोज्यमन्त्रस्थलीयप्राप्ते-रैन्द्रीलिङ्गग्रहणकाले स्मरणे सति भेदाग्रहात् 'इदं रजतं जानामि' इतिवत् 'लिङ्गं प्राप्तं-जानामि' इति प्राप्तिप्रमितिव्यवहारो भवति । प्राप्तिर्नामेह विनियोजकत्वम् । यदा तु विनियोजकश्रुतिदर्शनात् लिङ्गे प्राप्तभेदग्रहः, तदेव तद्बाधः । तथाच भ्रान्ति-प्राप्तबाध एवेह प्राप्तबाध इति ।

1. चरितार्थविषयेऽपीति । श्रुतिविनियुक्तमन्त्रविषयेऽपीत्यर्थः ।

## ८. यथार्थख्यातिनिरूपणम्

प्रकाश्यते यथाशक्ति श्रीमल्लक्ष्मणयोगिनः ।
सर्वविज्ञानयाथात्म्यविषया गहना मतिः ॥

ननु भाष्यकारस्य सर्वज्ञानयाथात्म्यमेव नेष्टम्; भाष्यादौ विपरीतख्यातेरप्युक्तेः ।

तथा हि—श्रीगीताभाष्ये "तमस्त्वज्ञानजम्" इत्यत्र "ज्ञानं वस्तुयाथात्म्यावबोधः । तस्मादन्यत् तद्विपर्ययज्ञानम्" इति । तथा "मोहो विपर्ययज्ञानम्" इत्यादि तत्रैव । तथा पञ्चदशे "तमेव चाद्यम्" इत्यत्र, "कथमनादिकालप्रवृत्तो गुणमयभोगसङ्गः तन्मूलं च विपरीतज्ञानं निवर्तते" इति । तथाष्टादशे "मोहात् तस्य" इत्यत्र "अज्ञानं ज्ञानविरोधि विपरीतज्ञानम्" इति । तथा "अधर्मं धर्मम्" इत्यत्रापि "सर्वं विपरीतं मन्यत इत्यर्थः" इति । एवं तत्र तत्रान्यथाख्यात्युक्तिबाहुल्यं दृश्यत इति तदप्यभ्युपगतमिति चेत्;

तन्न; परस्परविरुद्धाङ्गीकारानुपपत्तेः । न ह्येकस्यैव ज्ञानस्य यथार्थता विपरीतार्थता च । न च विपरीतख्यातिरेव भाष्यकाराभिमता; "यथार्थं सर्वविज्ञानम्" इति तस्या यथार्थतोक्तेः । भाष्येऽन्यथाख्यात्युक्तिस्तु पूर्वपक्षतया । पूर्वपक्षावलम्बादेव केषांचित् ख्यात्यन्तराणां निरासोऽपि । अत एव हि तत्रैव "सर्वं विज्ञानं यथार्थम्" इत्युपसंहृत्य "तैस्तैर्वादिभिरेव प्रपञ्चितानीति न तत्र यत्नः क्रियते" इति पूर्वनिरस्तेतरख्यात्यन्तराणां[1] यथार्थख्यातिव्यतिरिक्तानां निरस्तत्वोक्तिः । अन्यत्र विपरीतज्ञानोक्तिस्तु भेदाग्रहादिपरा । अत एव हि त्रयोदशाध्याये "सामानाधिकरण्येन प्रतीतिस्तु वस्तुतः शरीरस्य गोत्वादिवदात्मविशेषणतैकस्वभावतया तदपृथक्सिद्धेरुपपन्ना" इति [2]भेदाग्रहहेतुमुक्त्वा, उत्तरत्र "प्रकृतिसंनिधानादेव मूढाः प्रकृत्याकारमेव वेदितारं पश्यन्ति" इत्युक्तिः । अतो यथार्थख्यातिरेव राद्धान्तः ।

---

1. अन्तरशब्दोऽत्र विशेषपरः । अत इतरशब्देन न पुनरुक्तिः ।

2. भेदाग्रहहेतुमिति । यथा क्षीरनीरयोः संसर्गविशेषबलात् भेदाग्रहः; तेन क्षीरमिति नीरमिति वा व्यवहारः, तथेति तत्त्व प्रथमश्लोकतात्पर्यचन्द्रिकायां द्रष्टव्यम् ।

तत्परिपन्थिनो वैशेषिकादयः । तथाहि—विपरीतख्यातिरेव भ्रान्तिर्युक्ता । ननु विपरीतख्यातिर्नाम का? न तावद्विपरीतैव ख्यातिः सा; ज्ञानस्य स्वतो वैपरीत्याभावात् । ज्ञानं हि वस्तुनिश्चयः । न हि तस्य वैपरीत्योपपत्तिः । वैपरीत्यं हि विपरीताकारत्वम् । तच्च अन्याकारस्य सतोऽन्याकारत्वम् । न च मृदादेः पिण्डाकारस्य घटाकारता दृश्यत इति—पिण्डाकारस्य सतो घटाकारत्वादर्शनात् । पिण्डत्वाकारविरोधी हि घटाकारः ।

न च तद्वज्ज्ञानेऽप्यस्त्विति वाच्यम्; तदाकारस्य सत्यत्वे भ्रान्तित्वानुपपत्तिः । असत्यत्वे तु न तस्य ज्ञानाकारता; तुच्छस्य वस्त्वाकारतानुपपत्तेः । तदाकारत्वे च ख्यातिरेव तुच्छेति शुक्तिकादौ न रजतार्थिप्रवृत्तिः । रजतख्यात्या प्रवृत्तिरिति तु न; तस्य तस्याः तुच्छत्वात् । बाधोऽपि न तत्ख्यातेः । 'नेदम्' इति विषयस्यैव हि बाधधीः । न तु 'तत्ख्यानमपि न' इति । सर्वबुद्धिसत्यताप्रपञ्चस्तु भाष्ये ।

अथ विपरीतवस्तुविषया ख्यातिर्विपरीतख्यातिरिति—तन्न; वस्तुनो वैपरीत्यं सत्यमसत्यं वेति विकल्पासहत्वात् । आद्ये न भ्रान्तिता; धर्मत्वानुपपत्तेः ।

अथ सन्तमेवार्थं विपरीतमवगमयन्ती ख्यातिर्विपरीतख्यातिरिति—तन्न; अर्थवैपरीत्ये विपरीतत्वेन ख्यापनानुपपत्तेः । तदुपपत्तौ च ख्यायमानघटादिसत्तायामपि न विश्वासः ।

अथ घटादेः सद्भावान्न वैपरीत्यमिति—तन्न; तत्सत्त्वे मानाभावात् । ख्यातेस्तत्र मानत्वे तत एव शुक्तिकारजतादिसत्ताप्यङ्गीकार्या; अविशेषात् । तत्र बाधात् तदसत्त्वे तत्ख्यातेरप्यसत्त्वापातः, ख्यात्यधीनत्वात् सत्त्वस्येत्युक्तम् ।

अथ विपरीतज्ञानविषयत्वात् तद्बाध इति—तन्न; विपरीतवस्तुज्ञानाभावस्योक्तत्वात् । बाध्यार्थविषयत्वेन ज्ञानवैपरीत्याङ्गीकारेऽपि विपरीतज्ञानसिद्धावितरेतराश्रयता; बाध्यार्थविषयत्वेन ज्ञानवैपरीत्यम्; एतत्सिद्धौ च तत्सिद्धिरिति ।

अथान्याकारस्य सतोऽन्याकारतां बोधन्ती[1] ख्यातिर्विपरीतेति—तन्न; यथाबोधिताकारस्यैवार्थतत्त्वरूपत्वेन ज्ञानयाथार्थ्यापातात् ।

---

1. बोधन्तीति । बुध अवगमने इति भौवादिकस्य परस्मैपदिनो रूपम् । अत्र "बुध्यमाना वस्तुरूपमन्यथा स्थितमन्यथा" इति नयवीथीवचनानुवादः ।

अथान्याकारस्य सतोऽन्याकारत्वेन ख्यानमेव तस्या मिथ्यात्वमिति— तन्न; व्यक्त्यन्तराकारस्य सतो गोत्वादेर्व्यक्त्यन्तराकारतां बोधयन्त्याम-यथार्थत्वापातात् । अन्यत्रैव सतोऽन्याकारताबोधनमिति विशेषणेऽपि 'इदं रजतम्' इति शुक्तिकादौ प्रतीते रजते, अन्यत्र तत्सत्त्वानिश्चयादनाश्वासः ।

न च शुक्तिकायां प्रतीतस्यापि बाधादन्यत्र तत्सत्तेति—प्रतीतस्यैकत्र बाध्यत्वादन्यत्रापि बाध्यत्वसंदेहात् । न च तत्र सत्त्वान्न बाध्यत्वसंदेह इति— यत्र तस्य प्रतीतिः, तत्र तस्य निषेधादन्यत्रापि योगादन्यत्र तन्निषेधापातात् ।

न च यत्र प्रतीतिः, तत्रैव 'नेदं रजतम्' इति निषेधान्नान्यत्र निषेध इति— 'पूर्वं सत्; इदानीं न' इति कालभेदव्यवस्थाप्यत्वापातात् । अथ प्रतिपन्नोपाधौ बाधप्रतीतेर्न कालभेदव्यवस्थेति—एवं तर्हि रजतादेरनिर्वचनीयत्वमेवायातम् । असतः ख्यात्यनुपपत्तेः; सतो बाधानुपपत्तेः । तदुक्तम् —

"[1]नान्यत्र भाति रूप्यं तदिह बाधात्तु कल्प्यते ।
इहासद् भाति चेद् रूप्यं ख्यातिः सत्तां न कल्पयेत् ॥
सत्तां चेत् कल्पयेत् ख्यातिरसत्ख्यातेरयोगतः ।
यत्र यद्भाति तत्रैव तत्सत्तां किं न कल्पयेत् ॥
तत्र बाधान्न कल्प्या चेन्नान्यत्र ख्यात्यभावतः ।
ख्यातिं विनापि चेत् सत्ता कल्प्यते नियतिः कुतः ॥
सच्चेद्भाति कथं बाधो भाति चेत् तदसत् कथम् ।
सदसद्भ्यामतोऽत्राच्यं शुक्तौ रूप्यमिति स्थितम् ॥"

इत्यनिर्वचनीयख्यातिपक्षसंक्षेपः ।

अत्रोच्यते—अनिर्वाच्यरजतसत्ताङ्गीकारेऽपि तस्यानिर्वाच्यरजततया अग्रहणाद्विपरीतख्यातिपक्षपातः । न हि शुक्तिकारजतादेः सदसदनिर्वचनीयतया ग्रहः । तथात्वे च न प्रवृत्त्युपपत्तिः । सम्यग्रजतधीर्हि प्रवृत्तिहेतुः । प्रवृत्तिर्हि प्रवर्तमानस्य तत्प्रयोजनज्ञानात् अन्यप्रयोजनाज्ञानाच्च ।

न च सम्यग्रजतसादृश्यादनिर्वाच्यरजतस्य तत्र तत्प्रवृत्तिहेतुतेति; तस्य सादृश्येऽपि ततः प्रवृत्त्यभावात् । रजतबुद्धेर्हि प्रवृत्तिः । वस्तुतो न तत्सादृश्यं च तस्य; प्रतीत्यात्मकवस्त्वात्मकयोर्भास्वरत्वादिसादृश्याभावात् ।

1. इष्टसिद्धिस्थोऽयं संग्रहग्रन्थः ।

न चानिर्वाच्यरजतस्यापि वस्त्वात्मकता; ज्ञातत्वाभिमानविरोधात् । न हि घटादिवत् तदात्मकत्वमिष्टम् ।

न च प्रतीत्यतिरिक्तो रजतादिः शुक्तिकादौ जायत इति—विकल्पासहत्वात् । किं तद् भावात्मकम्? उताभावात्मकम्? कोट्यन्तरं वा? नाद्यः; तस्य कटकादिकार्यकरत्वादर्शनात् तत्र प्रवृत्त्यनुपपत्तेः । नापि द्वितीयः; अभावस्य भावादर्शनात्[1] प्रवृत्त्यनुपपत्तेरेव । सादृश्येऽपि तदित्येव प्रवृत्तेः, सदृशमित्येवाप्रवृत्तेरन्यथाख्यानापातः । तृतीयोऽपि विकल्प्यः—किं कोट्यन्तरं सदसदात्मकम्? तद्विलक्षणमनिर्वाच्यम? शून्यात्मकं वा? नाद्यः; एकस्य युगपत् सदसदात्मकविरुद्धधर्मवत्त्वानुपपत्तेः । तदुपपत्तावपि सादृश्यानुपपत्तेश्च । नापि द्वितीयः; अनिर्वाच्यवस्तुसत्तायां प्रमाणाभावात् । तच्च वक्ष्यते । नापि तृतीयः; शून्यवस्तुनि प्रमाणाभावात् । तत्सद्भावेऽपि तस्य रजतसादृश्याभावाच्च ततो न प्रवृत्तिः । शून्यात्मकता च तस्य नेष्टा । सदसदात्मकरजतसत्ताप्रमाणसद्भावेऽपि न तस्य रजतसादृश्यमित्युक्तम् ।

न च तस्य परमार्थरजतसाजात्यात् 'इदं रजतम्' इति प्रतीतिप्रवृत्ती इति—परमार्थरजतवत् तस्याबाध्यत्वप्रसङ्गात् । मिथ्यात्मत्करजतस्य परमार्थरजतस्य च व्यक्तिव्यङ्ग्यजात्योश्च साजात्यानुपपत्तेश्च ।

न चानिर्वाच्यरजतवदितररजतस्यापि मिथ्यात्वात् साजात्यमिति—सत्यमिथ्यात्मकरजतविभागाभावप्रसङ्गात्; इतररजतस्य मिथ्यात्वासिद्धेश्च । न च दृश्यत्वात् तस्य मिथ्यात्वं साध्यत इति—दृश्यत्वमिथ्यात्वयोर्व्याप्त्यसिद्धेः । न च शुक्तिकारजतादौ तत्प्रसिद्धिः—तत्रानिर्वाच्यरजतासिद्धेः तस्य दृश्यत्वस्याप्यसिद्धत्वात् ।

अतोऽनिर्वाच्यरजतस्य न रजतान्तरसाजात्यम्; सादृश्यं वा । अवश्यं च सादृश्यादिरङ्गीकार्यः; भ्रान्तिविषयस्य विनापि सादृश्यं वस्तुनि दृश्ये[2] भ्रान्त्यदर्शनात् ।

न च भ्रमाधिष्ठानशुक्तिकादेरेवेतररजतसादृश्यापेक्षा, नानिर्वचनीयरजतस्येति—अधिष्ठानस्य रजतसदृशत्वे तस्यैवारजतस्यापि रजतप्रवृत्तिहेतुत्वोपपत्तेः रजतान्तरकल्पनायां प्रमाणाभावात् ।

1. भावादर्शनादिति । भावत्वेनादर्शनादित्यर्थः ।
2. दृश्य इति । बाष्पे धूमसादृश्येन हि धूमभ्रान्तिरिति भावः ।

अथ सत आत्मनो बाधायोगात् असतश्च शशविषाणादेः ख्यात्ययोगाच्च शुक्तिकारजतादेरनिर्वाच्यत्वे ख्यातत्वबाध्यत्वे[1] प्रमाणमिति—तन्न; आत्मनो बाधानर्हत्वं सत्त्वं वा न स्यात्; विकल्पासहत्वात्। तत्सत्त्वं किं प्रमाणसंबन्धार्हत्वम्? सत्ताजातिर्वा? नाद्यः; शुक्तिकारजतादेरपि दृश्यत्वाभिमानात् प्रमाणसंबन्धार्हताया अभ्युपगमात् सत्त्वापातात्। तस्य दृश्यत्वानभ्युपगमे शशविषाणादिसाम्यम्। आत्मनः प्रमेयता च नेष्टेति न ततस्तत्सत्तासिद्धिः। तदभ्युपगतौ च प्रपञ्चवन्मिथ्यात्वम्। प्रपञ्चस्यापि प्रमाणविषयत्वरूपदृश्यत्वमेव हि मिथ्यात्वे हेतुरभ्युपगतः। नापि द्वितीयः; आत्मव्यक्तेरेकत्वाभिमानात् तद्व्यतिरिक्तपदार्थस्यासत्त्वाभिमानाच्च सत्तासमवायित्वानुपपत्तेः। आत्मव्यतिरिक्तघटपटादिसत्त्वाङ्गीकारे चापसिद्धान्तश्च। प्रमाणसिद्धेष्वेव हि सत्तासामान्यम्। प्रमाणसिद्धघटपटादीनां सत्त्वानुपपत्तावात्मनोऽपि प्रमाणसिद्धत्वाविशेषात् न सत्ता;

अथ घटपटादिभेदानां व्यावर्तमानत्वेनापारमार्थ्यम्; रज्जौ भूदलनाम्बुधारावदिति—तन्न; आत्मनोऽपि घटपटादिसर्वपदार्थेभ्यो व्यावर्तमानत्वान्मिथ्यात्वापत्तौ सत्ताजात्यसिद्धेः; अभिव्यञ्जकापारमार्थ्येऽभिव्यङ्ग्यापारमार्थ्यात्। न चात्मव्यक्तिबाहुल्यमिष्टम्, येन सत्ताजात्युपपत्तिः स्यात्। अतो व्यावर्तमानत्वहेतुरनैकान्तिकः। आत्मनो जगद्व्यावृत्त्यनभ्युपगतौ मिथ्यात्वापातः। सत्पारमार्थिकहेतुत्वेनोक्तोऽनुवर्तमानत्वहेतुरप्यनैकान्तिकः, 'घटोऽयं' 'पटोऽयम्' इति सर्वघटपटव्यक्तिष्वनुवर्तमानघटपटत्वादेः पारमार्थ्यापातात्।

न च सत्त्वस्यैव समस्तपदार्थेष्वनुवर्तमानतया पारमार्थ्यम्; घटादयोऽपि तदपेक्षया व्यावर्तन्त इत्यनुवर्तमानत्वपारमार्थ्ययोर्न व्यभिचार इति—अभावस्य पदार्थान्तर्भावेऽपि तत्र सत्तानभ्युपगमात् सर्वपदार्थानुवृत्त्यभावात्। कतिपयव्यक्तिवृत्तित्वं तु घटत्वादेरप्यस्तीति पारमार्थ्यं स्यात्।

न च सर्वभावपदार्थानुवृत्तता सत्त्वस्य; न तु घटत्वादेरिति वैषम्यमिति—द्रव्यादिषड्भावस्यापि मिथ्यात्वाविशेषात्; सत्त्वानुवृत्तिसंकोचानुपपत्तेश्च। वैशेषिकादिपक्षे तु पारमार्थ्यस्य प्रतिपन्नोपाधावबाधितत्वस्य स्वीकाराद् गोत्वादिव्यतिरिक्तभावत्वेऽपि गोत्वादावननुवृत्तेः भावपदार्थानां सत्त्वाश्रयत्वमुपपन्नम्। अनिर्वचनीयवादिनामभावश्च पृथक्पदार्थतयेष्टः।

---

1. बाध्यत्वे इति। ख्यातत्वं बाध्यत्वञ्चेति द्वे मिलिते अनिर्वचनीयत्वं प्रति हेतुरित्यर्थः।

रज्जुसर्पादेश्चानिर्वचनीयत्वं चासिद्धम् । न च तत्र व्यावर्तमानत्वात् तत्सिद्धिः; अन्यत्र व्यावर्तमानत्वानिर्वचनीयत्वयोर्व्याप्त्यग्रहणात् ।

आत्मन एकत्वे सत्ताजात्यसिद्धिः; नानात्वे चापसिद्धान्तादिदोष इति नात्मसत्त्वसिद्धिरिति न तद्वैषम्यं भ्रान्तिविषयस्य ।

न चात्मनस्तुच्छविलक्षणत्वं सत्त्वमिति; विकल्पासहत्वात् । किं तुच्छस्य तुच्छत्वम्? आत्मवैलक्षण्यम्? प्रमाणसंबन्धानर्हत्वं वा? नाद्यः; अन्योन्याश्रयात् । नापि द्वितीयः; तुच्छत्वस्य प्रमाणसंबन्धानर्हत्वप्रयुक्तत्वे, सत्त्वस्यार्थात् प्रमाणसंबन्धार्हत्वापातात् । ततश्चात्मनो मिथ्यात्वम्; दृश्यत्वस्यैव मिथ्यात्वप्रयोजकत्वाभिमानात् । प्रमाणसंबन्धार्हत्वमेव हि दृश्यत्वम् । आत्मनस्तद-र्हत्वे तु न सद्भावे प्रमाणम् । न च तस्य स्वयंप्रकाशत्वान्न प्रमाणापेक्षेति; स्वयंप्रकाशत्वस्यापि प्रमाणाधीनत्वात्; प्रमाणान्तरसिद्धात्मनः स्वयंप्रकाशत्वस्य साध्यत्वाच्च । न हि धर्म्यसिद्धौ धर्मसाध्यता ।

न चात्मत्वस्वयंज्योतिष्ट्वयोरैक्यम्—उभयोर्वैरूप्यात् । युष्मत्प्रक्रियायामपि आत्मत्वं व्याप्तत्वम्; प्रकाशाव्यभिचारित्वं हि स्वयंप्रकाशत्वमभिमतम् । न हि स्वयंप्रकाशत्वेनेष्टवृत्तिज्ञानवत् आत्मनि प्रमाणापेक्षत्वसाधने बाधकमस्ति । [1]तथापि स्वव्यापकासत्त्वव्याप्तमेवेति पूर्ववद्विरोध इति ।

सत्त्वासत्त्वव्यावृत्तवस्तूपस्थापकत्वे[2] च न सदसदनिर्वचनीयवस्तुसिद्धिः । अथ च न वस्तुतः सदसदात्मकत्वं विरोधादिति तदर्हत्वमेव । [3]न च संशयविषयस्यैवानिर्वचनीयत्वम्; संशयविषयवैलक्षण्याद् विपर्ययविषयस्य । विरुद्धहेत्वोरेकत्र प्रामाण्येऽपि सत्त्वासत्त्वव्यावृत्तवस्तुसिद्धिरेव; ख्यातिबाधयोः स्वव्यापकसदसद्व्यावृत्तिकवस्तूपस्थापकत्वादित्युक्तम् ।

1. तथापीति । प्रमाणसंबन्धार्हत्वानङ्गीकारे तदनर्हत्वव्यापकमसत्त्वं तद्व्याप्तं तुच्छत्वादि चात्मन इति युष्मत्सिद्धान्तविरोध इत्यर्थः ।

2. उपस्थापकत्वे इति । ख्यातिबाधयोरिति शेषः ।

3. न च संशयेति । कोटिद्वयाव्यावृत्तधर्मज्ञानस्यापि कोटिद्वयसंशय-प्रयोजकत्वमस्तु; साधारणधर्मवत्ताज्ञानस्येवासाधारणधर्मवत्ताज्ञानस्यापि संशयहेतुत्वस्य तार्किकैरुक्तत्वात् । परंतु 'इदं रजतम्' इति विपर्ययविषयस्य न संशयविषयत्वमिति भावः ।

[1]सदसत्त्वव्यावृत्तिरपि वस्तुतः सदसत्त्वमेव, तदतिरिक्तस्य दुर्निरूपत्वात् । तथाप्यतिरिकेऽपि ख्यात्या स्वविषयवस्तुनः सत्त्वव्यावृत्तिनिरासकत्वमेव; तद्व्यावृत्तेरेव स्वविरुद्धाद्ख्यानव्याप्यत्वात् । असत्त्वाख्यानयोरेव हि नियतिः । अतः ख्यानात् सत्त्वनिवृत्तिनिरासाद् बाधादसत्त्वनिवृत्तिनिरासाच्च भ्रान्त्यर्थस्य सदसत्त्वमेवेति पूर्ववद्विरोधः । [2]यत्र वा नासत्त्वव्यावृत्तिः, तत्र ख्यातिरपि न । तथा यत्र न सत्त्वव्यावृत्तिस्तत्र बाधोऽपि नेति व्यतिरेकस्वरूपम् ।

[3]किंचासच्छब्दार्थः कः? किं प्रागभावः? प्रध्वंसाभावः? इतरेतराभावः? अत्यन्ताभावो वा? नान्योऽसदर्थो लोकसिद्धः । सर्वप्रकारोऽप्यसदर्थो भात्येव; अभावबोधस्य सर्वत्र प्रतियोगिनिरूप्यत्वेन भासमानत्वात् । तस्मात् 'असतो न ख्यानम्' इति दुरुक्तम् । एवं भानविषयत्वे च निषेधोऽप्युपपन्नः । एवं ह्यसत्त्वनिषेधो लोके—यथा 'नासत्' इति । चतुष्प्रकारव्यतिरिक्तासद्भावेऽपि[4] तस्य सत्प्रतियोगित्वेन प्रतीतिरस्त्येव ।

ननु शशादौ विषाणादिख्यातिबाधावनुपपन्नाविति; 'शशस्य विषाणं नास्ति' इति विषाणनिषेधस्य लोकसिद्धत्वात् । चतुष्पात्त्वादिना कस्यापि पुरुषस्य विषाणित्वप्रतीतिरपि संभवत्येव । तथा बौद्धादिषु सत आत्मनो भ्रान्त्यादिषु निषेधोऽपि दृश्यते । तथा लोकेऽपि सन्तमेव पुरुषं भ्रान्त्या 'सन्नासौ' इति वदन्ति ।

अत एतन्निरस्तम्—

"[5]न सत्त्वे भ्रान्तिबाधौ स्तां नासत्त्वे ख्यातिबाधने" इति ।

---

1. सदसद्व्यावृत्तिरिष्टा चेत् सदसदनिर्वचनीयत्वं कथं नेति शङ्कां शमयति—**सदसत्त्वेति** ।

2. अन्वयवत् व्यतिरेकव्याप्तिरप्यस्तीत्याह—**यत्र वेति** ।

3. असच्छब्दस्याभावप्रतियोगीत्येतावन्मात्रं नार्थः । अभावमात्रपरतयापि बाह्यावाह्यतार्किकव्यवहारदर्शनादित्याशयेन विकल्पयति—**किंचेति** ।

4. व्यतिरिक्तासद्भावेऽपीति । व्यतिरिक्तस्यासत्पदार्थस्य सद्भावेऽपित्यर्थः ।

5. **न सत्त्वे इति** । श्लोकोऽयमिष्टसिद्धावेवं पठितः—

"सत्त्वे न भ्रान्तिबाधौ स्तां नासत्त्वे ख्यातिबाधकौ ।
सदसद्भ्यामनिर्वाच्याविद्याविद्यैः सह भ्रमः ॥"

इति । तत्र बाधकावित्यत्र स्वार्थे कः । आविद्यैरित्यस्य आविद्यकैः अविद्याकल्पितैर्वस्तुभिरित्यर्थः ।

तथा-

"[1]सच्चेद्भाति कथं बाधो भाति चेत् तदसत् कथम्" इति च ।

विपरीतख्यातिवादिभिरपि न वस्तु स्वरूपेण कदाचिदपि निषिध्यते । देशकालाद्यपेक्षया हि वस्तुनिषेधः ।

ननु भ्रान्त्यर्थस्यारूप्यत्वे रूप्यप्रतीत्ययोगात्, रूप्यत्वे च निषेधायोगादुभयवैलक्षण्यमिति—न; रूप्यारूप्यविलक्षणत्वे रूप्ययोगाद्वैलक्षण्येऽपि रजतधीविषयत्वादन्यथाख्यातिरित्युक्तम् ।

यत्तूक्तम्—सद्रूपख्यानं नान्यथाख्यातिप्रयोजकम्, किं तु तदन्यत्वमेव; अनिर्वचनीयस्यापि तदन्येन[2] सद्रूपेणेति—तन्न; अन्यस्यान्यथाभावित्वेनान्यथाख्यातिरित्यस्यापरिहृतत्वात् । रूप्यप्रतीतिनिषेधयोः प्रामाण्ये तु सदसदात्मकत्वमेव । निषेधप्रामाण्ये त्वसत्त्वमेव । रूप्यप्रतीतिप्रामाण्ये सत्त्वमेवेति न कथंचिदनिर्वाच्यसिद्धिः ।

किंच ख्यातत्वादसन्न भवति, बाधितत्वात् सन्न भवतीति प्रतिज्ञैव व्याकुला; सदसद्द्वयनिषेधे युगपद्विरुद्धधर्मत्वस्यैव प्रतिज्ञातत्वात् । सत्त्वासत्त्वनिषेधे तत्प्रतिसंबन्धिनोरसत्त्वसत्त्वयोरेव प्रत्युपस्थानात् । 'असन्न भवति' इति नञ्द्वयं श्रूयते । अतः प्रकृतार्थस्य सत्त्वस्यैव प्रतीतिः । एवं 'सन्न' इत्युक्तेरसत्त्वमेव । न चोभयनिषेधे तद्विलक्षणवस्तुधीः; तत्तद्वस्तुप्रतीतेः । सदसदनिर्वाच्यमिति प्रतिज्ञायां तु अप्रसिद्धविशेषणं वर्त्माभासः स्यात् । 'सदसद्विलक्षणं भ्रान्त्यर्थः' इति प्रतिज्ञायामपि नानिर्वाच्यत्वसिद्धिः । माध्यमिकाभिमतशून्यतत्त्वस्यापि तद्विलक्षणत्वाभिमानात् तत्रातिव्याप्तिः । यत एवमुक्तम्—

"न सन्नासन्न सदसन्न चाप्यनुभयात्मकम् ।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः ॥"

इति ।

1. सच्चेदित्यादि । इदमपीष्टसिद्धिवचनमेव ।

2. तदन्येनेति । अन्यथाख्यातिप्रयोजकात् तदन्यत्वरूपादन्येन सद्रूपेणैव भानात् नान्यथाख्यातितेति तदाशयः ।

अथ रजतादेरनिर्वचनीयत्वेन तत्कारणवस्तुनोऽपि तत्सारूप्यात् मायायाश्च तादृक्त्वात् सैव कारणमिति—तन्न; शुक्तिकारजतमाययोरनिर्वाच्यत्वानिश्चयात्। परिणामस्तु नाङ्गीकृतो घटादिवद् बाध्यत्वात्।

किंच मायापि किं कस्यचिद्विवर्तः? परिणामः; उत वस्त्वन्तरं वा? नाद्यः; विकल्पासहत्वात्। किं ब्रह्म कस्यचिच्छब्दार्थः? उताविद्येति। नाद्यः; अनिर्वाच्यमायाविवर्तकारणब्रह्मणोऽप्यनिर्वाच्यत्वापातात्; मायायाः सदसदतिरिक्तब्रह्मसारूप्यापातात्। ब्रह्मकारणत्वानङ्गीकारे च कृत्स्नस्य ब्रह्मकारणत्वश्रुतिविरोधः। एतेनाविद्याविवर्तत्ववर्त्मापि निरस्तम्।

किंच अविद्यानिवर्तकब्रह्मज्ञानान्न मायानिवृत्तिः स्यात्; ब्रह्मणो मायानधिष्ठानात्। अधिष्ठानग्रहाद्धि भ्रमनिवृत्तिः। [1]अविद्यामाययोश्च भेदो ब्रह्माज्ञानवादिनो नेष्टश्चेति स्वस्यैव स्वकारणतोक्ता स्यात्। जीवाज्ञानपक्षेऽप्यविद्यामाययोः कार्यकारणता नेष्टा। तदङ्गीकारेऽप्यविद्यैव मायाकारणिकेति तस्या नाविद्याविवर्तत्वोपपत्तिः।

[2]परिणामोऽनभ्युपगतः; विकारादिदोषश्च। ब्रह्मणः परिणामित्वपक्षे ज्ञानबाध्यत्वं च। तद्वदविद्यापरिणामित्वपक्षेऽपि। नापि वस्त्वन्तरम्, अनभ्युपगतेरेव। तच्चाद्वैतविरोधात्।

न च सद्वितीयत्वेऽद्वैताविरोधः। अनिर्वाच्यत्वापातात् ब्रह्मणः, मायाया निर्वाच्यत्वापाताद्वा; कार्यकारणयोः सारूप्यात् अविद्यात्वापत्तौ तस्याः स्थायित्वेन पूर्ववन्न मोक्षः। तस्याः स्वरूपेणास्थायित्वेऽपि बीजाङ्कुरवत् कार्यकारणभावेनानादित्वाङ्गीकारेऽपि तस्याः स्थायित्वेन न मोक्षः। तस्य अभावत्वापत्तिरनुपपन्ना; शून्यत्वापत्तेः।

किंचानिर्वाच्ये न रजतादिशब्दप्रवृत्तिनिमित्तमिति पूर्वमेवोक्तम्।

तत्र यत् परैरुक्तं—रजतसंस्कारनिमित्ता रजतभ्रान्तिः। स च संस्कारो रजतशब्दोल्लिखितपूर्वानुभवजन्यो दोषसंप्रयोगाभ्यां सह भ्रान्तिज्ञानमुत्पादयति।

---

1. अद्वैतिनो द्विविधाः—ब्रह्माज्ञानवादिनो विवरणानुयायिनः। जीवाज्ञानवादिनो मण्डनानुयायिनो वाचस्पत्यादयः। उभयेषामपि मते असांगत्यमाह—**अविद्येत्यादिना**।

2. **परिणाम इति**। माया कस्यचित् परिणाम इति नाभ्युपगतमित्यर्थः।

ततश्च युगपदेकसंस्कारसमुत्थापितत्वाद् रजतशब्दप्रत्यययोर्भ्रान्तस्य रजतशब्दानुविद्धप्रवृत्तिरुपपन्नेति—तन्न; स्मृतेरपि भ्रान्तित्वापत्तेः; संस्कारनिमित्तत्वाविशेषात्। न च न केवलसंस्कारस्य भ्रान्तिज्ञानहेतुत्वम्; किंतु दोषसहितसंप्रयोगसहितस्य रजतशब्दस्मारकत्वमिति—रजतशब्दवदर्थस्यापि स्मृतिविषयत्वेन तज्ज्ञानस्याप्यभ्रान्तित्वापत्तेः। ततश्च प्रतीतिविरोधः।

किंच भ्रान्त्यर्थस्य सर्वगाश्रयमायाविवर्तत्वाभिमानादात्मनश्चैकत्वाभिमानात् सर्वेषां युगपद् भ्रान्तितन्निवृत्त्योरापातः।

न चान्तःकरणभेदाद् व्यवस्था, अविद्यानानात्वानभ्युपगतेः।

न चाविद्यावान्तरकार्यान्तःकरणोपाधिभेदाद्व्यवस्था, प्रतिसंधात्रात्मैक्यात्। न चोपाधिभेदात् प्रतिसंधातृभेदः, योग्यानुपलब्धिपराहतेः। न हि हस्तपादाद्युपाधिभेदात् प्रतिसंधातृभेदः।

किंचानिर्वाच्यसंसर्गः किं निर्वाच्यः? उत सोऽप्यनिर्वाच्यः? नाद्यः, अबाध्यत्वप्रसङ्गात्। नापि द्वितीयः; अनिर्वाच्यवस्तुसंसर्गोऽप्यनिर्वाच्य इति तस्य संसर्गान्तरापेक्षायां तस्यापि तथात्वेनानवस्थापातात्।

[1]न च मायायाः प्रतिभासमात्रशरीरत्वादनवस्थादिरलंकार इति; सर्वदोषाणामप्यलंकारत्वेनापरिहार्यत्वापातात्। एवं सर्वपक्षाणामपि समनिमित्तत्वेन स्वपक्षत्वास्वपक्षत्वविभागाभावे सर्वदोषाणामपि स्वपक्षालंकारत्वेनानुद्भाव्यत्वादनिर्वचनवादिनो मूकीभाव एव शरणम्।

यच्चोक्तम्—शुक्त्यादौ रजतसंसर्गाभावाद् भ्रमविषयस्य दुर्निरूपत्वात् निर्विषयज्ञानस्यानिरूप्यत्वान्निरालम्बनत्वं विपरीतख्यातिपक्ष इति—तन्न; शुक्तिकादेरेव दोषवशादसंसर्गेऽपि रजतादिज्ञानविषयत्वात्। पक्षान्तरेऽप्यनिर्वाच्यस्य प्रतिभासमात्रशरीरत्वाभिमानात्। परमार्थरजतस्य चासंसर्गान्निरालम्बनतासाम्यम्।

---

1. अनुपपन्नत्वं मायाया भूषणं न तु दूषणमिति परेषां वचने दोषमुद्भावयति—न चेति। प्रतिभासमात्रेति। अनेनावस्तुत्वं व्यज्यते। वस्तुन्येव ह्युपपत्त्यनुपपत्तिविचारः, नावस्तुनीति हृदयम्। यथोक्तमिष्टसिद्धौ—'त्वयाप्येतेऽनवस्थादयो दोषाः परिहर्तव्या एवेति चेत्; न, मायावादित्वात्। वस्तुन्येव हीष्टे कार्ये कारणे चैते दोषाः परिहर्तव्याः; न तु मायायाम्, मायात्वेनैव परिहृतत्वात्' इति।

प्रतिभासमात्रस्य भ्रान्त्यर्थत्वे च न निर्वाच्यता, प्रतिभासस्य सत्यत्वात् । भ्रान्त्यर्थस्यार्थाकारत्वाङ्गीकारे तु न ज्ञानबाध्यत्वमित्युक्तम् । तदर्थस्य रजतादिवैलक्षण्ये तद्ग्रहणे च न भ्रमबाधोपपत्तिः । तदग्रहणे रजततया ग्रहणे चान्यथाख्यातिरित्युक्तम् ।

किंच बाधकज्ञानकाले 'पूर्वं रजतमेवेदानीं शुक्तिका' इति प्रतीतिः स्यात् । न च तत् । 'पूर्वमपि नेदं रजतम्' इति हि प्रतीतिः ।

यत्तु भ्रान्तिज्ञानस्याप्यनिर्वाच्यत्वं परैरुक्तम्, तत् तस्य सत्यत्वोक्त्या पूर्वमेव निरस्तम् ।

ननु सर्वज्ञानसत्यत्वं न तार्किकेष्टम्; "बाधितविषयो विपर्ययः" इति हि तदुक्तिः । सत्यम् । किं तु राद्धान्तदृष्ट्योक्तमिति न विरोधः ।

एवं परैरनिर्वाच्यत्वसिद्ध्यर्थमुक्तप्रमाणस्यानुमानत्वेऽर्थापत्तित्वे च दूषणान्युक्तानि भाष्ये नयप्रकाशे च द्रष्टव्यानि । अत्र त्वतिविस्तरभयान्नोक्तम् । विपरीतख्यातिपक्षश्च प्रायेणोक्तः । शिष्टांशस्तूत्तरत्र प्रतिपादयिष्यते ।

[1]ननु विमतिविषयो भ्रान्त्यर्थस्तुच्छात्मक एव, बाध्यमानत्वात् । यत्तुच्छं न भवति, न तद्बाध्यते ; पराभिमतात्मवत् । न हि स्वाप्नार्थेन्द्रजालादिविभ्रमार्थानां सत्त्वम् । तत्समानत्वात् शुक्तिकारजतादयोऽपि तथा । 'रजतादयो न सन्ति' इति बाधदर्शनाच्चेति शून्यख्यात्यपरपर्यायासत्ख्यातिरेव युक्तेति—तदप्यसत् । तस्यासत्त्वेऽपि सत्त्वेन भानादन्यथाख्यात्यापातात् । असतोऽसत्त्वेन भाने तु न भ्रमबाधोपपत्तिः । आत्मनो न तुच्छव्यतिरिक्तत्वप्रयुक्तमबाध्यत्वम्, किंतु कार्यप्रयुक्तमिति हेतुश्च सोपाधिः ।

किंच असत्त्वमधिष्ठानाधिष्ठेययोः कस्य? न तावदधिष्ठानस्य, अबाधितप्रतीतिसिद्धत्वात् तत्सत्त्वस्य । नाप्यधिष्ठेयरजतादेः, तस्याप्यन्यत्र सिद्धत्वात् । 'नेदं रजतम्' इति तादात्म्यमात्रमेव हि निषिध्यते । अतो नासत्ख्यातिपक्षार्थः ।

1. "आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा ।
तथानिर्वचनख्यातिरित्येतत् ख्यातिपञ्चकम् ॥"

इत्युक्तासु अन्यथाख्यातिमनिर्वचनीयख्यातिं च निरस्य, असत्ख्यातिं शून्यख्यात्यपरपर्यायां माध्यमिकाभिमतां निरस्यति - नन्वित्यादिना ।

[1]ननु विप्रतिपन्नं शुक्तिकारजतादि ज्ञानात्मकमेव, संप्रयोगाभावेऽप्यपरोक्षत्वात्; संप्रतिपन्नबुद्धिवत्। एवमात्माकारत्वेऽपि रूप्यादेर्बहिरवभासो दोषात्। 'नेदं रूप्यम्' इति बाधोऽपि तद्बाह्यस्यैव। अत आत्मख्यातिरेव युक्तेति—तदप्यसत्; आत्माकारत्वेऽप्यर्थाकारतयाऽवभासादन्यथाख्यात्यापातात्। आत्माकारत्वावभासे तु न भ्रान्तिबाधोपपत्तिः। आत्माकारत्वे च न प्रमाणम्। न च पूर्वोक्तानुमानं प्रमाणम्; तस्य [2]सम्यग्रजतज्ञानेनानैकान्त्यात्। न हि रजतादेर्बहिरवभासमूलसंप्रयोगाभावमात्रस्य बुद्ध्याकारत्वानुमापकत्वं धियः। न हि स बुद्ध्याकार इत्यव्याप्तेः।

न च सम्यग्रजतादेरपि सहोपलम्भनियमाद् बुद्ध्यैक्यमिति; सहोपलम्भनियमस्यैक्यापादकत्वाभावात्। भेद एव हि सहोपलम्भः। सम्यग्रजतमिथ्यारजतयोर्बुद्ध्याकारत्वाविशेषात् सम्यग्रजतवदबाध्यत्वप्रसङ्गाच्च।

किंच बाह्यार्थेषु सम्यगसम्यक्त्वविभागाभावे च स्वपरपक्षविभागातिशयात्[3] इदं दूषणं मिथ्यावादिपक्षेऽपि सममित्युक्तम्। तेषामात्मख्यातिनिराकरणादिकमनुपपन्नम्, [4]ज्ञप्तिमात्रसंभिन्नतया सर्वख्यातीनां मायाविवर्तत्वाङ्गीकारात्। आत्मनश्चान्तराभासस्याङ्गीकृतत्वाच्च।

[5]यत्तु तैः शून्यवादनिरासे निरधिष्ठानभ्रमासंभव उक्तः—तच्चासत्; दोषाश्रयत्वापारमार्थ्येऽपि भ्रमोपपत्तिवन्निरधिष्ठानतयापि भ्रमोपपत्तेः। तदसंभवे[6] तु दोषाश्रयत्वापारमार्थ्येऽपि न भ्रान्त्युपपत्तिः; उभयत्र भ्रमासंभवस्य लोके

1. योगाचाराभिमतामात्मख्यातिं निरस्यति - नन्वित्यादिना।

2. **सम्यग्रजतेति**। नयप्रकाशिकायाम्—रजताकारो बुद्धेरेव, बुद्धिसंप्रयोगमन्तरेण रजतस्यापरोक्षत्वादित्यात्मख्यातिपक्षमाशङ्क्य तस्य बुध्याकारत्वे सम्यग्ज्ञानेष्वपि तथा स्यात्। न चास्त्विति वाच्यम्, अबाधितप्रतीतिसिद्धत्वात्' इत्युक्तमत्रानुसंधेयम्। **रजतादेः** इत्यस्य धिय इत्युत्तरत्रान्वयः।

3. **विभागातिशयात्**। विभागातिक्रमादित्यर्थः।

4. **ज्ञप्तीत्यादि**। ज्ञप्तिगतविशेषाणां सर्वेषां मायाविवर्तत्वं, ज्ञप्तिरूपस्यात्मन एव नानारूपेणावभासश्चाङ्गीकृतमित्यवैषम्यादित्यर्थः।

5. **यत्तु तैरुक्तः** तदिति उक्तिक्रियाविशेषणम्। तत्कर्तृकयद्रूपोक्तिकर्मीभूत इत्यर्थः।

6. **तदसंभव इति**। निरधिष्ठानभ्रमासंभव इत्यर्थः।

दृष्टत्वसाम्यात् । अतो न कश्चिद्विशेषो बौद्धपक्षान्मायावादिपक्षस्य । ज्ञप्तिमात्रस्य स्थयित्वमेव[1] हि विशेषः ।

[2]ननु अख्यातिरेव भ्रान्तिरस्तु । न च न भ्रान्तावख्यातिः, रजतख्यातेर्विद्यमानत्वादिति वाच्यम्; दुष्टकारणजन्यत्वेनापरिपूर्णविषयत्वात् अख्यातिसमानतया तयोच्यमानत्वात् । इयमेव विषययाथात्म्याद् यथार्थख्यातिरिति चोच्यते । न च शुक्तेः रजतात्मना भासमानत्वान्न यथार्थतेति—'शुक्तिः राजतात्मा'इति बुद्ध्यभावात् । 'इदं रजतम्' इति हि धीः । यदर्थव्यवहारानुगुणा या धीः, सा तदर्था । 'इदम्' इति धीरपि पुरोवर्तिशुक्तिविषयव्यवहारानुगुणा । 'रजतम्' इति प्रतीतेः रजतावच्छिन्नत्वाद् व्यवहारानुगुण्यमिति तस्या रजततैव वेद्या । अतः 'इदं रजतम्' इति धीद्वयं युक्तिसिद्धम् ।

ननु 'इदं रजतम्' इति सामानाधिकरण्यात् पुरोवर्तिन्येव रजतधीः; न च वस्तुतस्तथात्वमिति विपरीतख्यातिरिति; तन्न; विवेकाग्रहनिमित्तत्वात् सामानाधिकरण्यधियः । 'इदम्' इति हि भास्वरत्वादिरजतव्यक्तिसमानधर्मकशुक्त्यादिवस्तुभाने [3]रजतजातस्मृतिर्जायते । तत्सद्भावे च रूप्यबुद्धेरपि पर्यवसानात्[4] 'किं [5]पररूपिणो धीसंनिधानादियं धीः, उत [6]नीरजतरूपिणो धीसंनिधानात्' इति विवेकानवभासाद् रूप्यबुद्धेरिदमन्तर्भावे धीस्थत्वमात्रापेक्षया सत्यधीतौल्यात् सामानाधिकरण्यधीर्युक्ता । विवेकात्तु 'इदं शुक्तिकादि [7]रजतजातिरूपितम्' इति धीः । रजतजातेरपि निजव्यक्त्यन्तररूपधीः । इदंव्यवहारो भेदाग्रहात् । विवेके तु तद्बाध इति व्यवहारबाधाद्भ्रमत्वम् ।

---

1. स्थायित्वमेवेति । तदपि सर्वकालसंबन्धित्वं मिथ्यैवेति को विशेष इति हार्दो भावः ।

2. प्राभाकराभिमतामख्यातिं निरसितुमनुवदति—नन्विति ।

3. रजतजातेति । रजतानां बहूनां पूर्वानुभूतानां मध्ये एकस्य विशिष्य ग्रहणमिदमिति नियामकाभावात् जातेत्युक्तम् । जातीति तु स्वरसः पाठः ।

4. पर्यवसानादिति । संभवादित्यर्थः ।

5. पररूपिण इति । रूप्यते निरूप्यते वस्तु अनेनेति रूपशब्दो वस्त्वसाधारणधर्मपरः । रजतस्य यद्रूपं रजतत्वादि, तद्वतो वास्तवरजतस्येत्यर्थः ।

6. नीरजतरूपिण इति । नीरजतरूपं रजतरूपाभावः रजतत्वाभावः । तद्वतः शुक्त्यादेरित्यर्थः ।

7. रजतजातिरूपितामिति । आरोपितरजतजातीत्यर्थः ।

ननु भिन्नधीवेद्ययोर्न सामानाधिकरण्यमिति चेत्—तन्न; [1]रूपरूपिणोरेकधीवेद्यत्वान्निरन्तरधियो युक्तत्वात् । यत्रापि धीद्वयं युक्तिसिद्धम्, तत्रापि तद्धीद्वयाविच्छेदात् तद्वीवेद्ययोः दोषाधीनभेदाग्रहे च सामानाधिकरण्यधियो युक्तत्वात्। अत एव हि 'न तद्रजतम्' इति धीः । अन्यधियान्यस्य वेद्यत्वानुपपत्तेः बलाद्धीद्वयं च सिद्धम् । न च रजतस्मृत्यननुवृत्तिः कथमिति; भेदग्रहेण शुक्तिग्रहान्तर्हितत्वात् । नन्वेवमपि धीद्वयस्यैकतया ग्रहाद्विपरीतख्यातिरिति—तन्न; वेद्ययोर्नैरन्तर्यमिति ह्युक्तम् । ननु धीद्वयस्यापि याथार्थ्ये कथमन्यतरधियः प्राबल्यम्? उच्यते—अनुवृत्तपुरोवर्तिधीरूपशुक्तिधियो व्यवहारफलानुवृत्तेरिति । पुरोवर्तिशुक्तिवृत्तेरेव दोषाद्भेदाग्रहात् कार्यव्याघातः । लोके दोषस्य कार्यव्याघातकत्वं च क्लृप्तम् । यैस्तु दोषोपेतधीसामग्रीतोऽन्यथाख्यातिरुक्ता, तत्पक्षे दोषस्वरूपवैपरीत्यकल्पना दोषः । [2]भस्मकादेर्जाठराग्निकार्यरसव्याघातकत्वम् । रसविघाते च पाकाधिक्यं प्रबलजाठराग्नेः । एवं सर्वत्र द्रष्टव्यम् ।

किंच सामग्रीभेदसिद्धावन्यथाख्यातिः, एतत्सिद्धौ तत्सिद्धिरित्यन्योन्याश्रयत्वं च । यथार्थख्यात्यन्यथाख्यात्योर्नैवान्यथाख्यातिः सिद्धा । किंच अन्यथाख्यातिपक्षे न क्वचिदपि धीतोऽर्थनिश्चयः, सर्वत्रायथार्थत्वसंदेहात् । न च निर्दोषकारणजन्यत्वज्ञानादर्थनिश्चयः, निर्दोषत्वज्ञानस्यापि ज्ञानत्वाविशेषादनिश्चयसाम्यात् । ज्ञानान्तरेण च तन्निश्चयेऽनवस्था । न च यथार्थख्यातिपक्षेऽपि व्यवहारस्याबाधितत्वापेक्षायां दोषसाम्यम्; धियस्तावदर्थाव्यभिचारित्वे व्यवहाराबाधस्य स्वतः सिद्धत्वाद् । विरोध्यन्तरोपद्रुतो व्यवहारोऽस्तु । न तावता ज्ञानस्याया-

1. एकधीवेद्यत्वादित्यादि । एकधीवेद्यत्वापेक्षया रूपस्य रूपिणश्च निरन्तरभानमिति वक्तुं युक्तत्वादित्यर्थः । तथा सत्यस्थलेऽपि भिन्नधीवेद्ययोरेव सामानाधिकरण्यमिति भावः ।

2. अत्र च

"भस्मकादिषु कार्यस्य विघातादेव दोषता ।
अग्नेर्हि रसनिष्पत्तिः कार्यं जठरवर्तिनः ॥"

इति नयवीथीवचनमनुसंधेयम् । भस्मको नाम रोगविशेषः, यस्य दोषेण जाठरोऽग्निराशितमन्नं सद्य एव जरयित्वा नरस्य दुःसहां क्षुद्बाधां जनयति । अयमत्र भावः - दोषस्य कार्यविघातकत्वमेव, न तु कार्यान्तरजनकत्वमिति यदुक्तं तत् भस्मके बाधितम् । तत्राति क्षुधारूपकार्यकरणदर्शनादित्याक्षेपे, तत्रापि भस्मकदोषेण जाठराग्नेः रसाख्यकार्यजनकत्वविघात एव क्रियते; तद्विघाते चाग्नेः आशितान्नजरणं स्वाभाविकमिति न कार्यान्तरजननमिति ।

थात्म्यम् । नाप्यनवस्था । पक्षान्तरे तु धिय एवार्थाव्यभिचारित्वसंदेहे किं दार्ढ्यमवलम्ब्य व्यवहारोदयः; मूलशैथिल्यात् ।

किंच विषयस्य शुक्तिकात्वेनारजतत्वे रजताकारस्य स्वरूपतोऽभानात् ज्ञानस्यैव साकारता, बाह्यार्थापलापश्च सुव्यक्तः । अत इदमंशो गृहीतिः; रजतांशस्तु स्मृतिः । तयोस्तु दोषाद्विवेको न भात इति रजतार्थधीः, प्रवृत्तिश्च । पीतशङ्खादौ तु गृहीत्योर्विवेकाग्रहः; जपालौहित्यस्फटिकयोरिव पीतिमशङ्खयोर्गृह्यमाणत्वात् । स्मृत्यविवेकश्च स्वप्ने गजाद्यर्थानामसंनिनिहितानां प्रतीतेः । अतो भेदाग्रहाधीनव्यवहारबाधाद्भ्रान्तिव्यवहारः, न त्वयाथार्थ्यादिति ।

[1]एतच्चासत्, विकल्पासहत्वात् । किं भेदो वस्तुस्वरूपमेव? उतान्योन्याभावः? व्यावर्तकधर्मभेदो वा? न तावदाद्यः, पुरोवर्तिशुक्तिपूर्वानुभूतरजतगृहीतिस्मृत्योः स्वरूपभानात्, ज्ञानस्य स्वयंप्रकाशत्वाभिमानान्न प्रमाणान्तरापेक्षेति भ्रान्तिबाधावनुपपन्नौ । तयोरेकत्वेन ग्रहे विपरीतख्यात्यापातः । न च वेद्यनैरन्तर्यमात्रभानमत्र; न तद्बुद्ध्यैक्यमिति—बुद्ध्यैक्यस्य वेद्ययोर्जातिव्यक्त्योरिव नैरन्तर्यमात्रनिमित्तत्वात्[2] । न च जात्यादेर्विशेषणतैकस्वरूपत्वेन विशेषणधियो विशेष्यपर्यवसानात् तत्रैकधीविषयता; रजतत्वशुक्त्योर्विशेष्यविशेषणत्वाभावाद्वेद्यप्रथमत्वे धीप्रथमत्वसिद्धिरिति—तर्हि वेद्ययोर्नैरन्तर्यस्योभयोर्निरपेक्षत्वापाद्यत्वात् । एवं विशेषणविशेष्ययोर्ग्रहेऽन्यथाख्यातिः, अन्यविशेषणस्यान्यविशेषणतया ग्रहणात् । पृथग्ग्रहे च प्रवृत्तिबाधः ।

[3]द्वितीयस्तु नाख्यातिवादीष्टः । इष्टत्वेऽप्यन्यत्रापि इतरजात्यादेरन्यत्रावगम्यमानशुक्तिकादावाभासस्फूर्तिः ।

ननु तस्य तत्राभावतोऽपि दोषात् न तद्धीदोषादेव; परंतु अनियतदेशत्वेन तदिदंशरहितत्वेन च स्मर्यत इति—तन्न; विकल्पासहत्वात् । किं पूर्वमनियतदेशतया रजतावगतिः, उत नियतदेशावगतमपि दोषादनियतदेशतया स्मर्यत इति? नाद्यः, अनियतदेशतया प्रतीतेरेवाभावात् । नापि द्वितीयः, नियतदेशस्यानियतदेशतया ग्रहाद्विपरीतख्यात्यापातात् ।

---

1. एतच्चासदित्यादिः तार्किकैः क्रियमाणो विस्तृत आक्षेपः ।

2. निमित्तत्वादिति बहुव्रीहिः । नैरन्तर्यमूलक एव बुद्ध्यैक्याभ्युपगम इति ।

3. द्वितीयस्त्विति । भेदो नाम क इति पूर्वकृतविकल्पे द्वितीयोऽन्योन्याभावपक्ष इत्यर्थः ।

अथ देशो न स्मृतः, रजतमात्रं तु स्मृतमिति—तन्न; पूर्वावगतांशाभावस्य स्फुटत्वात् । भेदग्रहदृश्यप्रतियोगिस्मृतौ केवलाधिकरणोपलब्धेरेवोपलभ्यमानादिदमंशगृहीतेस्तत्सद्भावात् ।

ननु देशविशेषजातेषु यद्यपि शुक्तिकाभावः स्फुटः; तथापि रजतदेशो नावगत इति स्मृतिरिति—तन्न; शुक्तिदेशे तावद्रजतानवगतेः । अनवगतावभासस्य चान्याय्यत्वात् । अस्मर्यमाणाभावाग्रहस्य प्रवर्तकत्वे च यस्य कस्यचिदभावाग्रहे रजतार्थिप्रवृत्तिः स्यात्, अविशेषात् । न च व्यावर्तकधर्माग्रहो भेदाग्रहः; व्यावर्तकजात्यादीनां हि न ग्रहः । रजतं तु प्रस्मृतमिति प्रवृत्तिरिति—विकल्पासहत्वात् । स्मर्यमाणगृह्यमाणयोः साधारणधर्मभाने किमेकस्याप्यसाधारणधर्मस्याप्रतीतिः, उत सर्वस्याप्रतीतिरिति । नाद्यः, असाधारणधर्मरजतत्वप्रतीतेस्त्वयोक्तत्वात् । एवं च न भेदाग्रहः ।

न च यद्यपि गृह्यमाणात् स्मर्यमाणस्य व्यावर्तकावगतिः; तथापि न स्मर्यमाणाद् गृह्यमाणस्य व्यावर्तकावगतिः । शुक्लत्वादिशुक्तिकाधर्मास्तु रजतसाधारणा इति न व्यावर्तका इति—देशादिसंबन्धशून्यत्वेन स्मर्यमाणात् पुरोवर्त्यनुभूयमानवस्तुनो देशादिव्यावर्तकधर्माणामनुभूयमानत्वात् ।

ननु गृह्यमाणस्मर्यमाणयोः शुक्तित्वरजतत्वरूपपरस्परव्यावर्तकधर्मविषय एव ग्रहः, तद्धिय एव प्रवर्तकत्वात् । देशादीनां तूभयसाधारणतया न तादृक्त्वमिति—तन्न; स्मर्यमाणरजतस्य रजतार्थिनः पाषाणव्यक्तिदर्शने पाषाणत्वानुपलम्भे प्रवृत्त्यापातात् । तत्र पर्वतत्वावगतेर्न प्रवृत्तिरिति; तन्न; दूरादिदोषात् पर्वतत्वानवगतौ प्रवृत्तिप्रसङ्गात् ।

ननु तत्र सामान्यविशेषप्रतीतावपि सामान्यपरव्यावर्तकपरिमाणविशेषप्रतीतेरप्रवृत्तिरिति—तन्न; देशादिवत् परिमाणस्यापि सर्वद्रव्यसाधारण्याद् व्यावर्तकत्वानुपपत्तेः ।

अथ सामान्यस्यावान्तरभेदादव्यावर्तकस्यापि व्यावर्तकत्वमिति—तर्ह्येतन्न्यायेन कालादेर्वर्तमानत्वादिभेदाद्व्यावर्तकतास्तु । एवंच व्यावर्तकधर्मभाने भेदभानमिति न प्रवृत्त्युपपत्तिः ।

किंच रजतादिविषयज्ञानस्य न सत्तामात्रात् प्रवृत्तिः; किंतु इच्छाद्वेषोपजायमानप्रयत्नद्वारा । इच्छादेः प्रवर्तकत्वं च स्वकारणज्ञानविषय एव, अन्यत्रादर्शनात् । एवंच पुरोवर्तिनि रजतज्ञानाविषये न प्रवृत्तिः, इच्छाद्यनुपपत्तेः । न

च 'इदम्' इति पुरोवर्तिविषयज्ञानमप्यस्तीति प्रवृत्तिरिति—इदमंशस्योपादानाद्यनुपकारकत्वात् । रजतज्ञानादेव हि रजतार्थिप्रवृत्तिः । शुक्तिकाज्ञानाच्च निवृत्तिः । अधिष्ठानज्ञानमुभयसाधारणम् ।

न च 'इदम्' इति ज्ञानादगृहीतभेदरजतज्ञानस्य स्वतस्तादृगिच्छाप्रसाधकत्वमिति—स्मृतिज्ञानस्य स्वरूपानपायात् तद्भाने भेदभानमिति प्रवृत्त्यनुपपत्तेरुक्तत्वात् । तदित्थं प्रयोगः—विमतं ज्ञानं न स्वविषयव्यतिरिक्तेच्छाजनकम्, ज्ञानत्वात्, संप्रतिपन्नज्ञानवत् इति ।

ननु विप्रतिपन्नः प्रत्ययो यथार्थः, प्रत्ययत्वात्, संप्रतिपन्नप्रत्ययवदिति तद्यथार्थत्वसिद्धिरिति—तन्न, विकल्पासहत्वात् । यथार्थत्वं नाम किं विषयसमुत्थत्वम्? उत उपहितार्थसमुत्थत्वम्? अबाधितविषयत्वं वा? नाद्यः; शुक्तिकादिविषयसमुत्थत्वेन सिद्धसाधनत्वात् । द्वितीयस्तु न; विकल्पासहत्वात् । किं साक्षाद्रजतसमुत्थत्वम्? उत परम्परयेति । नाद्यः; प्रत्यक्षेण रजताभावस्यैव प्रतीतेस्तद्विरोधात् । नापि द्वितीयः; पूर्वानुभवसंस्कारजस्मरणेन द्वारेण रजतस्य शुक्तिकारजतज्ञानं प्रति परम्परया कारणत्वस्येष्टत्वेन सिद्धसाधनत्वात् । नाप्यबाधितविषयत्वम्; 'नेदं रजतम्' इति विषयबाधस्य मानसप्रत्यक्षवेद्यत्वेन प्रत्यक्षबाधात् ।

ननु 'नेदं रजतम्' इति न ज्ञानबाधः; किं तु व्यवहारबाध एवेति—तन्न; उपादानात्मकव्यवहारस्य विकल्पासहत्वात् । किं ज्ञानम्? परिस्पन्दो वा? नाद्यः; विपरीतख्यात्यापातात्; ज्ञानबाधप्रसङ्गाच्च । नापि द्वितीयः; शुक्तिकोद्भूतरजतज्ञानस्यापि कस्यचिन् न प्रयत्नपरिस्पन्दौ स्तः,. नापि शब्दोच्चारणम्, 'नेदं रजतम्' इति बाधप्रतीतिश्च न जाता—तत्र ज्ञानस्याभ्रान्तित्वप्रसङ्गात् । व्यवहारस्याप्रसक्तत्वेन तद्बाधश्चानुपपन्नः । नापि विषयबाधः; अप्रसक्तेरेव । अतः पारिशेष्याज्ज्ञानस्यैव निषेध्यत्वमिति ।

ननु प्रतिभासमानस्यैव ज्ञानविषयत्वात् रजतप्रतिभासे तस्यैव विषयता युक्तेति—तन्न; विकल्पासहत्वात् । पुरोवर्तिवस्तुप्रतीतिरस्ति वा? न वा? आद्ये, तदुल्लङ्घनेन विषयान्तरकल्पनायां विषयवैषम्यप्रसङ्गः । साक्षात् प्रतीतिर्हि पुरोवर्तिवस्तुगोचरा । पुरोवर्तिवस्तुनो रजतत्वधिया हि प्रवृत्तिः । ननु तद्धिया प्रवृत्तिः, न तु तद्रजतमिति—सत्यम्; अत एव हि भ्रान्तित्वम् । द्वितीयपक्षस्तु प्रत्यक्षविरोधादेव निरस्तः ।

ननु अयथार्थज्ञानजनकत्वे ज्ञानकारणेन्द्रियाणां यथार्थज्ञानजननस्वभावविरोधः; न चैवं दोषादिति वाच्यम्; तेषामौत्सर्गिकत्वहानिप्रसक्तेरिति चेत्—तन्न; स्मृतिस्वरूपवैपरीत्यस्य भवताप्यङ्गीकृतत्वेन दोषसाम्यात्। तदित्युल्लेखादिरहिता हि स्मृतिरिष्टा।

न च भेदग्रहसहकारिरहितायास्तदुल्लेखादिस्वभावता; तत्साहचर्यादिदमेव तत्कार्यमिति—अस्मत्पक्षेऽपि दोषरहितत्वे तत्स्वभावता; तत्साहित्ये त्विदमेव तत्कार्यमिति दोषसाम्यादिति कृतमतिविस्तरेण।

ननु निर्विषयैव ख्यातिर्भ्रान्तिस्तु। न रजतविज्ञानस्यालम्बनं रजतम्, पुरोवर्तिनोऽतथात्वात्। न च शुक्तिका रजतज्ञानविषयः, अन्यविज्ञानस्यान्यविषयत्वानुपपत्तेः। अथ रजतज्ञानस्य का गतिरिति? उच्यते—तद्व्यवहारासमर्थविज्ञानान्तरसाम्ययोगेन। तद्धि ज्ञानव्यवहारात्। शरन्मेघस्यापि नीरदत्वव्यवहारवदिति। तदुक्तम्—

"अनिरूप्यमतः ख्यातेर्विषयं प्रतिजानते।
विनैव विषयं दोषैस्तां भ्रान्तिं विबुधा विदुः॥"

इति।

तदप्यसत्—निर्विषयायाः ख्यातेः सविषयतयावभासादन्यथाख्यात्यापातात्। नापि निर्विषया; इदंतया पुरोऽवस्थितवस्त्ववभासालम्बनत्वात्। न च शुक्तित्वम्। न च भासां निरालम्बनत्वम्, रूपादिविशेषयुक्ततया प्रतिभासमानस्य कस्यचिल्लक्षणनामाद्यनभिज्ञानेऽपि निरालम्बनत्वप्रसङ्गात्।

न च रजतम्। शुक्तिकाया रजततयावगतावेव हि तत्र प्रवृत्तिः। वस्तुतस्तस्य शुक्तित्वेऽपि तदस्फूर्तावपि न धर्म्यस्फूर्तिः; त्रिकोणत्वादिधर्मविशिष्टतया तत्स्फूर्तेः। न च कतिपयधर्ममात्रतया स्फूर्तिमात्रान्निर्विषयत्वम्; अतिप्रसङ्गात्। न हि सर्वस्य सर्वधर्मावभास इत्यलमतिप्रसङ्गेन।

[1]ननु आत्मव्यतिरिक्तस्य कृत्स्नस्य प्रायेण पञ्चभूतात्मकत्वश्रुतेः सर्वत्र पृथिव्यादिसद्भावात् शुक्तिकादिष्वपि रजतादेः सत्त्वे सर्वस्यापि याथार्थ्यम्। अथ सर्वस्य पञ्चभूतात्मकत्वेऽपि कथं शुक्तिकादौ रजतादिसत्त्वम्? उच्यते—तेजोऽवयवादिप्राबल्याद्धि रजतादिसिद्धिः। तच्च तार्किकैरप्यङ्गीक्रियते। शुक्तिकारजतादावपि रजतकारणतेजोऽवयवसद्भावाद्र-

1. परमसिद्धान्तयथार्थख्यातौ दोषारोपः—नन्वित्यादिना।

जतसद्भावः । यद्यपि रजतावयवस्याल्पत्वेन शुक्तिकाया न रजतकार्यकरत्वम्, तथापि रजतस्य सत्त्वात् तत्प्रतीतियाथार्थ्यम् । अथ व्यवहारार्हशुक्तिकात्वेऽपि कथं रजतप्रतीतिः? नायनादिदोषात्तदग्रहाद्रजतस्यैव ग्रहादिति ब्रूमः । दोषापाये तु व्यवहारार्हभूयोऽवयवशुक्तिकाग्रहे जाते तद्व्यवहार एव; न राजतस्य; व्यवहारानर्हत्वात् । एवं स्वाप्नार्थानामपि भगवत्सृष्टत्वश्रुतेः, तत्तत्पुरुषमात्रानुभाव्यत्वेऽपि तत्कालमात्रावसायित्वकल्पनया सत्त्वे सत्ख्यातेरपि याथार्थ्यम् । एवं सर्वत्रोह्यमिति ।

तदप्यसत्—प्रतीतिव्यवहारानुगुणशुक्तौ व्यवहाराननुगुणाल्पावयवरजतसद्भावेऽपि कार्त्स्न्येन रजततया ग्रहणाद् विपरीतख्यातेरवर्जनीयत्वात् । अकार्त्स्न्येन रजततया ग्रहणे न रजतार्थिप्रवृत्त्युपपत्तिः । नीवारादौ व्रीह्याद्यवयववत् शुक्त्यादौ रजतावयवसद्भाव इति तु न; नीवारादेर्व्रीहिकार्यकरत्ववत् शुक्त्यादेः कटकादिकार्यकरत्वादर्शनात् । अग्नौ रजतस्य द्रौत्यवत् मनागपि शुक्तेर्न द्रौत्यं च ।

न च सर्वस्य पञ्चभूतात्मकत्वम्, अचाक्षुषत्वाद्याकाशारब्धत्वे घटादेरचाक्षुषत्वप्रसङ्गात् वातवनस्पतिसंयोगवत् । "तासां त्रिवृतम्" इत्यादि श्रुतिस्तु उपष्टम्भकपरत्वेन गौणी ।

न च स्वाप्नपदार्थसत्यता; अबाध्यत्वप्रसङ्गात् । सर्वपुरुषैरुपलभ्यत्वप्रसङ्गाच्च । न च तत्तत्पुरुषार्जितकर्ममूलत्वात् सुखादिवत् तत्पुरुषमात्रोपलभ्यतेति—तत्तत्पुरुषैरपि स्वप्नकालातिरिक्तकालाननुभाव्यत्वात् तत्पदार्थानाम् । न च तेषां तत्कालमात्रावसायित्वान्नान्यदानुभाव्यत्वमिति—तेषामचिरस्थायित्वेऽप्यवयवोपलब्धिप्रसङ्गात् । अन्यत्र शयानस्य सतोऽन्यत्र गमनाद्यसंभवाच्च । तत्पदार्थानामीश्वरसृज्यत्वश्रुतिस्तु तदनुभवजनितसुखादेरीश्वरनिमित्तत्वात् कथंचिन्नेया । सा जीवपरा वास्तु; तत्कर्मनिमित्तत्वात् सर्वकार्याणाम् । अतो न सर्वख्यातियाथार्थ्यम् । तस्मात् विपरीतख्यातिरेव भ्रान्तिरिति ।

[1]अत्रोच्यते—पुरोऽवस्थितवस्तुनि रजताद्यभावे रजतादिज्ञानस्य निरालम्बनत्वप्रसङ्गः; अन्यज्ञानस्यान्यविषयत्वेऽतिप्रसङ्गात् । शुक्तिका न रजतज्ञानविषयः । न च दोषादन्यज्ञानस्यान्यविषयता; ज्ञानस्य तथास्वभावत्वे सर्वत्र तच्छङ्कया अनाश्वासप्रसङ्गात् ।

---

1. परमसिध्दान्तभूता यथार्थख्यातिं साधयति—अत्रोच्यत इत्यादिना ।

न चादोषज्ञानादाश्वासः; अदोषज्ञानस्य वा गुणज्ञानस्य वा ज्ञानत्वाविशेषेण दोषराहित्याद्यन्वेषणापेक्षायामनवस्थापातादित्यादि स्वतः प्रामाण्यप्रकरणे उक्तम् । न च यावद्बुभुत्सं दोषराहित्याद्यन्वेषणमिति नानवस्थेति; ज्ञानपरंपरायां कस्यचित् ज्ञानस्य स्वतः प्रामाण्यानभ्युपगमे बुभुत्साविरामानुपपत्तेः । एवंच ज्ञानस्यैव साकारता स्यात्; तत्पक्षे विषयान्तरस्य दुर्निरूपत्वात् ।

यत्तु 'ज्ञानं स्वविषयव्यतिरिक्त' इत्याद्यनुमानम्—तत् सिद्धसाधनम्, विषयज्ञानस्यैव प्रवर्तकत्वाभिमतेः ।

यद्यपि पुरोऽवस्थितवस्तुनो रजतावयवानामल्पत्वेन न रजतव्यवहारार्हता, तथाप्यल्पतोऽपि रजतावयवसद्भावात् तत्र रजतज्ञानादिरुपपन्नः; पङ्के जलावयवाल्पत्वेऽपि जलप्रतीतिवत् । न च पुरोऽवस्थितवस्तुनि रजतावयवसद्भावे न व्यवहारबाध इति—अवयवानामल्पत्वात् तद्बाधोपपत्तेः; पङ्के जलस्य स्नानादिव्यवहारबाधवत् । तदवयवसद्भावश्च तत्सादृश्यात्सिद्धः; तत्सादृश्यस्य तत्तदवयवनिबन्धनत्वात् । तच्च विपरीतख्यातिवादिनामिष्टम् ।

न च सादृश्ये नीवारादीनां व्रीह्यादिकार्यकरत्ववच्छुक्तिकादेः रजतादि कार्यकरत्वमिति—सादृश्ये तत्कार्यकरत्वनियत्यभावात् । न हि गोसदृशगवयादीनां गोकार्यकरत्वम् । नीवारादीनां तु व्रीह्याद्यवयवप्राचुर्यात् तत्कार्यकरता । अत एव शुक्तिकायां वस्तुतो न रजतादिव्यवहारः; प्रचुरावयवशुक्त्यादेरेव कार्यकरत्वात् ।

किंचान्यस्यान्यविषयज्ञानत्वं चानुपपन्नम् ।

या तु ज्ञानयाथार्थ्यविकल्पदूषणोक्तौ रजतस्य परम्परया विषयत्वोक्तिः—सापि हेया, प्राभाकरवर्त्मपातप्रसङ्गात् । स्मृतित्वे च न रजतस्य पारंपर्येण विषयत्वम्; नाप्यनुभूयमानशुक्तिकाविषयत्वम् ।

अथ रजतस्मृतेः शुक्तिकायां रजतज्ञानोत्पत्तिहेतुत्वमेव; न तु प्राभाकरवद्रजतज्ञानस्य स्मृतित्वमिति—तन्न; विकल्पासहत्वात् । स्मृतेर्विपरीतज्ञानं प्रति किं सत्तया हेतुत्वम्? उत ज्ञायमानतया? नाद्यः; केवलविसजातीयस्मृतेः रजतजातीयविषयानुभवहेतुत्वासिद्धेः । नापि द्वितीयः; 'इदं रजतम्' इत्यादिज्ञाने रजतस्मृतेर्ज्ञायमानाया हेतुत्वाप्रतीतेः । विसजातीयहेतुत्वकल्पनायां तु गौरवम् । अतो न विपरीतज्ञानहेतुत्वं स्मृतेः ।

न च रजतप्रतीतेः स्मृतित्वम्, तदित्यपरामर्शात्। न च तत्प्रमोषोऽपि कल्प्यः, अनुभवत्वापत्तेः। अनुभवत्वोपपत्तिश्च; विपरीततया पुरोवस्थितवस्तुनि रजतादिसद्भावस्योक्तत्वात्।

यत्तु 'नेदं रजतम्' इति विषयबाधान्न वास्तवविषयत्वमित्युक्तम्—तदपि न; 'नेदम्' इत्यादेर्व्यवहारहेतुत्वनिषेधपरत्वेनाप्युपपत्तेः। नेदं व्यवहारार्हं रजतमित्यर्थः। तच्च रजतावयवानामल्पत्वात्। एवंपरत्वकल्पना च पुरोऽवस्थितवस्तुनि रजतस्य प्रतीतिसिद्धत्वात्। अतो 'नेदम्' इत्यादौ न विषयज्ञानयोर्बाधः। किंतु व्यवहारस्यैव।

यत्तु व्यवहारदूषणमुक्तम्, तद्विपरीतख्यातिपक्षेऽपि समम्। यस्य हि पुरुषस्य बाधकज्ञानोदयः, तं प्रति ज्ञानस्य भ्रान्तित्वापत्तिः समा। अथ बाधार्हत्वात् भ्रान्तित्वम्, तर्ह्यस्मत्पक्षे व्यवहारस्य बाधार्हत्वात् भ्रान्तित्वम्। व्यवहारश्च रजतशब्दप्रवृत्तिः, उपादानादिर्वास्तु। एवंच व्यवहारस्यार्हतया प्रसक्तेः प्रसक्तनिषेधान्न पारिशेष्याज्ज्ञानस्य बाध्यता।

यत्तु पुरोवर्तिवस्तुविषयत्वान्न प्रतिभासमानरजतविषयत्वमिति—तन्न, पुरोऽवस्थितवस्तुन्येव साक्षाद्रजतसद्भावात्। एवंच अन्यज्ञानस्य नान्यत्र रागादिहेतुत्वमिति नानिष्टप्रसङ्गः।

'इदं रजतम्' इति सामानाधिकरण्यधियोऽपि न विरोधः। इन्द्रियाणां च न यथार्थज्ञानजननस्वभावहानिश्च। प्रवृत्तिहेतुश्च रजतांशग्रहण एव दोषाच्छुक्त्यंशाग्रहोऽपि। तद्ग्रहणाभावो ह्यग्रहः। अभावश्च दृश्ये प्रतियोगिनि केवलवस्त्वेवेत्यत्र रजतांशग्रह एव।

यद्यपि न रजतस्य शुक्तिकाप्रतियोगिनि ज्ञातत्वम्, तथापि रजतशुक्तिकयोरवयवतारतम्येनैकाधिष्ठानत्वात्, रजतत्वग्रहस्याधिष्ठानग्रहनान्तरीयकत्वात्, केवलाधिष्ठानस्यैव शुक्तिकात्वप्रतियोगित्वमिति साधिष्ठानरजतांशग्रहस्य शुक्त्यग्रहत्वोपपत्तिः। अथवा शुक्तित्वग्रहरजतत्वग्रहयोरन्योन्याभावत्वाच्छुक्त्यग्रहो रजतत्वग्रह एव। अत इष्टभेदाग्रहात् प्रवृत्तिः। अनिष्टभेदाग्रहान्निवृत्तिः। तच्च "कदाचिच्चक्षुरादिः" इत्यादिभाष्योक्तम्। अतो न किरणावल्यादौ "न भेदाग्रहस्य च प्रवृत्तिहेतुत्वम्" इत्युक्तं दूषणजातमस्मत्पक्षबाधकम्। भेदश्च गोत्वरूपादिरसाधारणो वस्तुधर्मः।

यत्तु वर्तमानकालाद्यधर्मग्रहात् भेदग्रहसिद्धेर्न रजतार्थिप्रवृत्तिरित्युक्तम्—तदपि नास्मन्मतविरोधि; रजतप्रतीतेर्गृहीतिरूपत्वेन वर्तमानकालस्य च

गृह्यमाणवस्तुमात्रसाधारण्याद्भेदकत्वानुपपत्तेः । या तु भेदस्य धर्मत्वे मिथ्यावादिभिरनवस्थोक्ता, सापि संवेदनादिवत् स्वेनैव व्यावृत्तेरपि सिद्धेर्निरस्ता ।

अतः शुक्तिकादिषु रजतावयवसद्भावस्य प्रतीतिसिद्धत्वेन तत्प्रतीतिर्यथार्था । रजतसादृश्यं हि शुक्तेः प्रतीतिसिद्धम् । सादृश्यं हि तदवयवसत्तयेति तस्य प्रतीतिसिद्धत्वम् ।

यत्तु शुक्त्यादेः कार्त्स्न्येन रजततया ग्रहणाद्विपरीतख्यातिरिति—तदपि न ; रजतावयवानां विरलतयापि पुरोऽवस्थितवस्तुनः सर्वदेशसंबन्धित्वात् तदंशानामेव ग्रहेऽपि कार्त्स्न्येन तत्तया ग्रहणोपपत्तेः । इतरांशानां तु दोषादग्रहणमात्रम् । न ह्यग्रहो विपरीतग्रहः ।

ननु मरीचिकासु जलधीर्विपरीतात्मा; मरीचिकासु जलज्ञानादिति—तन्न ; अण्डान्तर्वर्तिपृथिव्यादेः कृत्स्नस्य "तासां त्रिवृतम्" इत्यादौ त्रिवृत्करणोपलक्षितपञ्चीकरणस्य श्रूयमाणत्वात् मरीचिकानां च पार्थिवसंसृष्टतैजसत्वात् तत्र चापां विद्यमानत्वात् नयनादिदोषात् तदग्रहणादपामेव ग्रहणमिति तत्प्रतीतेरपि याथार्थ्यात् । त्रिवृत्करणश्रुतेः पञ्चीकरणपरत्वं च "पञ्चभूतात्मके" इत्यादिस्मृत्यविरोधाय; अग्न्यादौ पृथिव्याकाशादेर्गुणोपलब्धेश्च । तच्च "यदग्ने रोहितं रूपम्" इत्यादिश्रुत्या व्यज्यते ।

आकाशस्यापि नीलरूपत्वप्रतीतेर्भूतान्तरसंसृष्टत्वधीः । न च नीलधीर्भ्रान्तिः; अबाधात् । आकाशादिव्यवहारोऽपि आकाशाद्यंशप्राचुर्यात् ।

न च वायोरपि भूतान्तरारब्धत्वे चाक्षुषत्वापत्तिः—तत्र भूतान्तराणामयोग्यांशकल्पनया चक्षुरविषयत्वोपपत्तेः । न च वायोः सर्वभूतारभ्यत्वे तेषां तेषां समानानामेवारम्भकत्वात् प्रत्यक्षतेति—समानानामेवारम्भकत्वमिति नियत्यभावात्; चित्रपटादौ रक्तत्वादौ वैषम्येऽपि कार्यारम्भकत्वदर्शनाच्च । अण्डान्तर्वर्तिपृथिव्यादेराकाशादिसर्वभूतानामवस्थान्तरत्वेऽपि वातवनस्पतिसंयोगवत् नाप्रत्यक्षता ; रक्ततन्त्वाद्यारब्धचित्रपटाद्यवयवगतरागादिस्वभावापरित्यागदर्शनात् वायोरचाक्षुषत्वस्वभावापरित्यागोपपत्तेः । अतो यस्य यस्य प्रत्यक्षयोग्यता, तदारब्धांशस्यैव प्रत्यक्षतेति न विरोधः ।

अथ मरीचिप्रभाप्रतीतिः कथमिति चेत् ; तैजसांशान्तरस्वभावत्वात् अपां च तत्संसृष्टत्वादिति ब्रूमः । दोषापाये तु तत्र पार्थिवसंसृष्टतेजसामेव ग्रहेऽल्पत्वादपां व्यवहारबाधः । अतो भूतानां भूतान्तरप्रतीतिर्यथार्थैव ।

ननु अपीते शङ्खे 'पीतः शङ्खः' इति धीर्विपरीतेति—तन्न; पित्तोपहतदृष्टेरेव तत्पीतत्वप्रतीतेः, अन्यस्याप्रतीतेः; पित्तस्य च पीतत्वप्रतीतेः। तस्य च नायनरश्मिभिः सह निष्क्रम्य शङ्खेन संयुक्तत्वात् तच्छुक्लिमांशस्य तद्द्रव्यपीतिमाभिभूतत्वात् शुक्लिमांशाग्रहणात् तद्धियो याथार्थ्यात्।

न च पित्तद्रव्यस्य तथात्वे पार्श्वस्थैरपि ग्राह्यता; तस्य सूक्ष्मत्वेनायोग्यत्वात्। पित्तोपहतस्य स्वनयननिष्क्रमणादतिसामीप्यात् ग्राह्यत्वोपपत्तिः।

न च नयनस्य पित्तद्रव्यातिरोधानान्न कस्यापि ग्राहकत्वमिति—अञ्जनादिवदत्यन्तस्वच्छत्वात् तस्यातिरोधायकत्वात्। न च तद्द्रव्यस्याल्पत्वे शङ्खः कृत्स्नः कथं पीततया गृह्यत इति—नयनरश्मिभिः सहैव निःसार्यमाणत्वात् यावतो नयनरश्मिभिः संबन्धः, तावतः पीततया ग्रहोपपत्तेः। अथ निरीक्ष्यमाणसर्वद्रव्याणां पित्तद्रव्यसंबन्धाविशेषेऽपि शुक्लद्रव्यस्यैव कथं पीततया ग्रह इति चेत्—शुक्लद्रव्यस्वाभाव्यात् तत्र तस्य स्फुटोपलब्धेरिति ब्रूमः। पैत्तिकस्योत्थानादिष्वन्यस्यापि पीततयोपलब्धेश्च। तच्च तद्धीसिद्धम्। अतः पीतशङ्खादिधीर्यथार्था।

एतेन क्षीरादेस्तिक्ततया ग्रहस्यापि याथार्थ्यं व्याख्यातम्। तन्मधुरिम्णः पित्ततिक्तताभिभवादग्रहात् रसनागततत्संबन्धितिक्तिमार्थग्रहात् तस्यापि याथार्थ्यात्। साश्रयतिक्ततायाः क्षीरसंबन्धाद्विशेषणविशेष्यभावोऽपि युक्तः। एकधीवेद्यत्वे हि प्रायेण विशेषणविशेष्यभावः। व्यवच्छेदको विशेषणमिति तल्लक्षणम्। तथा व्यवच्छेद्यं विशेष्यमिति। विशेष्यस्यान्यसंबन्धितया प्रतीतेर्हि तदैक्यं सिद्धम्। तिक्ततादेरपि व्यवच्छेदकत्वं वास्तवसंबन्धात् सिद्धम्। यद्यपि तिक्तत्वस्य पित्तद्रव्यसंबन्ध एव, तथापि क्षीरजलादिवत् तद्द्रव्यस्य द्रव्यान्तरसंसर्गस्वभावत्वात् तथात्वधीः।

अथवा पित्तद्रव्यसंसर्गिक्षीरस्य पाकविशेषान्मधुरिम्णोऽभिभवे तद्रसतयोपपत्तिः। दृश्यते हि क्षीरस्य कारवेल्ल्यादिद्रव्यसंयोगात् तथात्वम्। तथा पाकशैघ्र्यं च। एवंभूतत्वं तु पित्तदोषापायान्मधुरिम्णि मधुरताया ग्रहात् व्यवहारबाधात्। 'उष्णं जलम्' इत्यादौ च गत्वरतेजोऽपक्रमात् शैत्यस्यानभिभवे तद्ग्रहादुष्णव्यवहारबाधात्।

एतेन जपादिसंनिधौ रक्तताग्रहस्यापि याथार्थ्यं सिद्धम्। स्फटिकादिप्रभाया जपादिप्रभाभिभवादग्रहादेः समत्वात्।

ननु अलातचक्रे बम्भ्रम्यमाणे जातायाश्चक्रप्रतीतेरन्यथात्वमिति चेत्—न ; तस्यातिद्रैत्यात् तत्तद्देशसंयोगात् तत्संयोगानां च चक्रानुकारित्वात् तदन्तरालाग्रहणपूर्वं तादृगलातमात्रग्रहात् तस्या अपि याथार्थ्यात् । सूच्या पद्म-पत्रशतव्यतिभेदादौ शैघ्र्यादग्रहश्च तार्किकाभिमतः । अलाते च सर्वेषां चक्रप्रतीतेरविशेषात् तस्यां च कस्यचिन्मूलस्य कल्प्यत्वादनरालग्रहादिरेव ; कस्यचिन्नयनदोषादेः सर्वपुरुषसाधारणत्वानुपपत्तेः। अग्रहदोषमूलं तु द्रैत्यमेवास्तु, आदित्यादिगत्यनुपलब्धेर्दूरत्वमिव । तस्य प्रत्यक्षतो न गतिप्रतीतिः। देशान्तरसं-योगात्तदनुमैव । रथादिचक्रेऽप्यन्तरालाग्रहादेव चक्रप्रतीतिः । तत्र त्वन्तराला-भावादग्रहः । अलाते तु तदभावात् क्वचित्; क्वचिच्छैघ्र्यात् । अतस्तत्रापि नायाथार्थ्यम् ।

अथ दर्पणादिषु मुखादेरभावेऽपि तत्प्रतीतेस्तत्रायाथार्थ्यमिति—तन्न ; दर्पणादीनां स्वच्छतेजोद्रव्यत्वात् नायनानां च रश्मीनां तत्तेजःप्रतिहतगतित्वात् ; तादृग्गमनेऽपि बिले प्रविशतः सर्पस्य बिलाभिमुखनिवृत्तिवत् स्वाभिमुखमेव दर्पणादिग्रहणपूर्वनिवृत्तित्वाच्छैघ्र्यादन्तरालाग्रहणपूर्वं स्वमुखस्यैव गृह्यमाणत्वेन तत्रापि याथार्थ्यात् ।

एवंच वामदक्षिणनयनादिव्यत्यासग्रहोऽप्युपपन्नः । मुखादेरल्पत्वादि-प्रतीतिस्तु प्रतिफलनहेतुमण्याद्यल्पत्वकृता । मण्यादिग्रहणपूर्वकत्वान्मुखादि ग्रहणस्य तदल्पत्वप्रतीतिरुपं कार्यं प्रति तत् कारणम् । मुखवर्णादि यादृक् तादृशः प्रतीतेः, तस्य च प्रतिपन्नोपाधावबाधाच्च संमुखादिविषयत्वे दर्पणादिस्थतावन्मात्रमेव युक्त्या बाध्यते । तावन्मात्राच्च भ्रमव्यवहारः ।

ननु अप्स्वपि मुखदिप्रतीतेस्तासां चातैजसत्वान्नयनप्रतिफलनहेतुत्वान्न तैजसानामेवेति—तन्न ; अप्स्वपि तेजःसद्भावस्योक्तत्वात् ।

ननु अप्सु पोतपात्रादीनां गमने स्थावरादीनामपि गतिप्रतीतेः तथा मेघगमने शशाङ्कादीनां प्रत्यङ्मुखादिगमनेऽपि प्राङ्मुखादिगमनप्रतीतेः ख्यात्ययाथार्थ्यमिति—तन्न; दूरतरं जलयाने गच्छति गतिविशिष्टतया तदग्रहणा-द्विभज्यमानानां संयुज्यमानानां वा स्थावराणां च ग्रहणाच्च तत्प्रतीतेरपि याथार्थ्यात् । जलयानविभागादौ हि स्थावराणामपि गतिमतामिव विभागादौ दूरीभावः समः । दूरीभावादिविसिष्टस्थावराणामेव ग्रहः ; न तु तद्विशिष्टतया जलयानस्य । तस्य तद्विशिष्टतया ग्रहे तु न स्थावरादिगतिप्रतीतिः । अतस्तत्रापि याथार्थ्यमेव ।

ननु दिङ्मोहे दिगन्तरे दिगन्तरप्रतीतेस्तद्वैपरीत्यमिति—तन्न; आदित्योदयास्तमयदेशयोस्तद्वामदक्षिणदेशयोश्च मध्यास्थाः कृत्स्ना देशाः प्रागादिसर्वदिक्त्वेन परमात्मना कल्पिता इति तत्रापि याथार्थ्यात्। यद्धि परमात्मना पूर्वकल्पानुरूपं यद्व्यवहारादिविषयतया कल्प्यते, तदेव हि तद्व्यवहारादिविषयः परमार्थश्च। "मध्ये व्योमदिशश्चाष्टावपां स्थानं च निर्मितम् :" इति च मनुनोक्तम्।

आदित्योदयदेशादारभ्य तदस्तमयपर्यन्ताः कृत्स्ना देशाः प्रतीचीदिक्प्रतीतिविषयाः। तथा अस्तमयदेशादारभ्योदयदेशपर्यन्ताः प्राचीधीविषयाः। तथा तदुदयास्तमयदेशमध्ये यं कंचित्पिण्डमवधीकृत्य, तत उदयदेशपर्यन्ताः प्राचीधीविषयाः; ततोऽस्तमयदेशपर्यन्ताः प्रतीचीधीविषयाः। एतदुदयास्तमयदेशादारभ्य यावान् वामो वा दक्षिणो वा देशपर्यन्तः, तत आरभ्या दक्षिणदेशसमाप्तेः आ वामदेशसमाप्तेश्च प्राचीप्रतीचीधीविषयाः। सर्वे मध्यमदेशाः दक्षिणोत्तरदिग्विषयाः। तयोर्मध्ये वा यं कंचित्पिण्डमवधीकृत्य, तत आरभ्य आ दक्षिणदेशसमाप्तेः आ वामदेशसमाप्तेश्च दक्षिणोत्तरदिग्धीविषयाः। एतेनाग्नेय्याद्या अपि व्याख्याताः।

अत आदित्योदयाद्युपहितपृथिव्यादिसर्वदेशानामेव प्राच्यादिदिक्तया भगवता कल्पितत्वेन तासां सर्वदा सर्वत्र विद्यमानत्वात्, तदुदयाद्युपहितदेशानामेव दिगन्तत्वात्, सर्वदिगंशानां च सर्वदा सर्वत्र विद्यमानत्वात्, दोषादिवशात् तदंशानां दिगन्तरांशग्रहात् दिगन्तरांशत्वाग्रहाच्च तत्रापि याथार्थ्यम्। दिक्कल्पनाहेत्वादित्योदयाग्रहादादित्यमात्रग्रहाच्चांशग्रहणाग्रहणे च युक्ते। तथा अवान्तरकल्पकपिण्डदिग्दिगन्तरोपाधित्वांशग्रहणात् दिगन्तरांशत्वाग्रहाच्च तदंशग्रहाग्रहौ च युक्तौ। तत्रापि दिक्कल्पनायां परमहेत्वादित्योदयाद्यग्रहश्च। अदित्योदयादेरेव प्रागादिदिक्कल्पना। यथोक्तं श्रीमता पराशरेण—"उदयास्तमयाभ्यां च स्मृते पूर्वापरे दिशौ" इति। एतेन दिशो द्रव्यान्तरत्वमपि प्रत्युक्तम्; उपाधितः पृथिव्यादिदेशानामेव दिक्त्वाभिधानात्। भाष्ये च तस्या न द्रव्यान्तरत्वोक्तिः। न चास्याः स्वरूपोपपत्त्यादि।

एवं "दिङ्मोहेऽपि" इति भाष्यं व्याख्यातम्।

ननु चन्द्रस्यैक्येऽपि तिमिरादिदोषात् तस्य द्वित्वज्ञानात् तद्वैपरीत्यमिति—तन्न; दोषादिवशाच्चक्षुषस्तेजोभेदे सामग्रीभेदात् देशद्वयग्रहण-

पारमार्थ्ये च तदैक्याग्रहाद् ग्राह्याकारद्वित्वपारमार्थ्यात् । सामग्रीभेदेऽप्यन्योन्य-निरपेक्षं बद्धक्रमं ग्रहणद्वयम् । तयोरेका ऋजुगतिश्चन्द्रग्राहिका । देशान्तरेण परा सदोषा गतिस्तद्ग्राहिका ।

ननूभयोश्चन्द्रस्यैव ग्राह्यत्वात् तस्य चैकत्वान्न ग्राह्याकारभेदोपपत्तिः गोलकद्वयस्थचाक्षुषतेजोग्राह्यस्यैवेति—तन्न ; द्वयस्थतत्तेजसः सामग्रीत्वाभेदात् । कार्यकल्प्या च सामग्री । गोलकद्वयेऽपि शीघ्रसंचार्येकमेव चक्षुः । दोषे तु तद्वशात्तत् रश्मिभिन्नं सामग्रीत्वं भिनत्ति । दोषादेव न तत्संचारः; सर्वकारणस्य कार्यकल्प्यत्वात् । एतत् ख्यात्यन्तरवादिभिरप्यङ्गीकार्यम्; तद्द्वित्वज्ञानकार्य-स्यान्यथानुपपत्तेः ।

एतेन दोषस्य तु कार्यविघातकत्वमेवेति पक्षो निरस्तः; यथोपलब्धि व्यवस्थाप्यत्वात् । उपलभ्यते ह्युभयथा कार्यकरत्वं तद्विघातकत्वं च ।

ननु सामग्रीद्वित्वेऽपि न तद्द्वित्वप्रतीत्युपपत्तिः आकारग्राहकस्पार्शन-चाक्षुषसामग्र्योर्घटादेरिवेति—तन्न ; तत्र ग्राह्याकारभेदेऽप्युभयत्र द्रव्यानुवृत्तेरैवै-क्यबुद्ध्यविघातात् ; सामग्र्यनार्जवाभावाच्च । आर्जवादेव ह्युभयं स्वग्राह्यगुण-विशिष्टद्रव्यग्राहकम् । दोषादनार्जवं चक्षुष इत्युक्तम् ।

ग्रहणे च न यौगपद्यम् । तयोरुपक्रान्तार्जवानार्जवयोश्चैका स्वदेशविशिष्टचन्द्रग्राहिका । अपरा तु समीपदेशग्राहिका सती अन्तराला-ग्रहणपूर्वस्वदेशवियुक्तचन्द्रग्राहिका । एवं ह्याकारभेदाद् ग्रहणभेदे तद्द्वित्वज्ञानो-पपत्तिः । उपाधितोऽपि द्वित्वं घटशरावाकाशादौ दृश्यते । अत्राप्युपाधिभेदः परमार्थः । घटाद्युपाधिनाशवत् दोषनाशे तदैक्यधीश्चोपपन्ना । द्वित्वादिसंख्यान्वये च परमार्थत उपाधितो वा पृथक्त्वमेव ह्यपेक्षितम् । पृथक्त्वे च तदन्वय आर्थः ; तस्याप्यपेक्षाबुद्धिजन्यत्वाविशेषात् । भ्रान्तित्वव्यवहारस्तु दोषोपाधि-निरूपणात् । धारावाहिकविज्ञाने तु सामग्र्यभेदात् ग्राह्याकाराभेदाच्च न द्वित्वान्वयः । अत्र तु वक्रत्वार्जवभेदाद् ग्राहकाकारभेदे ग्राह्याकारभेदात् ।

...............तत्रापि तद्याथार्थ्यात् ।

1. ज्ञानान्तराणामिव स्वाप्नज्ञानस्यापि याथार्थ्यमथ स्थाप्यते । इह स्वमततद्विषयविचारोपक्रमभागो भ्रष्ट इति ध्येयम् ।

न च तस्य जागरणावस्थायामपि दृश्यतेति; तस्य तत्कालमात्रस्थायित्वस्वभावात्। न हि सर्वस्य चिरस्थायित्वनियमः; कर्मादिष्वदर्शनात्। न च द्रव्याणां तथात्वनियतिः; तैजसप्रदीपादिष्वदर्शनात्। अतः स्वाप्नपदार्थानामचिरस्थायितैव कल्प्या।

ननु स्वप्ने परमात्मनोत्पाद्यमानत्वादर्शनान्न तस्य तत्कर्तृतेति—तन्न; तस्य प्राकृतचक्षुर्विषयत्वाभावात्। "न चक्षुषा" इति हि श्रुतिः।

न च सृष्टस्य तदानीमेव वृद्ध्यनुपपत्तेर्न सत्तेति—सृज्यत्वस्य प्रमाणतः सिद्धौ वृद्धाकारस्यैव सृज्यत्वकल्पनादनुपपत्तिशान्तेः। न च तदानीमेव विनाशेऽपि तदवयवादर्शनान्न स्वाप्नसत्तेति; अवयवादर्शनपर्यन्तं विनाशस्य कल्प्यमानत्वात्। न च तस्येतरपुरुषादृश्यत्वान्न सत्तेति; द्रष्टुरदृष्टमूलत्वेन तेनैव सुखादिवदनुभाव्यस्वभावत्वात्।

न हि सतः सर्वानुभाव्यत्वनियमः। अनुभूयमानस्य हि सत्त्वनियतिः। न हि सुखादि सर्वपुरुषानुभाव्यम्। किंच सत एव सुखादिहेतुत्वदर्शनात् स्वप्नज्ञानविषयत्वम्।

न च गजादिज्ञानस्यैव सुखादिहेतुत्वम्; न गजादिविषयस्येति—जागरणेऽपि तथात्वापत्तेः। गजादिविषयाभावे तज्ज्ञानस्य साकारतापत्तिः। अतो योगाचारमतवत् बाह्यापलापप्रसङ्गः; सुप्तस्वप्नज्ञानवत् ज्ञानान्तराणामपि साकारत्वस्याभ्युपेयत्वात्।

शुक्तिकारजतादिषु भ्रान्तिषु कथंचित् सविषयत्वापादनेऽपि विपरीतख्यातिमते स्वप्नज्ञानस्य न सद्विषयत्वोपपत्तिः। न चानुभूतपदार्थानामेव स्वप्ने दर्शनात् स्मृतित्वमिति; अननुभूतपदार्थानामपि स्वप्ने दर्शनात्। न हि स्वशिरश्छेदादिरनुभूतः। अनुभूयमानत्वधीविरोधाच्च। यद्यपि क्वचिदनुभूतपदार्थानामेव स्वप्ने दर्शनम्, तथापि न तेषाम्; तदानीमत्राभावात्। अनुभूयमानत्वप्रतीतेस्तेषामपि परमात्मसृज्यत्वमेव। स्वाप्नपदार्थानामैकरूप्याय तत्सादृश्यमात्रात् स्वाप्नपदार्थानां स्मृतित्वभ्रमः। तदित्युल्लेखप्रमोषादिकल्पनाबाहुल्याच्च न स्मृतित्वम्। अकल्पनयैवोपपत्तौ न कल्पना युक्ता। स्वाप्नश्रुत्यनार्जवाच्च।

ननु तच्छ्रुतौ सृष्टयुक्तिर्दृष्टिपरा; अतोऽदृष्टादिवशात् पदार्थदर्शनमेव; तद्द्रष्टा च जीव एव; तस्यैव कर्मपारवश्यात्; "स हि कर्ता" इति हि तत्र

श्रूयते । जीव एव हि कर्मकर्तृत्वेन प्रसिद्धः । अतो जीवपरा तच्छ्रुतिरिति—तन्न; तत्परत्वेऽपि सृष्टिशब्दस्य दर्शनपरत्वेऽपि च दर्शनस्य दृश्याविनाभावनियमात् तथाथार्थ्यात् ।

वस्तुतस्तु न तत्परत्वम् ; "य एषु सुप्तेषु जागर्ति" इत्यादिस्वप्नश्रुतौ श्रूयमाणगुणानां जीवेष्वसंभवात् । तत्र हि संकल्पमात्रकृतसृष्ट्यादयः सर्वलोकाश्रयत्वादयश्च श्रूयन्ते । न हि तेषां तत्संभवः ।

[1]न च जीवानामपि सत्यसंकल्पादिश्रवणात् तदुपपत्तिरिति ; संसारदशायां तस्य तिरोधानात् । अतिरोधाने च जागरणेऽपि सांकल्पिकसृष्टिः स्यात् । न च स्वप्ने तत्तिरोधाननिवृत्तेः कल्पना ; स्वशिरश्छेदाद्यशुभदर्शनाभावापत्तेः । स्वाधीनत्वे हि शुभदृष्टत्वमेव स्यात् ।

सृष्टिशब्दस्य दृष्टिपरत्वकल्पनायामुपपत्त्यभावश्च । न च पश्चात् तत्पदार्थादर्शनात् तत्कल्पनेति—अदर्शनमूलस्यायोग्यत्वस्योक्तत्वात् । न च सृष्टिपरत्वाङ्गीकारेणैव जीवसृष्टत्वोपपत्तिः; दृष्टिपक्षोक्तदूषणसाम्यात् ।

शुभादिसूचकत्वं च स्वाप्नपदार्थानां स्मर्यते; दृश्यते च । भाष्योक्तरीत्या शुभाद्यज्ञानान्न जीवस्य सूचकार्थसृष्ट्युपपत्तिः परमात्मनस्तु सर्वदा सर्वज्ञस्य सर्वशक्तेः सर्वमुपपन्नम् ; "स हि कर्ता" इति शब्दात् वाक्यान्तरे सर्वज्ञत्वादिमत्तया श्रूयमाणत्वाच्च । तस्यैव हि विचित्रसृष्टिस्थितिसंहारकर्तृत्वाद्युपपत्तिः । अतः कर्तृशब्दो न जीवपरः ।

न च अन्यत्र शयानस्यान्यत्र गमनाद्यनुपपत्तेः अन्यदेशानां चान्यत्र सुप्यत्वविरोधाच्च नैवमिति—शयानसदृशदेहान्तराद्युपपत्तेरुपपन्नत्वात्[2] । न च तद्देहवस्त्वेनैव देहान्तरवत्त्वमनुपपन्नमिति—तद्धानेन देहान्तरवत्त्वोपपत्तेः ।

---

1. न च जीवेति । यद्यपि जीवस्य सत्यसंकल्पत्वादिकं न दृष्टिसृष्टिवादिसंमतम् ; नापि स्वाप्नासत्यत्वमेतावता सेत्स्यति, प्रत्युत सत्यत्वमेव—अथापि वस्तुतो जीवस्य स्रष्टृत्व स्वाप्नसत्यत्वेऽपि भवितुमर्हति न वेति संध्याधिकरणविचारितदंशोपक्षेपार्थमिदमिति ध्येयम् ।

2. उपपन्नत्वादिति । ननु सदृशदेहान्तरसृष्टिस्वीकारे तदेवेदमिति प्रत्यभिज्ञादिकं कथं घटत इति चेत्—तदंशे भ्रान्तिरेव । न हि वयं स्वप्ने भ्रान्त्यंशप्रसक्तिरेव नास्तीति ब्रूमः ; जागर इव तत्रापि क्वचिदंशे भ्रान्तिसत्त्वात् । नापि भ्रान्तिमत्त्वात्यादरूपा भवन्ती न सर्वज्ञानयाथार्थ्यपक्षविघातिकेत्यादिकमधिकरणसारावल्यादौ द्रष्टव्यम् ।

न च तद्देहस्य हाने विशीर्णत्वापत्तिरिति—द्रष्टुरदृष्टवशात् परमात्मना विशरणरहितस्य स्थाप्यमानत्वात् । ज्ञानद्वारा जीवस्थित्यापादनात् प्राणादीनामपि स्थित्युपपत्तिः । अतस्तत्रापि ज्ञानयाथार्थ्यमिति ।

श्रुतार्थोपपत्त्यर्थमनेकाश्रुतार्थकल्पना च युक्ता । "वेदशास्त्राविरोधिना यस्तर्केणानुसंधत्ते" इति हि स्मृतिः । अतः स्वाप्नपदार्थसत्तायाः दृढप्रामाण्यश्रुतिसिद्धत्वेन तद्याथार्थ्यम् ।

नन्वनात्मदेहेन्द्रियमनःप्राणबुद्धिष्वात्मबुद्ध्युत्पत्तेः तत्र तद्वैपरीत्यमिति—तन्न; गोत्वस्य व्यक्तिविशेषणत्ववत् शरीरस्यात्मापृथक्सिद्धतया आत्मविशेषणत्वेन तेन सह नित्यं भानाद्देत्तृतयैव सिद्धस्यात्मनः प्रत्यक्षादिना वेद्यतयैव सिध्यतः शरीरादेश्च भेदाग्रहमात्रत्वात् तत्रात्मबुद्ध्यभावात् । शरीरं चात्मना सहैवावभासते । आत्मवियुक्तभूतसंघाते शरीरशब्दप्रयोगो भूतपूर्वगत्येति शरीरलक्षणे[1] उक्तम् । सहभानं च 'देवोऽहम्' इति तत्प्रकारतयैव सामानाधिकरण्यात् । न च सामानाधिकरण्यधीर्भ्रान्तिः; तस्यात्मप्रकारत्वस्योक्तत्वात् ।

ननु गोत्वादेर्यावद्द्रव्यभाविविशेषणस्यैव सामानाधिकरण्यधीविषयत्वात्, शरीरस्य च यावदात्मभाविविशेषणत्वाभावान्न सामानाधिकरण्यधीविषयत्वमिति—तन्न; यावद्द्रव्यभाविविशेषणस्यैव तद्धीविषयत्वमिति नियत्यभावात् । न हि घटादेः शुक्लरूपादेश्च यावत्पार्थिवद्रव्यभाविविशेषणत्वम् । घटादयोऽपि पार्थिवद्रव्यमेव; असत्कार्यानभ्युपगमात् । शुक्लरूपादयश्च पाकजत्वेन पृथिवीद्रव्यस्यानित्यविशेषणम् । अतो नित्यमनित्यं वा विशेषणमपृथक्सिद्धं तद्धीविषयभूतम् । 'देवोऽहम्' इति तत्प्रयोगोऽप्यत एव ।

ननु तर्हि "अनात्मन्यात्मबुद्धिर्या" इत्यादिर्निर्विषयः, देहात्मबुद्ध्यभावस्योक्तत्वादिति—तन्न; आत्मासाधारणज्ञानाद्याकारस्याचाक्षुषत्वात् तस्य च योगपरिकर्मितस्वान्तमात्रविषयत्वादात्माकाराज्ञानात् तत्र तद्बुद्ध्यनुपपत्तेः । ज्ञातवस्त्वाकारस्यैव हि वस्त्वन्तरे सादृश्यादिना तदाकारताभ्रमः ।

ननु 'देवदत्तोऽहं जानामि' इति देहमेव ज्ञातारं मन्यते जन इति ख्यातेरन्यथात्वमिति—तन्न; तस्य ज्ञानदेहयोर्भेदाग्रहादिनिमित्तत्वात् ।

1, शरीरलक्षणे । अत्रैव ग्रन्थे आदिमप्रकरणे ।

ज्ञातुरात्मनोऽसाधारणाकाराननुभवात् तस्य चक्षुराद्यविषयत्वेनागन्तुकशरीराकारस्त्वात्मा भासते ; 'जानामि' इति ज्ञातृत्वमपि भासते । अयमर्थः—स्वासाधारणधर्मवत्तया नात्मधीः । तत्रात्मधीस्त्वहंधिया । 'जानामि' इति धीसिद्धं ज्ञातृत्वम् । तच्च किंधर्मणीति न भासते । देहात्मनोः 'मनुष्योऽहम्' इति चाक्षुषमनुष्याद्याकार एव ज्ञाता भासते । एवंच शरीराकारस्यैव ग्रहादाकारान्तरस्य चाग्रहात् गृह्यमाणाकार एव ज्ञातेति । एवंविधाज्ञानपरा "अनात्मनि" इत्यादिस्मृतिः ।

नन्वन्याकारधर्मस्यान्याकारधर्मतया भानात् तद्वैपरीत्यमिति—तन्न ; देहाकारविशिष्टस्य[1] ज्ञातृत्वमित्यग्रहात् । किंतु देहाकारिणो ज्ञातृत्वमिति गृह्यते ; उभयोरपि विशेषणत्वेन परस्परासंबन्धात् । न तु तस्य देहाकारत्वधीः । नापि तदाकारस्य ज्ञातृत्वधीः; उभयोरप्यबाध्यमानत्वात् ; देहाकारत्वेनाग्रह एव धर्माग्रहात् । विवेकात् तद्ग्रहे तदैव स्मृतिव्यवहारबाधः । तदाकारस्य च कर्मनिमित्तत्वेनौपाधिकत्वात् तन्नाशे तद्व्यवहारबाधः । उक्तोऽर्थश्च सर्वः "इदं शरीरम्" इति श्लोकभाष्ये "तत्र वेदितुः" इत्यादिना "प्रकृत्याकारमेव वेदितारं पश्यति" इत्यन्तग्रन्थेन कथ्यते । एवंच—संसारबीजमात्मनो देहाकारत्वज्ञानमेव न; किंत्वसाधारणधर्माज्ञानमपि । "अनात्मनि" इत्यादिस्मृतिस्तु तदुपलक्षणपरा ; आत्मनो देहाकारत्वज्ञानाभावेऽपि स्वासाधारणधर्माज्ञाने मुक्त्यभावात् । स्वस्वरूपज्ञाने हि मुक्तिश्रुतिः । अतस्तत्रापि ज्ञानयाथार्थ्यमिति ।

[2]ननु संशयज्ञानमयथार्थज्ञानम् ; कस्यचिदपि धर्मिणो दोलायमानानियतधर्मत्वाभावादिति—तन्न ; स्थाण्वादावूर्ध्वत्वादिपुरुषसाधर्म्यात् संशयोदयात् साधर्म्यसंज्ञयासादृश्यतदवयवसद्भावनिमित्तत्वदूरादिदोषात् स्थाणुपुरुषयोरन्यतरधर्मस्यानियमेन ग्रहादग्रहाच्च दोलायमानगृहीतिद्वयरूपत्वेन तस्यापि याथार्थ्यात् । धर्मनिरन्तरतया तद्धर्मवत्त्वेनानियतार्थविषयत्वं हि संशयः । पुरुषसादृश्ये तदवयवसद्भावस्य निमित्तत्वात् स्थाणौ पुरुषधीरूपा गृहीतिरपि यथार्था । ननु 'स्थाणुः' इति धियोऽगृहीतिरयथार्थेति—तन्न ;

---

1. विशिष्टस्येति । विशिष्टान्वयिनो विशेषणेऽप्यन्वय इति निर्बन्धाभावात् । असति बाधे हि तथान्वय इति भावः ।

2. अयथार्थज्ञानं त्रिविधं प्रसिद्धम्—संशयविपर्ययतर्कभेदात् । तत्र विपर्ययस्य याथार्थ्यं भाष्याद्युक्तरीत्या बहूदाहरणविमर्शेन स्थापितम् । अथ स्वयं संशयतर्कयोरपि याथार्थ्यं निरूपयिष्यन् संशयविषये अयाथार्थ्यं शङ्कते—नन्विति ।

तदन्वयवसद्भावबाहुल्ये च किंचिदूनतया तद्भानोपपत्तेः। अवयवतारतम्याद्धि सादृश्यजात्योर्विवेकः।

अत एव जात्यङ्गत्वत्वादिमीमांसकैर्मुख्यालाभे सदृशपदार्थस्वीकाराद्विहितजात्यङ्गत्वमुक्तम्। ऊनत्वादेव तद्व्यवहारमात्रबाधः। बहुत्वयवव्यवहारानुगुणसंस्थानस्थाण्वादिग्राहकप्रमाणतर्कानुग्रहेऽन्यग्राहकप्रमाणस्य तदनुग्रहे प्रबलप्रमाणकार्यव्यवहारानुवृत्तिः; नान्यस्य। एवं व्यवहारबाधात् भ्रमत्वम्। प्रमाणबाधव्यवहारोक्तिरपि व्यवहारबाधादेवेत्युक्तम्; प्रमाणप्रमेययोरबाध्यत्वात्।

अतो ज्ञानस्य विद्यात्वाविद्यात्वे व्यवहारबाध्यत्वाबाध्यत्वाभ्याम्। संशयज्ञानमप्यविद्यैव; व्यवहारानुदयात्। संशयश्चैकनिमित्त[1] एव। उभयार्थानुस्यूतसमानधर्मिण एव तन्निमित्तत्वम्; येन केनापि प्रमाणेन साधर्म्याभावे संशयानुदयात्।

[2]अनध्यवसायो न ज्ञानान्तरम्। न तावत् स्मृतिः; संस्कारमात्रानिमित्तत्वात्। नाप्यनुभूतिः; अनिश्चयात्मकत्वात्।

संशयात् प्रागनायातोऽप्राप्तनिर्णयः प्रमाणानुग्राहकप्रसङ्गात्मकप्रकारनिष्ठः पौरुषेयव्यापारो हि तर्कः। अस्य चाज्ञाततत्त्वार्थो विषयः पराभ्युपगतहेतुजन्यः। अनेन च प्रमाणमनुग्राह्यम्। अनियताजिज्ञासाविच्छेदेन नियतजिज्ञासाजननमनुग्रहः। प्रमाणफलमेवास्य फलम्; तदङ्गत्वात्। स च 'यद्ययं मनुष्यो भवेत्, तर्हि चलेत्' इत्याद्याकारकः। न स संशयः; एककोटिकत्वात्। अथ स्यात्—आरोपितहेतुत्वेनापारमार्थ्येऽप्यनियतेच्छाविच्छेदो दृश्यत इति; तन्न; चलनाभावस्यैव तत्र हेतुत्वेनारोपितहेतूत्थत्वाभावात्। 'यद्ययं पुरुषः स्यात्, तर्हि चलेत्; न चायं चलति; अतो न पुरुषः' इति हि तत्स्वरूपम्। 'यदि पुरुषः स्यात्' इत्यादिविमर्शस्त्वचलनान्वयात्। अतस्तर्को ज्ञानान्तरमिति।

---

1. एकनिमित्त एवेति। अनेन "समानानेकधर्मोपपत्तेर्विप्रतिपत्तेः" इत्यादिन्यायसूत्रोक्तानेकनिमित्तव्युदासः।

2. अनध्यवसाय इति। किंस्विदित्युल्लेख्यमनध्यवसायज्ञानं संशयातिरिक्तं कोटिद्वयाविषयकत्वादिति काणादमतं प्रशस्तपादभाष्यारूढम्। न्यायमते तु तदपि संशयानतिरिक्तमुपपादितम्। तदनुसारेण तद्विषये पृथक् विचारो न कार्य इत्यभिसंधायैवमुक्तमिति ध्येयम्।

अत्रोच्यते—अनुभूतिरेव तत्प्रमाणप्रमेययोरन्यतरस्याईताविषयत्वात् 'अयं पुरुषत्वार्हः पाण्याद्यवयववत्त्वात् वक्रकोटराद्यदर्शनाच्च' इति तत्स्वरूपम् । शिरःपाण्यादियुक्तसद्भावादियुक्तिभिरर्हतैव निश्चीयते । अतो नाविज्ञाततत्त्वोऽर्थो विषयः । यद्धि साध्यते, तदेव विषयस्तर्कस्य । एवमर्हतानिश्चये पक्षान्तरजिज्ञासाविच्छेदोऽर्थात् । परोक्तार्थावलम्बनात् तस्य प्रामाणिकपरित्यागादिप्रसङ्गज्ञानमप्यनुभूतिरेव । अप्रमाणविरुद्धार्थावलम्बितस्यागविषयत्वात् । अप्रामाणिकस्वीकारेऽप्येवमेव । 'यदि पुरुषः, तर्हि चलेत्' इति पुरुषचलनयोरपि व्याप्तिविमर्शोऽपि स्मृतिरूप एव । स चलनाभावानिर्धारणार्थ इत्युक्तम् ।

एवंविधविमर्शविषयत्वेन तर्को विपर्ययानुमानमित्युक्तेऽपि नास्मन्मतविरोधः । अस्य ज्ञानस्यानुभूतित्वमेव भाष्यकाराभिमतमित्यन्विताभिधानप्रकरणे प्रदर्शितम् । अतः सर्वा ख्यातिर्यथार्थेति सुस्थम् ।

श्रीमद्रामानुजार्यस्य ख्यातिरिष्टा प्रदर्शिता ।<br>
तद्विरुद्धमतख्यातिरपास्ता वास्तवोक्तिभिः ॥<br>
यथार्थख्यातितत्त्वे यो गाहमानमतिर्भवेत् ।<br>
आकल्पं ख्याप्यते तस्य ख्यातिर्यावज्जगत्त्रयम् ॥

इति<br>
श्रीमदात्रेयनाथसूरिसूनुमेघनादारिसूरिविरचिते<br>
नयद्युमणौ<br>
यथार्थख्यातिनिरूपणं नाम प्रकरणम्

## ९. उपोद्घातनिर्णयः

स्वराद्धान्तिमतेष्वेव चतुःसूत्र्याद्यसूत्रयोः ।
उपोद्घातत्वविमतौ[1] क्रियते तद्विनिर्णयः ॥

ये चतुःसूत्र्या उपोद्घातत्वमाहुः, किं तैर्युक्तिप्राबल्यादेवमुच्यते? उत भाष्यकारोक्तिस्वारस्यात्? सांप्रदायिकत्वाद्वा? नाद्यः, युक्तिप्राबल्याभावात् ।

ननु जिज्ञासाधिकरणे शब्दानां कार्यपरत्वव्युत्पत्तेः सिद्धरूपे ब्रह्मण्युपनिषदामप्रमाणत्वात् शास्त्रानारम्भः पूर्वपक्षितः । शब्दानां सिद्धपरत्वव्युत्पत्तेरपि संभवादुपनिषदां ब्रह्मणि प्रामाण्यं प्रसाध्य शास्त्रारम्भः सिद्धान्तितः ।

---

1. विमताविति । विमतिश्च द्वेधा । आदौ चत्वार्यप्यधिकरणानि शास्त्रोपोद्घातरूपाणीत्येका । प्रथमाधिकरणमेवोपोद्घातरूपम्; जन्माद्यधिकरणमारभ्य शास्त्रमित्यपरा । तत्र प्रथमः पक्ष एवं संगृहीतो न्यायसुदर्शने श्रीवरदनारायणभट्टारकैः—

व्युदस्याविषयत्वान्यविषयत्वे समन्वयः ।
वाक्यानां ब्रह्मणि प्राच्याध्यायेनेह प्रदर्श्यते ॥

आद्यपादे चतुःसूत्र्या शास्त्रारम्भस्य सिद्धये ।
उपोद्घाततयैवैषां विषयत्वं दृढीकृतम् ॥

व्युत्पत्त्यभावः प्रतिपत्तिदौःस्थ्य-
मन्येन सिद्धत्वमथाफलत्वम् ।
एतानि वै सूत्रचतुष्टयेना-
नारम्भमूलानि निराकृतानि ॥"

इति । आहुश्च श्रीवेंकटनाथदेशिका अधिकरणसारावलौ—

"सिद्धे व्युत्पत्तिराद्या न भवति न च धीर्लक्षणाद्युज्झितेऽस्मिन्
किं शास्त्रेणान्यसिद्धे न च निशमयितुः सिद्धबोधे फलं स्यात् ।
ब्रह्मण्येवं न मानान्युपनिषद इति स्तम्भिते तद्विचारे
शास्त्रारम्भं चतुःसूत्र्यघटयदुचितैर्न्यायभेदैश्चतुर्भिः ॥"

इति । पक्षस्यास्य सांप्रदायिकत्वमुक्तं तैरेव । यथा—

जन्माद्यधिकरणपूर्वपक्षेऽपि "यतो वै" इत्यादिवाक्यस्योपलक्षणतया विशेषणतया वा ब्रह्मपरत्वाक्षेपेण द्वारेणाप्रामाण्यप्रसाधनाच्छास्त्रानारम्भः फलितः । राद्धान्ते तत्प्रामाण्यप्रसाधनात् तदारम्भः । तथा शास्त्रयोन्यधिकरणपूर्वपक्षेऽपि ब्रह्मणः प्रमाणान्तरसिद्धत्वयुक्त्या तदनारम्भः ; प्रमाणान्तरासिद्धत्वोक्त्या तदारम्भः । एवं समन्वयाधिकरणपूर्वपक्षराद्धान्तयोरपि ब्रह्मणः स्वरूपेणापुरुषार्थत्वपुरुषार्थत्वयुक्तिभ्यां तदनारम्भारम्भौ फलिताविति चतुःसूत्र्या उपोद्घातत्वमिति

तन्न ; प्रायेण प्रथमाध्यायाधिकरणपूर्वपक्षेषु वेदान्तानां ब्रह्मपरत्वप्रामाण्याक्षेपद्वारेण तदारम्भरूपफलसाम्यादुपोद्घातत्वापत्तेः । ईक्षत्याद्यधिकरणपूर्वपक्षेषु हि वेदान्तानां प्रधानादिपरत्वमाक्षिप्य ब्रह्मपरत्वसाधनेन ब्रह्मपरत्वप्रामाण्यसाधनमेव । अप्रामाण्ये च तदनारम्भः फलितः; प्रामाण्याधीनत्वात्तदारम्भस्य । द्वितीयाध्यायपादचतुष्टयाधिकरणपूर्वपक्षेष्वपि राद्धान्तिपक्षदोषपरपक्षप्राबल्यवेदान्तवाक्यपरस्परव्याहतत्वयुक्तिभिर्ब्रह्मपरत्वप्रामाण्याक्षेपात् प्रसक्ते तदनारम्भे तत्प्रामाण्यसाधनात् तदध्यायस्याप्युपोद्घातत्वमिति न चतुःसूत्र्या एवोपोद्घातत्वम् । न च तत् युक्तम ; पूर्वद्विकस्योपास्योपेयपरत्वाभावापत्तेः; उपोद्घातस्यान्यार्थत्वेन स्वार्थतात्पर्याभावात् । स्वविचारस्यैव प्रयोजने ह्युपेयपरत्वसिद्धिः । प्रतिपाद्यमर्थं बुद्धौ संगृह्य तदर्थमर्थान्तरवर्णनमुपोद्घात

यत्तत् सेनेश्वरार्यैरगणि वकुलमृत्किंकरैरङ्ग्यकारि
व्यासार्यैर्न्यासि तद् द्विः श्रुतमिति विशदं विष्णुचित्तैर्विवव्रे ।
अश्रौषं शेषकल्पादहमपि विदुषो वादिहंसाम्बुवाहा-
दद्धा निर्धार्यतेऽतश्चतुरधिकरणी ब्रह्मचिन्तोद्यमार्था ॥"

इति । द्वितीयपक्षस्तु नयद्युमणिकारैरेभिर्गदितः । स्वोक्तार्थः सर्वोऽपि सत्संप्रदायागत इति अत्र नयप्रकाशिकायां चोक्तम् । यदाहुः—

श्रीमदात्रेयनाथार्यान् गुरून् नः परमान् गुरून् ।
श्रीरामप्रमुखान् सर्वान् श्रीमद्रामानुजं मुनिम् ॥
प्रणम्य लक्ष्मणार्यस्य भाष्ये त्रय्यन्तगोचरे ।
गम्भीरेऽतिनिगूढानां नयानां तु प्रकाशने ॥
प्रयत्नः क्रियते बुद्धया तत्प्रसादसमुत्थया ।
यथाश्रुतं यथाशक्ति मेघनादारिणा मया ॥"

इति । उद्धृतश्चायं पक्षः सयूथ्यमतत्वेन श्रीवेंकटनाथदेशिकैः—
"शास्त्रारम्भार्थमेकं त्रितयमिह परं शास्त्रमित्याहुरेके" इति ।

इति न्यायविदुक्तेर्न स्वार्थतात्पर्यमुपोद्घाते । यच्च 'कृत्वा[1] प्रवर्तन' इति—तच्चायुक्तम्; अन्यपरत्वस्वपरत्वयोर्विरोधादन्यपरत्वनिश्चये स्वपरत्वाभावसिद्धेः । एवंच जगज्जन्मादिकारणत्वसाधनस्य शास्त्रारम्भार्थत्वेनोपासनार्थत्वाभावान्न जगत्कारणतया तस्योपास्यत्वम् । न चार्थात् तथात्वम्, [2]अतत्परत्वस्योक्तत्वात् ।

किंच जन्माद्यधिकरणपूर्वपक्षे विशेषणत्वान्न तदारम्भाक्षेपः; पूर्वत्र सिद्धार्थव्युत्पत्तिसाधनात् अनेकब्रह्मपरत्वेनापि वेदान्तप्रामाण्यात् तदारम्भोपपत्तेः । अभीष्टब्रह्मपरत्वेनानारम्भेऽपि तदारम्भाक्षेपासिद्धिः । सिद्धार्थव्युत्पत्त्यभावे तु केनापि प्रकारेण वेदान्तानां न सिद्धवस्तुनि प्रामाण्यमिति न तत्परत्वेनोपपत्तिरिति आद्यस्योपोद्घातत्वोपपत्तिः; कार्यपरत्वाभिमानात् सर्ववाक्यानां पूर्वपक्षिणः । न तु जन्माद्यधिकरणपूर्वपक्षे सिद्धवस्तुपरत्वाक्षेप इति न तदानारम्भाक्षेपः । शास्त्रयोन्यधिकरणपूर्वपक्षेऽपि शास्त्रस्य न कार्त्स्न्येनानारम्भशङ्का; केवलब्रह्मपरवाक्यानामेव प्रमाणान्तरसिद्धत्वेनानुवादलक्षणाप्रामाण्यात्, उपासनापरवाक्यानां प्रमाणान्तरसिद्धविषयत्वाभावात् विचार्यत्वेन तदारम्भानाक्षेपात् । समन्वयाधिकरणपूर्वपक्षेऽपि नोपासनादिविचारारम्भाक्षेप इति स्पष्टमेव; ब्रह्मासद्भावेऽपि ध्यानविध्युक्तेः । शास्त्रयोन्यधिकरणपूर्वपक्षेऽपि न सिद्धवस्तुपरत्वाक्षेप इति स्पष्टमेव ।

ननूपासनापरवाक्यानां गुणोपसंहारादिना विचार्यत्वेनापि न सिद्धवस्तुपरत्वेन तद्विचार इति न तदारम्भसिद्धिरिति—तन्न; जन्माद्यधिकरणशास्त्रयोन्यधिकरणपूर्वपक्षयोः सिद्धवस्तुपरत्वानाक्षेपाच्च चतुःसूत्र्या उपोद्घातत्वासिद्धेः ।

न च समन्वयाधिकरणपूर्वपक्षे सिद्धवस्तुपरत्वाक्षेप इति तस्योपोद्घातत्वम्; बौद्धादिनिराकरणाधिकरणपूर्वपक्षेषु स्थैर्यैकत्वत्वानभ्युपगमाद्वेदप्रामाण्यस्यैवानभ्युपगतेश्च तदधिकरणानामप्युपोद्घातत्वापत्तेः । तन्मतस्य प्राबल्ये हि सिद्धवस्तुपरत्वाद्याक्षेपः सिद्ध एव ।

अथाधिकरणान्तराणामुपोद्घातत्वप्रसक्तेर्न चतुःसूत्र्युपोद्घातत्वनिवृत्तिरिति—तन्न; तदुपोद्घातत्वयुक्त्यभावस्योक्तत्वात् ।

---

1. कृत्वेति । कृत्वा चिन्तयत्यर्थः ।
2. अतत्परत्वस्येति । उपासनपरत्वाभावस्येत्यर्थः ।

अयमर्थः—शब्दस्य सिद्धवस्तुपरत्वव्युत्पत्त्यभावयुक्तिर्ब्रह्मपरत्वेनोत्तरमीमांसानारम्भहेतुः साक्षात्। तत्र सिद्धवस्तुप्रतीतिः केवला स्मृतिः। समन्वयाधिकरणपूर्वपक्षे तु सिद्धवस्तुनि प्रामाण्यस्य सतः प्रवृत्त्यादिप्रयोजनाभावात् अफलत्वेनाप्रामाण्यशङ्कामात्रम्। स्मृतिस्त्वप्रमाणमेव। अतो न साक्षादाक्षेपः समन्वयाधिकरणपूर्वपक्षे। स्मृतेरप्रामाण्यमुक्तं स्वतः प्रामाण्ये।

किंच वाचकपदशक्तिनिरूपणेन सिद्धवस्तुपरत्वाक्षेप आद्याधिकरणपूर्वपक्षे। समन्वयाधिकरणपूर्वपक्षे तु पदवाच्यवस्तुनिरूपणेन तत्परत्वाक्षेप इति च व्यवधानम्। "यतो वै" इत्येकदेशवाक्यानामनेकविशेषणयुक्तानामतत्परत्वशङ्काद्वारा कृत्स्नवेदान्तानामतत्परत्वशङ्का जन्माद्यधिकरणपूर्वपक्ष इति व्यवधानम्। व्यवधानात् येन केनापि प्रकारेणाप्रामाण्येनोपोद्घातत्वे पूर्वद्विकस्यैवोपोद्घातत्वम्; तत्र सर्वत्र पूर्वपक्षेषु प्रायेण सर्ववेदान्तवाक्यानां परमात्मपरत्वाक्षेपसाम्यादित्यलमतिविस्तरेण।

नापि भाष्यकारोक्तिस्वारस्यं चतुःसूत्र्युपोद्घातत्वे; तददर्शनात्। प्रत्युतानुपोद्घातत्व एव तदुक्तयः। तथाहि तावत् दीपे—"ब्रह्ममीमांसा विषयः। सा किमारम्भणीया? उतानारम्भणीया?" इत्यादेः कण्ठोक्तिः। उत्तराधिकरणत्रिके च न तथोक्तिः। प्रत्युत "यतो वै" इत्यादिवाक्यस्यैव विषयत्वोक्तिः।

तथा सारे शास्त्रयोनिसमन्वयाधिकरणपूर्वपक्षयोः तदप्रामाण्यशङ्कायां तन्निरास उपपन्न इत्युक्तिः। तथा तत्रैव "वेदान्ताः प्रतिपादयन्त्येवेति स्थिरीकृतम्" इत्युक्तिः। सिद्धार्थप्रामाण्यस्यास्थैर्ये तन्निरासे हि स्थिरीकृतत्वोक्तिः। तथा भाष्ये प्रथमाध्याये द्वितीयपादारम्भे समन्वयाधिकरणोक्तौ "शास्त्रप्रमाणकत्वं च" इत्युक्त्वा "समन्वयान्निरूढाने" इत्युक्तिः। प्रामाण्ये स्थिते निर्वाहशङ्कायां तन्निरासैर्हि निरूढत्वोक्तिः। तथा ईक्षत्यधिकरणारम्भे च पूर्वाधिकरणत्रयेण ब्रह्मणः "यतो वै" इत्यादिवाक्यप्रतिपाद्यत्वमेवोक्तत्वेनोक्तम्; न तु शास्त्रस्यारम्भणीयत्वम्। "ईक्षत्यधिकरणादिना पादशेषेण वेदान्तवाक्यानां प्रधानादिप्रतिपादनानर्हतैवोच्यते" इत्युक्तम्; न तु शास्त्राध्यायप्रतिपाद्यजगत्कारणब्रह्मपरत्वम्। तदधिकरणप्रभृति शास्त्राध्यायारम्भे च तथैवोक्तिः स्यात्; न तु प्रधानादिप्रतिपादनानर्हतोक्तिः। ब्रह्मणो जगत्कारणत्वे प्रतिपादिते हि तदितरस्य तदनर्हतोक्त्युपपत्तिः। अत आद्ये ब्रह्मपरत्वेन वेदान्तप्रामाण्येऽन्यत्र सर्वत्र पूर्वपक्षेषु तत्स्थैर्ये शङ्कामात्रमेव।

अतो जन्माद्यधिकरणप्रभृत्येवाधिकरणानामापादसमाप्तेरेकीकारः । अत एव हि सारे प्रथमपादान्ते "जन्माद्यस्य यत इत्यादिषु सद्ब्रह्मेति सामान्यशब्दैः जगत्कारणं प्रकृतिपुरुषाभ्यामर्थान्तरमिति साधितम्; ज्योतिश्चरणाभिधानात् इत्यस्मिन् सूत्रे पुरुषसूक्तोदितो महापुरुषो जगत्कारणमिति विशेषतो निर्णीतम्" इत्याद्युक्तिः । जन्माद्यधिकरणत्रयस्याप्युपोद्घातत्वे एतदुक्तिविरोधः, जगत्कारणवस्तुपरत्वाभावात् । तथा भाष्येऽपीक्षत्यधिकरणादिषु प्रधानादेर्जगत्कारणत्वानुपपत्त्यादिकमेवोक्तम् ।

किंच "प्रकृतिश्च" इत्यधिकरणस्य जन्माद्यधिकरणोक्तनिमित्तोपादानद्वये उपादनांशाक्षेपसमाधानपरत्वस्य जन्मादिसूत्रे सारेऽभिहितत्वादाद्यस्यैवोपोद्घातत्वम; न त्वन्याधिकरणत्रयस्याप्युपोद्घातता । भाष्ये शास्त्रयोन्यधिकरणसमाप्त्युद्देशे "यत्तु निमित्तोपादानयोः" इत्यादिग्रन्थे "प्रकृतिश्च" "न वियदश्रुतेः" इत्यधिकरणयोः शास्त्रयोन्यधिकरणपूर्वपक्षोक्तयुक्तिपरिहारपरत्वाभिधानमप्युपोद्घातत्वे न स्यात् । तथा प्रथमाध्यायद्वितीयपादाद्ये प्रथमपादाधिकरणार्थोक्तिपरंपरायां प्रथमसूत्रार्थोक्तौ "तदितिकर्तव्यतारूपशारीरकमीमांसाश्रवणमारभेतेत्युक्तं शास्त्रारम्भसिद्धये" इति भाष्ये आद्यस्यैव शास्त्रारम्भकत्वमुक्तम्; न तथोत्तराधिकरणानामर्थोक्तौ आरम्भणीयत्वसिद्ध्यर्थतोक्तिः ।

तथा द्वितीयाध्यायोपक्रमे जन्माद्यधिकरणार्थस्यैव प्रथमाध्यायप्रतिपाद्यत्वमभिहितम् । तच्च न चतुःसूत्र्युपोद्घातत्वे उपपन्नम् । ईक्षत्याद्यधिकरणेषु प्रधानादेः कारणत्वानर्हतैवोच्यत इत्युक्तम् । तस्य तदनर्हत्वे च ब्रह्मकारणत्वं फलतीत्यध्यायस्य न तत्परत्वोक्तिर्भाष्यादौ । तथोत्तरद्विकोपक्रमे "अतिक्रान्तेनाध्यायद्वयेन" इत्यादिभाष्ये द्विकस्योपास्यजगत्कारणवस्तुपरत्वोक्तेः जन्माद्यधिकण एव द्विकारम्भ इति न चतुःसूत्र्युपोद्घातता ।

तथा सारे "परमतः" इति सूत्रार्थोक्तौ "जन्मद्यस्य यत इत्यारभ्य प्रतिपादितम्" इति ग्रन्थेन जन्माद्यधिकरणप्रभृत्येवैकार्थवशीकारधीः । एवमन्यत्राप्यनेकत्र आद्यस्यैवोपोद्घातत्वपरत्वोक्तिबाहुल्यमिति नाल्पशोऽपि चतुःसूत्र्युपोद्घातत्वपरत्वोक्तिरित्यलं प्रपञ्चेन ।

नापि चतुःसूत्र्युपोद्घातत्वस्य सांप्रदायिकत्वम्; तस्य पूर्वोदाहृतानेकभाष्यविरुद्धत्वेन भाष्यकाराणां संप्रदायप्रवर्तकत्वानुपपत्तेः; तत्र प्रमाणाभावाच्च । न हि भाष्यकारश्चतुःसूत्र्युपोद्घातत्वसंप्रदायप्रवर्तक इत्यत्र प्रमाणम् । न च—

"व्युत्पत्त्यभावः प्रतिपत्तिदौःस्थ्यमन्येन सिद्धत्वमथाफलत्वम् ।
एतानि वै सूत्रचतुष्टयेनानारम्भमूलानि निराकृतानि ॥"

इत्यर्वाचीनाचार्यवाक्यान्यथानुपपत्त्या भाष्यकाराणां तथासंप्रदायप्रवर्तकत्वकल्पनेति; स्वभाष्यविरोधे सति तथा कल्पनानुपपत्तेः; गाव्यादिशब्दवत् [1]तद्वाक्यस्य प्रमादादिमूलत्वेनान्यथोपपत्तेश्च ।

किंचास्मन्मतज्ञपरिबृढतमैः श्रीराममिश्रैः प्रथमपादविवरणे[2] आद्यस्यैवोपोद्घातत्वेनोक्तत्वात् तस्यैव सांप्रदायिकत्वम् । तथाहि "अत्राधिकरणे ब्रह्ममीमांसा विषयः । सा किमारभणीया? उत नारभणीया?" इति तैः प्रथमसूत्रे उक्तम् । उत्तराधिकरणत्रये तु न तथोक्तम् । किंच ईक्षत्यधिकरणारम्भे "जगत्कारणस्य प्रतिपाद्यता पूर्वमुक्ता । चिदचिद्वैलक्षण्यपूर्वकं प्रतिपाद्यविशेषबुभुत्सात्रेति संगतिः" इति वदद्भिर्जन्माद्यधिकरणप्रभृत्येव शास्त्रारम्भ उक्त इत्यलमतिविस्तरेण ।

इति
श्रीमदात्रेयनाथसूरिसूनुना मेघनादारिसूरिणा विरचिते
नयद्युमणौ
उपोद्घातनिर्णयः

---

1. तद्वाक्यस्येति । व्युत्पत्त्यभाव इत्याद्यर्वाचीनवाक्यस्येत्यर्थः ।
2. विवरणे इति । श्रीभाष्यविवरणाख्ये ग्रन्थ इत्यर्थः ।

## १०. कालनिरूपणम्

कालशब्दस्य वाच्यार्थे विमतौ स्वजनेष्वपि ।
स शोध्यते यथातत्त्वं भाष्यकारमनीषितः ॥

कालस्तावन्न प्रधानतद्विकारमहदादिवत् पृथग्द्रव्यतयेष्टः । यत एवमुक्तं भाष्ये जिनपक्षनिराकरणे "कालस्य पदार्थविशेषणतयैव प्रतीतेः" इति । तेषां कार्यद्रव्यत्वं च "असंभवस्तु सतोऽनुपपत्तेः" इत्यादौ । द्रव्यत्वेऽपि परमात्मशरीरत्वाद्यभावे कालस्य परमात्मविज्ञानेन ज्ञातत्वमसिद्धम् । यदि यत्र क्वापि भाष्यकारीयग्रन्थेष्वपि द्रव्यत्वोक्तिः स्यात् सा प्रदर्शनीया तस्य पृथग्द्रव्यत्ववादिभिः । सा च शिरसोह्यते प्रमाणपूर्वकम् । तदात्वे द्रव्यत्वं चाङ्गीक्रियतेऽस्माभिः ।

ननु न "कालस्य" इत्यादिभाष्यं पृथग्द्रव्यत्वनिरासपरम् ; किंतु जीवादिभ्योऽस्तित्वनास्तित्वाद्यनैकान्त्यस्य पृथग्वक्तव्यतानिरासपरम् । अत एव हि स्यादस्तीत्यादिजैनग्रन्थानुसारेण "अस्तित्वनास्तित्वादयो न वक्तव्याः" इत्युक्तम् । [1]अयमर्थः—कालस्य पदार्थविशेषणतयैव प्रतीतेः पदार्थास्तित्वाद्युक्तेः पृथक् अस्तित्वनास्तित्वादयो न जैनैर्वक्तव्याः, पदार्थास्तित्वयुक्त्यैव विशेषणतयैव प्रतीयमानस्य तस्यास्तित्वादेः सिद्धत्वात् पृथगुक्तिवैयर्थ्यात् । ततश्च तस्यास्तित्वादयो न पृथक् परिहर्तव्याः । विशेषणतयैव प्रतीयमानस्यापि तस्य 'कालोऽस्ति' इति व्यवहारो व्यवहर्तॄणां निष्कृष्टार्थपरतया विशेषणतैकस्वभावजातिगुणादि-व्यवहारतुल्यः । एवं भाष्यस्यान्यपरत्वे समानतन्त्रन्यायेन वैशेषिकोक्तकर्मगुणस्वीकारवत् कालस्य तदुक्तस्य स्वीकारोऽभिमत इति चेत्—तन्न ; युक्तिविरुद्धत्वात्, पूर्वपरविरुद्धत्वाच्च । न हि विशेषणतैकान्त्योक्त्यैव

1. अत्र चेत्थं सर्वार्थसिद्धिपङ्क्तिरवधेया—"ननु जैननिराकरणे कालस्त्वित्यादिना भाष्येण कालो निराकृत इव भाति । नैवम् । सर्वप्रतिपत्तिषु तत्तत्पदार्थविशेषणतया सर्वलोकानुभूतस्य न बौद्धादिभिर्नास्तित्वं वक्तुं शक्यम् । न च त्वया पृथक् तदस्तित्वं साध्यम् । कालोऽस्तीत्यादिव्यवहारस्तु अपृथक्सिद्धविशेषणानां निष्कृष्य व्यवहारवदिति तन्निवारणे तात्पर्यात् । अन्यथा शास्त्रैः स्वग्रन्थान्तरैः संप्रदायैश्च विरोधः स्यात्" इति ।

विशेषणानैकान्त्यसिद्धिः । विशेष्यद्रव्याणामस्तित्वनित्यत्वैकत्वेषु सत्स्वपि पर्यायशब्दवाच्यानां विनाशादनित्यत्वाद्भिन्नत्वाच्चानैकान्त्यासिद्धेः । अवस्थानास्तित्वादिभिरेव द्रव्याणां नास्तित्वादय इत्यनैकान्त्याभिमानः पूर्वपक्षिणः । पर्यायाणां सर्वद्रव्यविशेषणैकस्वभावानामपि पृथग्वस्तुत्वात् भाष्यकारस्यापि तदभिमते, द्रव्यास्तित्वादिना पर्यायास्तित्वाद्यसिद्धेरनैकान्त्यं पृथग्वक्तव्यमेव । भाष्यकारैर्हि एतदधिकरण एवावस्थानां द्रव्यविशेषणैकस्वभावत्वपृथक्कार्यार्थत्वादिकमुक्तम् । दीपे च "द्रव्यस्य तद्विशेषणभूतपर्यायस्य इत्थंशब्दाभिधेयावस्थाविशेषस्य च 'इदमित्थम्' इति प्रतीतेः प्रकारप्रकारितया पृथक्कार्यार्थत्वात्" इत्यादौ । अत एव हि जैनैरपि पर्यायाणां पृथगेवानैकान्त्यसाधनम् । यत एवमुक्तम्—"पर्यायास्तु स्वरूपेण सदसन्तः क्वचित्क्वचित् । सत्त्वादसत्त्वात्" इति । नित्यद्रव्याणां पर्यायाभावेऽप्यनैकान्त्यं तैरेवोक्तम— "द्रव्याणामपि नित्यानां क्वचिद्देशे सत्त्वात् क्वचिदसत्त्वात् सदसत्त्वम्" इति । अतो विशेष्यसदसत्त्वाभ्यां न विशेषणसदसत्त्वमिति पूर्वपक्षराद्धान्तयोर्नान्यतरपक्षसिद्धत्वम्; विशेष्यसदसत्त्वादिना विशेषणसदसत्त्वासिद्धेः । कारणस्थायिद्रव्याविनाशेन घटाद्यवस्थानामेव विनाश इष्टः; सत्कार्यत्वसाधनात्, सतो निरन्वयविनाशाभावाभिधानाच्च ।

नन्वत्र विशेषणशब्दस्य गुणपरत्वमेवेष्टम; न तु पर्यायपरत्वम् । ततश्च विशेष्यघटादिसत्त्वान्वयव्यतिरेकानुविधायित्वाद्रूपरसस्पर्शादेर्न पदार्थव्यतिरेकेण विशेषणानां सदसत्त्वसाधनोपपत्तिः—तन्न; घटादिपदार्थनाशेऽपि रूपरसादेरविनाशात्, घटादिपदार्थसत्तायामपि पाकात् तद्रूपरसादेर्विनाशाच्च तत्रापि तदन्वयात् । एवं विशेषणतयैव प्रतीयमानस्याप्यनैकान्त्यस्य पृथग्वक्तव्यत्वे, तैरपि तथोक्ते, अस्माभिरपि परिहारोऽपि पृथग्वक्तव्यः ।

ननु तर्हि पूर्वपक्षराद्धान्तयोरवस्थानामनैकान्त्यतत्परिहारौ भाष्यादौ कथं न कृताविति चेत्—तन्न । "सर्वं च वस्तुजातम्" इत्यादिभाष्ये सर्वशब्देन विशेषणानामप्युपात्तत्वात् । अत एव हि भाष्ये तन्मतविवरणग्रन्थे "सर्वं वस्तुजातं द्रव्यपर्यायात्मकम्" इत्युपक्रम्य "तद्विपरीतम्" इत्यन्तेन द्रव्याणामनैकान्त्यमुक्त्वा "पर्यायाश्च द्रव्यस्यावस्थाविशेषाः । तेषां च भावाभावरूपत्वात् सत्त्वादिकं सर्वमुपपन्नम्" इति अवस्थानामनैकान्त्यस्य पृथगुक्तिः । राद्धान्तेऽपि "एकस्मिन् वस्तुन्यस्तित्वनास्तित्वादेर्विरुद्धस्य छायातपवद्युगपदसंभवात्" इति भाष्येणैकहेलया सर्वानैकान्त्यनिरासः ।

अत एव हि दीपे "एकस्य पृथिवीद्रव्यस्य" इत्यादिग्रन्थतः प्रदेशविशेषसंबन्धासंबन्धाभ्यां घटाद्यवस्थानैकान्त्यनिरासः । एवं सारेऽपि "तथा घटत्वशरावत्वाद्यवस्थाश्च पृथिव्यादेः प्रदेशभेदेन" इति ग्रन्थे तन्निरासः ।

एवंच कालस्याप्यवस्थाविशेषणैकस्वभावत्वे "नैकस्मिन्नसंभवात्" इति सूत्रव्याख्योपक्रमप्रभृति "तत्तु समन्वयादित्यत्र प्रपश्चितः" इत्यन्तं यद् भाष्यजातम्, तेनैव तस्य पृथग्द्रव्यत्वे तदभावे चानैकान्त्यनिरासः सिद्ध इति, न पृथगनैकान्त्यनिरासशङ्काधिक्यं चेति उत्तरभाष्यस्य तत्परत्वे तद्भाष्यवैयर्थ्यमेव ।

अथानेकदेशवर्त्यस्तिकायानैकान्त्यनिरासः पूर्वम् । [1]अनस्तिकायकालानैकान्त्यं तद्भाष्य इति—तन्न ; पूर्वभाष्यैरेव सर्वानैकान्त्यनिरासे च न पुनस्तत्राधिक्यमित्युक्तत्वात् ; वर्णगन्धरसादियुक्तपुद्गलभेदादनस्तिकायकालस्यानैकान्त्यनिरासपरता, न त्वविशेषेणानस्तिकायपरमाणूनामिति तदनैकान्त्यस्य पृथङ्निरासे विशेषणतयैव प्रतीयमानावस्थानैकान्त्यस्यापि पृथङ् निरासापातात् । न च विशेषणैकस्वरूपकालानैकान्त्यनिरासेनोपलक्षणतया अवस्थानैकान्त्यनिरासः सिद्धः; कालपदस्य लक्षणापत्तेः । विशेषणानां पुनरपि तन्निरासे च न शङ्काधिक्यमित्युक्तम् ।

कथंचन विशेषणभूतसर्वानैकान्त्यनिरासपरत्वसाधनेऽपि तस्य पृथग्द्रव्यत्वनिरासः सिद्धः । विशेषणतयैवेति सावधारणम् ; विशेषणस्वभावत्वस्य सिद्धवदभिधानात् । द्रव्यत्वे च तस्य गुणाश्रयत्वेन विशेष्यत्वाभिमतौ विशेषणतयैवेत्युक्तिवैयर्थ्यम् । विशेषणैकस्वभावजात्यादिव्यवहारतौल्योक्तिरपि विरुद्धा ; द्रव्यत्वे पृथिव्यादिवत् पृथगस्तित्वादिप्रतीतिव्यवहारार्हत्वात् ।

न च परपक्षमात्रनिरासपराधिकरणेऽस्मिन् स्वमतकालपदार्थस्वरूपकथनानुपपत्तिः । बौद्धनिरासपराधिकरणे स्वमताकाशसत्तासाधनवत् प्रस्तुततत्स्वरूपस्याप्युपपन्नत्वादित्यलं कोलाहलेन ।

---

1. अस्तिकाय इति द्रव्यविशेषे जैनानां परिभाषा । तदुक्तं भाष्ये—"अणुव्यतिरिक्तद्रव्याणि पञ्चास्तिकाया इति च संगृह्यन्ते, जीवास्तिकायो धर्मास्तिकायोऽधर्मास्तिकायः पुद्गलास्तिकाय आकाशास्तिकाय इति । अनेकदेशवर्तिद्रव्ये अस्तिकायशब्दः प्रयुज्यते" इति । "पुद्गलो नाम वर्णगन्धरसस्पर्शवद् द्रव्यम् । तच्च द्विविधम्—परमाणुरूपं संघातरूपं च" इति च तत्रैव व्यक्तम् । "कालस्तु 'अभूदस्ति भविष्यति' इति व्यवहारहेतुरणुरूपो द्रव्यविशेषः" इति च भाषितम् ।

अतस्तद्भाष्यं पूर्वोक्तप्रक्रियया तस्य पृथग्द्रव्यत्वनिरासपरमेव । अन्यत्र च न द्रव्यपरत्वोक्तिर्भाष्यादावित्युक्तम् । भाष्यकारेभ्योऽर्वाचीनोक्तिषु [1]तदुक्तिविरुद्धासु तासु नास्माकं विश्वासः । वयं हि भाष्यकारमतानुसारिणः ।

कालस्य च नित्यद्रव्यत्वाभिमतौ ब्रह्मकार्यत्वाभावान्न ब्रह्मविज्ञानात् तद्विज्ञानम् । तस्य च कार्यत्वे ब्रह्मणि लीनत्वात् अभूदित्यादिकालव्यवहारः प्रलयेऽनुपपन्न इत्युभयतःस्पाशा बन्धनी रज्जुस्तस्य पृथग्द्रव्यत्ववादिनाम् ।

न च "सर्वे निमेषा जज्ञिरे विद्युतः[2] पुरुषादधि" इत्यादौ कालस्योत्पत्तिः श्रूयत इति । तच्छ्रुतेर्मुहूर्तादिकालकल्पनायाः परमात्मकर्तृकत्वमात्रपरत्वात् । अन्यथा प्रलये कालाभावप्रसङ्गः । अत एव हि "सहस्रयुगपर्यन्तम्" इति श्लोकभाष्ये "ये मनुष्यादिचतुर्मुखान्तानां मत्संकल्पतोऽहोरात्रविदो जनाः" इत्युक्तिः ।

प्रकृतितत्कार्याणां चेतनानां च वियत्पादादौ ब्रह्मकार्यत्वादिर्निरूपितः । "अंशो[3] नानाव्यपदेशात्" "उभयव्यपदेशात्" इत्यत्र तेषामेवांशत्वं निरूपितम् । तत्र तु न क्वचिदपि कालप्रसङ्गः ।

तर्हि कस्मिन् पदार्थेऽन्तर्भावस्तस्येति चेत्—उच्यते । आदित्यादीनां भगवत्कारितविसदृशपरिणामावस्थपृथिव्यादिदेशसंबन्धनिबन्धनत्वात् कालव्यवहारस्यौपाधिकत्वमेवेति । नियतदेशसंबद्धाश्विन्याद्युपलाक्षितदेशसंबन्धे हि चन्द्रसूर्ययोरश्विन्यादिनक्षत्रसंज्ञा; रवेस्तत्र स्थितौ मेषादिमाससंज्ञा; रवेरत्यन्तसंयोगविभागयोः अन्यतरपुरःसरं पृथिव्यादिदेशविशेषस्य चन्द्रसंबन्धे करणसंज्ञा; मेषादिस्थानाच्चन्द्रमसो विभागस्य समाप्तिपर्यन्ततत्संबन्धे शुक्लपक्षसंज्ञा; तत्संयोगसमाप्तिपर्यन्ततत्संबन्धे कृष्णपक्षसंज्ञा; [4]तयोरेव च

1. अर्वाचीनोक्तिसामान्यं विरुद्धमिति सर्वत्र स्वस्याविश्वास इति च मतिव्युदासाय क्वचिदेवाविश्वासस्पष्टत्वाय तदुक्तीत्यादिति पदम् ।

2. विद्युतः विद्युद्वर्णात् । पुरुषस्यादित्यवर्णत्ववत् विद्युद्वर्णत्वं शुभाश्रयविग्रहद्वारा । कालाख्यं द्रव्यमनन्तनिमेषरूपेणान्तर्यामिसंकल्पात् परिणमतीति एकदेश्याशयः ।

3. अंशाधिकरणं चेतनानां ब्रह्मांशत्वनिरूपकम् । उभयव्यपदेशादिति सूत्रयुक्ते अहिकुण्डलाधिकरणे पूर्ववद्वेति सूत्रेण प्रकृतितत्कार्याणां ब्रह्मांशत्वं साधितम् । न ह्येवं कालस्य क्वचिदपीत्याशयः ।

4. तयोः शुक्लकृष्णपक्षयोः समुदितयोः ।

चैत्रादिमासमंज्ञा ; पितॄणां दिवारात्रसंज्ञा तयोः; मकराद्ययदेशसंबन्धप्रभृति मनुष्यदेशविभागावसाने देवानां दिवारात्रसंज्ञा; तद्विवृद्धितारतम्यात् युगमन्वन्तरपरार्धादिसंज्ञा ज्योतिःशास्त्रपुराणादिसिद्धा । अतः सूर्यादि-संबन्धविशेषोपाधितः पृथिव्यादिदेशानामेव कालसंज्ञा । पितृदिनादेरपि तथैवेति प्रदर्शितम् । मनुष्यदिवारात्रितारतम्यैरेव तेषां दिनाद्यभिधानात् पृथिव्यादिदेशस्यैव स्वरश्मिद्वारा दर्शनयोग्यादित्यसंबन्धे सति तस्य दिवासंज्ञा । दर्शनयोग्यत्वद्विभागवद्देशस्य रात्रिसंज्ञा । अहर्विभागोऽपि न नियत इति पुराणादिसिद्धम्; मेरोर्दक्षिणभागस्थे आदित्ये उत्तरभागेषु रात्रित्वाभिधानात् । एवं सर्वत्र द्रष्टव्यम् ।

पृथिव्यादिदेशस्यैव आदित्यादिसंयोगाद्यवस्थस्य कालसंज्ञा तस्यै-वाधारत्वावस्थया देशसंज्ञावत् । देशो हि न पृथिव्याद्यतिरिक्तो द्रव्यविशेषः । तथापि देशव्यवहारोऽपि कालव्यवहारवद्बहुलमुपलभ्यते । अतो व्यवहारान्यथानु-पपत्त्या कालस्य न पृथग्द्रव्यत्वम्; उपहितावस्थातः कालव्यवहारोपपत्तेः । पूर्वमीमांसायां तु आदित्यगतिप्रचयस्य कालत्वमुक्तम् । तत्पक्षेऽपि पदार्थवि-शेषणता तस्य नानुपपन्ना; तस्य गम्यमानत्वाकारेण पदार्थानां तत्संबन्धाविशे-षात् । न तु नित्यकालद्रव्यसद्भावे प्रमाणमित्युक्तम् ।

ननु—

> "विष्णोः स्वरूपात् [1]परतोदिते द्वे
> रूपे प्रधानं पुरुषश्च विप्र ।
> तस्यैव तेऽन्येन धृते वियुक्ते
> रूपान्तरं तद् द्विज कालसंज्ञम् ॥"

इत्यादौ प्रकृतिपुरुषद्रव्यवत् तस्य परमात्मशरीरत्वेन पृथगभिधानात् पृथग्द्रव्यता युक्ता—इति न;

1 अत्र तात्पर्यचन्द्रिका—"परतोदिते । परत उदिते इत्यर्थः । आर्षः सन्धिभेदः । यद्वा स्मृतिरपीयं प्रलयपरैव, तत्प्रकरणस्थत्वात् । दो अवखण्डने इत्यस्य दित इति निष्ठान्तं पदम् । पृथग्भूते इत्यर्थः । तेन प्रलयदशायामपि प्रधान-पुरुषेश्वराणां मिथः स्वरूपभेदोऽस्त्येवेत्युक्तं भवति । अदिते इति वा पदच्छेदः । अपृथग्भूते इत्यर्थः । तेन विभागानर्हः संश्लेष उक्तो भवति, प्रलयप्रकरणस्थत्वात्; अत्राप्यपि पूर्वोत्तरोपादीयमानस्मृतिसमानार्थत्वाभिप्रायाच्च" इति ।

"[1]प्रधानपुरुषव्यक्तकालास्तु प्रविभागशः ।
रूपाणि स्थितिसर्गान्तव्यक्तिसद्भावहेतवः ॥"

इत्यादौ प्रकृतिपुरुषवद् व्यक्त्याद्यवस्थाविशेषापन्नपृथिव्यादिसंघातस्यापि पृथक्पदार्थस्वरूपत्वाभिधानात् पृथग्द्रव्यत्वापत्तेः । अतः प्रनष्टादित्यादिज्योतिर्गणैः अत्यन्तविभक्तभगवत्संकारितसदृशपरिणामप्रधानादिद्रव्यस्यैव तच्छूलोके कालसंज्ञाविषयता, विभक्तनामरूपावस्थापन्नपृथिव्यादेः व्यक्तसंज्ञावत् । कालस्य रूपान्तरत्वोक्तिवत्, "व्यक्ताव्यक्ते तथैवान्ये रूपे कालस्तथा परम्" इत्यादौ व्यक्तावस्थस्यापि रूपान्तरत्वं श्रीमता पराशरेणोक्तम् । प्रकृतिपुरुषसंयोगविभागादेः पुरुषकर्मानुगुणभगवदिच्छाप्रवृत्तसमविषमपरिणामस्य प्रधानस्य भगवत्संकल्पकल्पितादित्यादिसंयोगविभागावस्थाधीनत्वात् "अन्येन धृते वियुक्ते" इत्याद्युक्तिरप्युपपन्ना । प्रलयकाले सत्त्वादिगुणसाम्यादेकरूपपरिणाम एव प्रधानस्य; सृष्ट्यादौ तु सत्त्वादिगुणवैषम्याद्विषमः परिणामः; न कदाचिदपि परिणामराहित्येन स्थितिः कल्प्या, संततपरिणामिस्वभावत्वादिति[2] भाष्यादौ व्यक्तम् । द्रव्यस्यैवावस्थान्तरापन्नस्य कार्यकारणभावे अवस्थान्तराद्यकार्यस्य पूर्वावस्थासापेक्षत्वस्य घटाद्यवस्थोत्पत्तेः पिण्डाद्यवस्थादिषु दृश्यमानत्वात् प्रकृतिपुरुषयोर्वियुक्तत्वेन धार्यावस्थयोरादित्यादिविभागापेक्षया सापेक्षता च युक्ता । तस्यास्तदपेक्षत्वं च शास्त्रैकसमधिगम्यम् । घटाद्यवस्थादौ तु प्रत्यक्षगम्यम् ।

अयमर्थः—यद्यप्यवस्थायाः द्रव्यत्वव्यतिरेकेणोपलब्ध्याद्यनर्हत्वेन सावस्थद्रव्यस्यैव प्रतीत्यादिविषयत्वम्; तथापि प्राप्ताप्राप्तविवेकेनावस्थाधीनत्वाद्विशिष्टप्रतीत्यादिविषयत्वस्य [3]पृथिव्यादेरादित्यादिसंयुक्ताद्यवस्थाया एवाहोरात्रादिकालव्यवहारविषयत्वमिति ।

ननु "अनादिर्भगवान् कालो नान्तोऽस्य द्विज विद्यते" इत्यादौ तस्य नित्यत्वैकत्वयोरभिधानात् अवस्थानां चानित्यत्वादनेकत्वाच्च न

---

1. अयमत्र श्लोकार्थः—प्रधानपुरुषव्यक्तकालाख्यानि भगवद्रूपाणि सर्वकार्याणां स्थित्युत्पत्तिनाशानां शक्तौ संभवे च हेतव इति । अत्र प्रधानादीनामुत्पत्त्यादौ यथासंभवमन्वयोऽभिमतः ।

2. "नित्यं प्रसवधर्मिणी" नित्या सततविक्रिया" इत्यादिकमत्र भाव्यम् ।

3. पृथिव्यादेरिति । शाब्दिकास्तु सांख्यमतानुसारेण शब्दतन्मात्रपरिणामः काल इत्याहुः । अहोरात्रादिव्यवहारश्चादित्यगत्युपाधिक इति तेषां मतम् ।

कालत्वोपपत्तिरिति आदित्यगत्युपहितकालद्रव्यस्यैवाहोरात्रादिव्यवहारविषयत्वम्—तन्न; मुहूर्तादीनां प्रवाहरूपेणाविच्छेदादप्यनाद्यनन्तत्वोपपत्तेः अवस्थाविशेषाणां कालव्यवहारोपाध्यैक्यादेकत्ववचनोपपत्तेः नित्यैकद्रव्यकल्पनायां प्रमाणाभावात्। भगवता पराशरेणापि तस्य न द्रव्यत्वमुक्तम्। पृथग्द्रव्यत्वाभावादेव श्रीगीताभाष्ये "अक्षयः कालः" इत्यत्र "मुहूर्तादिमयोऽक्षयः" इति मुहूर्तादिमयस्यैव कालत्वमुक्तम्। मयट् चात्र स्वरूपे; न तु विकारे; तथात्वे काले मुहूर्तादिविकारः स्यात्; मृद्विकारघटादिवत्। न तु कालविकारो मुहूर्तादिः। तदा कालमयो मुहूर्तादिरित्युक्तिः स्यात्। अतः 'कालोऽप्येका प्रकृतिः; तद्विकारो मुहूर्तादिः' इति पक्षो निरस्तः। न च तथोक्तिर्भाष्यादौ। नापि प्राचुर्ये; तथात्वे मुहूर्ताद्यतिरिक्तः कालः स्यात्। न च तथेष्टमित्युक्तम्। मुहूर्तादिमयः मुहूर्तादिस्वरूप इत्यर्थः।

अत एव हि वेदार्थसंग्रहे "निमेषकाष्ठाकलामुहूर्तादिपरार्धपर्यन्तापरिमितव्यवच्छेदस्वरूपसर्वोत्पत्तिस्थितिविनाशादिसर्वपरिणामनिमित्तभूतकालकृते" इति ग्रन्थे कलामुहूर्तादिस्वरूप एव काल इत्युक्तम्। एतद्ग्रन्थेनैव "कालस्य" इत्यादिभाष्यस्य कालानैकान्त्यनिरासपरत्वपक्षोऽपि निरस्तः; अत्रापि तद्व्यवच्छेदस्वरूपत्वाभिधानात्। विशेषणानामेव हि व्यवच्छेदस्वरूपत्वम्। द्रव्यत्वाभिमतौ तु प्रधानपुरुषविशिष्टपरमात्मनः कारणत्वाद्युक्तिवत् तद्विशिष्टत्वेनाप्युत्तरत्र तदुक्तिः स्यात्।

---

तथा च "कालाः परिमाणिना" इति सूत्रे भाषितम्—"कं पुनर्भवान कालं मत्वाह? येन मूर्तीनामुपचयाश्चापचयाश्च लक्ष्यन्ते तं कालमाहुः। तस्यैव कयाचित् क्रियया युक्तस्याहरिति रात्रिरिति च भवति। कया क्रियया? आदित्यगत्या। तयैवासकृदावृत्तया मास इति संवत्सर इति च भवति" इति। वस्तूनामौपाधिकं भेदं प्रसाधयति हरिः कालसमुद्देशे। यथा—

"तस्यात्मा बहुधा भिन्नो भेदैर्धर्मान्तराश्रयैः।
न हि भिन्नमभिन्नं वा वस्तु किंचन विद्यते॥

नैको न चाप्यनेकोऽस्ति न सितो नापि चासितः।
द्रव्यात्मा स तु संसर्गादेवंरूपः प्रकाशते॥

संसर्गिणां तु ये भेदा विशेषास्तस्य ते मताः।
संभिन्नस्तैर्व्यवस्थानां कालो भेदाय कल्पते॥"

इति।

न च तद्वदतः कलामुहूर्तादिस्वरूपस्यैव कालत्वमभिमतम् । अत एव हि "कलामुहूर्तादिमयश्च कालः" इति प्रमाणोदाहरणम् । तत्र मुहूर्तादित्वं चादित्यदिसंयोगाद्यवस्थपृथिव्यादेः तद्गतिविशेषप्रचयस्य वेत्युक्तम् । अत एव हि "त्रिंशद्भागं तु मेदिन्यास्तदा मौहूर्तिकी गतिः" इत्यादि वचनम् ।

एवंरूपकालस्य प्रवाहरूपेण स्थायित्वात् "तदेतदक्षयम्" इत्यादौ जगतोऽक्षयत्वव्यवहारवत् कालस्याक्षयत्वव्यवहारश्च युक्तः । तस्य पदार्थविशेषणत्वोक्तेः नित्यकालस्य तद्विशेषणत्वाप्रतीतेः अहोरात्राद्यात्मककालस्यैव तद्विशेषणत्वप्रतीतेश्च न नित्यकालद्रव्यत्वाभिमतिः । नित्यसर्वगतकालद्रव्यसिद्धौ ह्यादित्यादिगतेरेव व्यवच्छेदकल्पना ।

ननु "प्रकृतिपुरुषकालात्मक" इति गद्ये प्रकृतिपुरुषवत् तस्य पृथगभिधानात् द्रव्यत्वमभिमतमिति—तन्न; तत्र तथानुक्तेः[1] । पृथगुक्तिस्तु औपाधिकार्थपरत्वेनाप्युपपन्ना ।

ननु "स्वाधीनत्रिविधचेतनाचेतन" इति ग्रन्थे चेतनत्रैविध्यवत् प्राकृताप्राकृतकालरूपेणाचेतनत्रैविध्यमुक्तमिति तस्य पृथग्द्रव्यत्वाभिमतिः—तन्न; अचेतनार्थे त्रिविधपदान्वयप्रमाणाभावात् । पृथग्द्रव्यत्वसिद्धौ हि तदन्वयकल्पना[2] । अन्वयेऽपि न तस्य पृथग्द्रव्यत्वम् । नाप्यत्रान्वयः । [3]तद्व्यतिरेकेण सत्त्वादेः उद्भूतानुद्भूतावस्थाभेदेन प्राकृताचेतनद्रव्यं द्विविधम् । शुद्धसत्त्वाप्राकृताचेतनमेकमिति त्रैविध्यादित्येषा दिक् । शेषं नयप्रकाशिकायां प्रपञ्चितम् । [4]वादिसिंहकृतार्चिरादिग्रन्थेऽपि पृथक् प्रकृतिपुरुषविशिष्टब्रह्मणः

1. तथानुक्तेरिति । पृथक्द्रव्यत्वेनानुक्तेरित्यर्थः ।

2. श्रीमति रहस्यत्रयसारे तत्त्वत्रयाधिकारे कालस्य पृथग्द्रव्यत्वसिद्धान्तानुसारेण त्रिविधपदस्याचेतनेऽप्यन्वय इष्टः ।

3. अचेतनशब्देन कालस्याविवक्षितत्वे कथमचेतनस्य त्रैविध्यमित्यत्राह—तद्व्यतिरेकेणेति ।

4. वादिसिंहेति । एवमुपनामा कश्चित् एतत्पूर्वाचार्यः स्थित इति इतो ज्ञायते । कवितार्किकसिंहश्रीवेङ्कटनाथदेशिकः पुनरितोऽर्वाचीनः कालस्य पृथग्द्रव्यत्वमेव बहुसंमतमातिष्ठत । "षोढा त्रिगुणानेहोजीवेश्वरभोगभूतिमतिभेदात्" इति च गण्यते । मत्परपपर्यायधर्मभूतज्ञानस्येव कालस्य विशेषणतैकस्वभावत्वमित्यन्यदेतत् ।

कारणत्वमभिहितम् । तथा ब्रह्मणः प्रकृतितत्कार्यपुरुषाणां च स्वरूपमभिहितम् ; न तु कालस्येति पूर्वाचार्याणामयमेव मार्गोऽभिमत इति सर्वं सुस्थम् ।

इति
श्रीमदात्रेयनाथसूरिसूनुना मेघनादारिसूरिणा विरचिते
नयद्युमणौ
कालनिरूपणम्

## ११. प्रमाणनिरूपणम्

श्रियः श्रियं तुरङ्गास्यं [1]हंसार्जुनवपुःश्रियम् ।
प्रपन्नार्तितमश्छेदप्रचण्डकिरणं परम् ॥
लक्ष्मणाग्रजदूतं च जिताशेषरिपुं हरिम् ।
श्रीमद्रामानुजाचार्यान् नाथार्यांश्चात्मनायकान् ॥
प्रपद्य मेयमानानां भाष्यकारस्य संमतः ।
[2]सुखग्रहणसंसिद्ध्यै रूपसंख्यादिरुच्यते ॥

तत्रान्यप्रमाणानपेक्षमर्थपरिच्छेदकं ज्ञानं प्रमाणम् । अर्थपरिच्छेदेऽन्यप्रमाणसापेक्षस्मृतावतिव्याप्तिपरिहारोऽन्यप्रमाणानपेक्षमिति पदात् । अर्थापरिच्छेदकमूर्च्छाद्यवस्थात्मधर्मभूतज्ञानेऽतिव्याप्तिपरिहारः अर्थपरिच्छेदपदात् । ज्ञानस्यापि स्वसत्तयैव स्वपरिच्छेदकत्वेन स्वाश्रयात्मने प्रकाशमानत्वात् तत्र नाव्याप्तिश्च । ज्ञानं हि स्वस्फूर्तावपि स्वयमेव हेतुः । परिच्छेदः स्फूर्तिः; व्यवहारयोग्यतेति यावत् । तदापादकमर्थपरिच्छेदकम् । कथंचिदर्थपरिच्छेदकस्मृतिव्यतिरिक्तालोकेन्द्रियादिष्वतिव्याप्तिपरिहारो ज्ञानपदात् । स्मृतिश्च भावनासंस्कारासाधारणकारणं ज्ञानम् । भावनासंस्कारसाधारणकारणलिङ्गपरामर्शादावतिव्याप्तिपरिहारोऽसाधारणग्रहणात् । वेगादिसंस्कारासाधारणकारणशरकर्मादिष्वतिव्याप्तिपरिहारः भावनाग्रहणात् । स्मृतिव्यतिरिक्तानुभूतिः प्रमाणमिति वा लक्षणमस्तु । पूर्ववदेव व्यावृत्तिः ।

---

1. अर्जुनेति । धवलेत्यर्थः ।

2. सुखग्रहणेति । प्रमाणलक्षणं बहुभिर्बहुधा व्याहृतम् । यथा— अविसंवादि ज्ञानं प्रमाणमिति बौद्धाः । सम्यगनुभवः प्रमाणमिति नैयायिकाः । दृढमविसंवाद्यगृहीतार्थग्राहकं प्रमाणमिति भाट्टाः । अनुभूतिः प्रमाणमिति प्राभाकराः । तथा—प्रत्यक्षं कल्पनापोढमभ्रान्तमिति बौद्धाः । इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षमिति नैयायिकाः । अर्थेन्द्रियसंप्रयोगात् संप्रयुक्तार्थगोचरं विज्ञानं प्रत्यक्षमित्यपरे । सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षमिति जैमिनीयाः । साक्षात् प्रमितिः प्रत्यक्षमिति प्राभाकराः । एवं बहुधोक्तत्वादनिर्णये प्रसक्ते सुखेन निर्णयार्थमित्यर्थः ।

कारणत्वमभिहितम् । तथा ब्रह्मणः प्रकृतितत्कार्यपुरुषाणां च स्वरूपमभिहितम ; न तु कालस्येति पूर्वाचार्याणामयमेव मार्गोऽभिमत इति सर्वं सुस्थम् ।

इति

श्रीमदात्रेयनाथसूरिसूनुना मेघनादारिसूरिणा विरचिते

नयद्युमणौ

कालनिरूपणम्

## ११. प्रमाणनिरूपणम्

श्रियः श्रियं तुरङ्गास्यं [1]हंसार्जुनवपुःश्रियम् ।
प्रपन्नार्तितमश्छेदप्रचण्डकिरणं परम् ॥
लक्ष्मणाग्रजदूतं च जिताशेषरिपुं हरिम् ।
श्रीमद्रामानुजाचार्यान् नाथार्यांश्चात्मनायकान् ॥
प्रपद्य मेयमानानां भाष्यकारस्य संमतः ।
[2]सुखग्रहणसंसिद्ध्यै रूपसंख्यादिरुच्यते ॥

तत्रान्यप्रमाणानपेक्षमर्थपरिच्छेदकं ज्ञानं प्रमाणम् । अर्थपरिच्छेदेऽन्यप्रमाणसापेक्षस्मृतावतिव्याप्तिपरिहारोऽन्यप्रमाणानपेक्षमिति पदात् । अर्थापरिच्छेदकमूर्च्छाद्यवस्थात्मधर्मभूतज्ञानेऽतिव्याप्तिपरिहारः अर्थपरिच्छेदपदात् । ज्ञानस्यापि स्वसत्तयैव स्वपरिच्छेदकत्वेन स्वाश्रयात्मने प्रकाशमानत्वात् तत्र नाव्याप्तिश्च । ज्ञानं हि स्वस्फूर्तावपि स्वयमेव हेतुः । परिच्छेदः स्फूर्तिः; व्यवहारयोग्यतेति यावत् । तदापादकमर्थपरिच्छेदकम् । कथंचिदर्थपरिच्छेदकस्मृतिव्यतिरिक्तालोकेन्द्रियादिष्वतिव्याप्तिपरिहारो ज्ञानपदात् । स्मृतिश्च भावनासंस्कारासाधारणकारणं ज्ञानम् । भावनासंस्कारसाधारणकारणलिङ्गपरामर्शादावतिव्याप्तिपरिहारोऽसाधारणग्रहणात् । वेगादिसंस्कारासाधारणकारणशरकर्मादिष्वतिव्याप्तिपरिहारः भावनाग्रहणात् । स्मृतिव्यतिरिक्तानुभूतिः प्रमाणमिति वा लक्षणमस्तु । पूर्ववदेव व्यावृत्तिः ।

---

1. अर्जुनेति । धवलेत्यर्थः ।

2. सुखग्रहणेति । प्रमाणलक्षणं बहुभिर्बहुधा व्याहृतम् । यथा—अविसंवादि ज्ञानं प्रमाणमिति बौद्धाः । सम्यगनुभवः प्रमाणमिति नैयायिकाः । दृढमविसंवाद्यगृहीतार्थग्राहकं प्रमाणमिति भाट्टाः । अनुभूतिः प्रमाणमिति प्राभाकराः । तथा—प्रत्यक्षं कल्पनापोढमभ्रान्तमिति बौद्धाः । इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षमिति नैयायिकाः । अर्थेन्द्रियसंप्रयोगात् संप्रयुक्तार्थगोचरं विज्ञानं प्रत्यक्षमित्यपरे । सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षमिति जैमिनीयाः । साक्षात् प्रमितिः प्रत्यक्षमिति प्राभाकराः । एवं बहुधोक्तत्वादनिर्णये प्रसक्ते सुखेन निर्णयार्थमित्यर्थः ।

ननु स्वतः प्रामाण्ये[1] अन्यानपेक्षया अर्थपरिच्छिन्नं प्रमाणमित्युक्तम्; इहार्थपरिच्छेदकं प्रमाणमिति। तत् कथम्? तत्रोच्यते। तत्र अर्थज्ञानस्यार्थपरिच्छेदफलकत्वात् परिच्छिन्नस्य तस्य प्रमाणत्वाभिधानेऽपि विरोधाभावात् अव्याप्त्यादिराहित्ये उभयोरन्यतरस्य प्रमाणलक्षणत्वे न कश्चिद्विरोध इति। भाष्यादौ च नानाप्रकारता दृश्यते। तथाहि—"प्रत्यक्षस्य होष स्वभावः, यत् स्वसमकालवर्तिनः पदार्थस्य ग्राहकत्वम्" इति। तथा "धियो हि धीत्वं स्वप्रकाशता च; ज्ञातुर्विषयप्रकाशतयोपलब्धेः" इति। तथा "अनुभूतेरनुभूतित्वं नाम" इत्याद्युक्त्वा "स्वसत्तयैव स्वविषयसाधनत्वं वा" इति। तथा "स्वसत्तयैव स्वाश्रयं प्रति कस्यचिद्विषयस्य प्रकाशनं हि संवेदनम्" इति। "यथा प्रकाशयत्येकः" इत्यत्र "स्वकीयेन प्रकाशयति" इति। एवमादिष्वर्थपरिच्छेदकत्वस्य प्रमाणत्वमुक्तम्। तथा "विषयप्रकाशतयैवोपलब्धेरेव हि संविदि स्वयंप्रकाशता समर्थिता" इत्यादौ विषयप्रकाशतायाः प्रामाण्यमुक्तम्; विषयप्रकाशत्वं नाम तत्संबन्धितया स्फूर्तिः। तथा "बुद्धेर्भेदम्" इत्यत्र "बुद्धिर्विवेकपूर्वकनिश्चयरूपं ज्ञानम्" इति। तथान्यत्र "ज्ञानं वस्तुनिश्चयः" इत्येवमादिषु।

अथार्थपरिच्छेदकत्वस्य प्रामाण्यत्वे तु न स्वतस्त्वम्; परिच्छेदकत्वस्य सामर्थ्यरूपत्वेनाप्रत्यक्षत्वादिति—तन्न; व्यवहार एव नियतपूर्वक्षणवर्तित्वस्यैवार्थपरिच्छदकत्वरूपत्वात् तस्य च प्रत्यक्षत्वात् स्वतस्त्वोपपत्तेः। "मत्तः स्मृतिर्ज्ञानम्" इत्यत्र "स्मृतिरनुभूतविषयं ज्ञानं पूर्वानुभूतसंस्कारमात्रजं ज्ञानम्" इति स्मृतिस्वरूपमुक्तम्। अत उदाहृतलक्षणानि भाष्यकारमतानुसारीणि।

अतस्तद्विरुद्धम् "अगृहीततत्त्वग्रहणशक्तं ज्ञानं प्रमाणम्" इत्यस्मदीयैः कैश्चिदुक्तं लक्षणम्। सर्वज्ञानानां तत्त्वग्रहणशक्तत्वेन तत्त्वपदव्यावर्त्याभाव इति तत्त्वपदाधिक्यं च।

यत्तु तार्किकैकदेशिभिः "स्मृतिव्यतिरिक्तानुभूतिः प्रमाणम्" इत्यस्य दूषणमुक्तम् "प्रथमाध्याये बौद्धादीन् प्रत्यनुभूतिप्रामाण्यासाधनादनुपपन्नम्" इति—तन्न; दर्शनानभिज्ञतयैवोक्तत्वात्। प्रथमाध्याये हि शब्दानामर्थासंस्पर्शित्वनिरासे प्रवृत्त्यानुभूतित्वमेव साध्यते। लौकिकवाक्येष्वर्थासंस्पर्शित्वस्यापि दर्शनाद्वैदिकेष्वपि संशयादप्रामाण्ये लौकिकवाक्यानां पुरुषबुद्धिमूलत्वेनाप्तत्वाद्य-

1. स्वतः प्रामाण्ये। स्वतः प्रमाण्यनिरूपणार्थे एतद्ग्रन्थीये परिच्छेदे।

वधारणद्वारार्थप्रत्यायकत्वात् वेदस्यापौरुषेयत्वात् तज्जन्यज्ञानस्य चानुभूतित्वादिति संशयनिरासादनुभूतित्वमेव साध्यते । एवं शब्दार्थसंबन्धौत्पत्तिकत्वसाधनेनानपेक्षत्वसिद्धेः वैदिकज्ञानस्यानुभूतित्वमेव साध्यते । शब्दार्थसंबन्धस्य सांकेतिकत्वे संकेतग्रहणस्यैव व्यवहारहेतुत्वात् संकेते च प्रमाणान्तरमङ्गीकार्यमिति पूर्वपक्षापरया तन्निरासतो राद्धान्तेऽनुभूतित्वम् । अर्थवादानामपि पूर्वपक्षे वाक्यात् रुद्ररोदनादिसत्ताप्रमाणसापेक्षत्वात् स्मृतितुल्यत्वेनाननुभूतित्वम् । राद्धान्ते रुद्ररोदनादेः प्रमाणान्तराप्रतिपन्नत्वेन तत्प्रतिपादनपुरःसरं निन्दादिबुद्ध्युत्पादनद्वारा विध्यैक्यान्नानुभूतित्वहानिरिति । सर्ववेष्टनस्मृतेः स्पर्शनश्रुतिजन्यानुभूतिव्याहतेः स्वरूपहानेरप्रामाण्यम् । तन्निरासात् तत्प्रामाण्यम् । संशयेऽपि तद्धर्मतया धर्मधियः ख्यातितत्त्वोक्तन्यायेनानुभूतित्वेऽपि नियतैकव्यवहाराहेतुत्वेन फलाभावादप्रामाण्यसाम्यादननुभूतित्वापादने तन्निरासादनुभूतित्वमेव साध्यत इत्येवं द्रष्टव्यम् ।

यच्चोक्तं तार्किकैकदेशिभिः स्मृतेः स्मृतिव्यतिरिक्तत्वासंभवादननुभूतित्वे स्वस्मिन् प्रामाण्यमभ्युपगतं न स्यादिति—तन्न; स्वस्फुरणे प्रमाणान्तरसापेक्षत्वाभावात् । विषयस्फुरण एव हि स्मृतेः पुर्वानुभावापेक्षा ।

ननु तस्याः संस्कारजत्वाविशेषेऽपि कथं स्वस्मिन् स्वविषयेषु च प्रामाण्याप्रामाण्यविभागः—तन्न; स्मृतित्वमप्रामाण्यमित्यनङ्गीकारात् । किंतु सापेक्षत्वमेवाप्रामाण्यम । सापेक्षता च विषयपरिच्छेदे स्मृतेरिति तत्रैवाप्रामाण्यम् । स्वसत्तयैव स्वाश्रयं प्रति स्वपरिच्छेदान्न तत्र सापेक्षतेति न प्रामाण्यहानिस्तत्र । अतः, स्मार्यविषयस्मृतिव्यतिरिक्तानुभूतिः प्रमाणमिति लक्षणमायातम् । संस्कारमात्रजा स्मृतिरिति तत्स्वरूपकीर्तनमात्रान्न स्वस्मिन्नप्रामाण्यम् स्मृतेर्विषयं प्रत्यप्रामाण्यस्य वक्तव्यत्वात् तत्स्वरूपज्ञान एव तत्संभवात् स्वरूपस्य चेतरव्यावृत्ततया ज्ञाप्यत्वेन तथोक्तत्वात् ।

यत्तु स्वव्यतिरेकेण ज्ञानकार्यस्य परिच्छेदान्तरस्याभावादर्थपरिच्छेदेऽन्यानपेक्षत्वानुपपत्तेर्नानुभूतित्वमित्युक्तम्—तन्न ; ज्ञानस्य स्वव्यतिरेकेण विषयस्फूर्त्याख्यकार्यसंभवात् । 'जानामि' इत्यादौ ज्ञानस्फूर्तिवत् 'इदम्' इति विषयस्यापि हि स्फूर्तिः । ज्ञानस्य स्वरूपव्यतिरेकेण स्वस्फूर्त्याख्यकार्यभेदान्न तत्राव्याप्तिश्च । तदेकदेशयुक्तान्यदोषैरस्मत्पक्षस्यानभिभवान्न तद्धानिः ।

ननु स्मृतिव्यतिरिक्तानुभूतिप्रामाण्येऽपि शुक्तिकारजतविभ्रमाणामपि प्रामाण्यम् । न च तत्र तज्ज्ञानस्य स्मृतित्वम्; अनुभूतत्वाविषयत्वेन स्मृतित्वानुपपत्तेः; तज्ज्ञानस्येन्द्रियान्वयव्यतिरेकानुविधायित्वाच्च । अतो न संस्कारमात्रजत्वं तस्य । किंच अनुमानस्य गृहीतग्राहित्वाभिमतेः तत्रापि संस्कारमात्रजत्वोपपत्तौ कारणान्तरकल्पनाभावापत्तिश्च—नैतत् । शुक्तिरजतज्ञानस्यानुभूतित्वेन स्मृतित्वानङ्गीकारात् । व्यवहारबाधात् भ्रान्तित्वव्यवहार इत्युक्तम् । अनुमानज्ञानस्य लिङ्गज्ञानान्वयव्यतिरेकानुविधायित्वात् गृहीतग्राहित्वेऽपि न संस्कारमात्रजत्वकल्पना ।

यत्तु "[1]साधनाश्रययोरन्यतरत् प्रमाव्याप्तं प्रमाणम्" इति लक्षणम्—तन्न । "न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" इत्यादौ जीवानामपि नित्यप्रमाश्रयत्वप्रतीतेस्तत्रातिव्याप्तेः । प्रमेयत्वस्थापि प्रमाव्याप्तत्वेन तत्रापि प्रमाणलक्षणमतिव्याप्तम् । प्रमेयत्वं हि पदार्थानां प्रमासंबन्धकाल एव, अर्थेन्द्रियसंयोगादेः साधनत्वावस्थायामिव । साधनत्वं च साध्यनियतपूर्वक्षण एवेति तदवस्थायामेव प्राप्तिः ।

न चार्थेन्द्रियसंयोगादेरेव प्रमाणत्वात् तत्सत्तायामेव प्रमाव्याप्तेर्नियतत्वात् पदार्थसत्तायास्त्वनियमेन न तत्रातिव्याप्तिरिति—तत्संयोगसद्भावेऽपि प्रमानुदयात् तदव्याप्तेः । साधनत्वावस्थायां व्याप्तौ तु साधनत्वं साध्यनियतपूर्वक्षण एवेति प्रमेयावस्थायामपि तदविशेष इति तदव्याप्तिः सुस्था । साधनपदात् तद्व्यावृत्तिश्च नाङ्गीकृता । अन्यमनस्कस्य वस्तुतः प्रमानाश्रयत्वाच्च न प्रमाणत्वम् । प्रमाणस्य प्रमेयस्फुरणार्थत्वात् तत्स्फुर्तेश्च प्रमाधीनत्वात् प्रमाया एव प्रमाणत्वमुचितम् । न च प्रमेयस्फूर्तिरेव प्रमा; प्रमात्वेन विषयत्वेन च तयोः पृथक् स्फुरणात् ।

"यथार्थानुभवः प्रमा" इति प्रमाणलक्षणं च दुष्टम् । सर्वानुभवानां यथार्थतया यथार्थपदव्यावृत्त्यभावात् ।

यच्च पुनरपि "अदूरप्राक्कालोत्पत्तिनियतासाधारणकारणप्रसूतः प्रत्ययः" इत्यनुभवलक्षणमुक्तम्—तन्न; स्मृतेरपि तथात्वेनातिव्याप्तेः । सा च ह्यदूरप्राक्कालोत्पत्तिनियतासाधारणकारणप्रसूता ।

---

1. इदमपि तार्किकमतमिति सर्वदर्शनसंग्रहे उद्धृतम् ।

न च उत्पादने तात्कालिकत्वनियमनोत्पादकस्योत्पत्तिः; सा तु न संस्कारस्येति—चिरकालोत्पादनार्थेन्द्रियसंनिकर्षादेरप्यनुभवकारणत्वात् । अन्यमनस्कस्य हि घटादिस्पर्शेऽपि चिरकालं तज्ज्ञानोत्पत्त्यदर्शनात् तल्लक्षणं तत्राव्याप्तं चेत्यलमपरिणततार्किकलक्षणनिरसनेन ।

एतेन सम्यगनुभवसाधनं तथात्वानुभूतिः प्रमाणमित्यादयोऽपि निरस्ताः ।

[1]न चानधिगतार्थगन्तृ प्रमाणम् ; विकल्पासाहत्वात् । किं परानधिगतस्य वा स्वानधिगतस्य वार्थस्य गन्तृत्वमिति ? नाद्यः ; स्थायित्वेनाभिमतात्माकाशादेः पूर्वैरवगतत्वसंभवात् तद्विषयानुमानादेरप्रामाण्यप्रसङ्गात् । नापि द्वितीयः; पुर्वमेव स्वविदितस्यार्थस्य सत्त्वान्वेषणे प्रत्यक्षादेरप्रामाण्यप्रसङ्गात् ; चक्षुषा दृष्टविषये द्रव्ये स्पर्शनस्याप्रमाण्यप्रसङ्गाच्च ।

न च कालाद्युपाधिभेदात् तत्राप्यनधिगतार्थगन्तृत्वम् । तर्हि सर्वपदार्थानां तदुपाधित एवानधिगतत्वात् अधिगतत्वाभावेनानधिगतेति विशेषणवैयर्थ्यम् । स्मृतिज्ञानेऽतिव्याप्तिश्च ; तस्याप्युपाधिभिन्नविषयत्वेनानधिगतार्थगन्तृत्वात् । भाट्टैकदेशिभिरेव तन्निरस्तमिति न तत्र बह्वायासः । तथाहि—

"एकदेशसमुत्थानामेकस्मिन्नेव गोचरे ।
प्रामाण्यं संविदां लोकः सर्वासामेव मन्यते ॥
तथैकत्रैव साध्येऽर्थे प्रवक्तृप्रतिपाद्ययोः ।
बहुहेतुसमावेशो दृश्यते लोकशास्त्रयोः ॥
न च प्रवक्तृसामर्थ्यं परेषामवगम्यते ।
येन तेषां प्रमाणत्वप्रतीतेर्वर्जनीयता ॥
तेन यावत्समीचीनात् साधनादुपजायते ।
प्रत्ययस्तस्य सर्वस्य प्रामाण्यमिति गृह्यताम् ॥"

इति ।

न[2] चाविसंवादिविज्ञानस्य प्रायाण्यम् ; अविसंवादिशब्दार्थानिर्धारणात् । न च प्रमाणान्तराविसंवादस्तदर्थः । प्रमाणान्तरस्याप्यविसंवादार्थं प्रामणान्तरा-

1. भाट्टमीमांसकानां मतं निरस्यति—न चेति ।
2. बौद्धानां मतं निरस्यति—न चाविसंवादीति ।

न्वेषणेनानवस्था । अप्रमाणत्वेन बौद्धाभिमततर्कसविकल्पकज्ञानस्याप्यविसंवादात् तत्रातिव्याप्तिश्च ।

न च शुक्तिकारजतादिविकल्पज्ञानानां विसंवादित्वात् सविकल्पे नाविसंवाद इति—सविकल्पकस्यैकत्र विसंवादे सर्वत्र सविकल्पकत्वाविशेषेण तत्कल्पनायां निर्विकल्पकस्यापि ज्ञानत्वाविशेषेण सविकल्पकज्ञानवत् तत्कल्पनापातादित्यलं प्रपञ्चेनेत्यस्मदुक्तप्रमाणलक्षणमेव सुस्थम् ।

तच्च प्रमाणं पञ्चविधम्—[1]प्रत्यक्षमनुमानमुपमानं शास्त्रमर्थापत्तिरिति ।

ननु भाष्यकारस्य प्रत्यक्षादित्रयमेव प्रमाणतयेष्टम् । अत एव प्रथमसूत्रे प्रत्यक्षादिप्रमाणत्रयस्य सविशेषविषयत्वमुक्त्वा "प्रमाणसंख्याविवादेऽपि" इत्युक्तम्—तन्न; एतद्भाष्यात् प्रमाणत्रयाङ्गीकाराप्रतीतेः । तदङ्गीकारे हि प्रमाणसंख्याविवादेऽपीति भाष्यं नर्जु; प्रमाणप्रमेयतत्त्वनिबन्धनान्यूनानतिरेकसंख्याप्रतिपक्षत्वात् । अध्याहारादौ तु पक्षान्तरेऽपि तत् । तर्हि भाष्यस्य स्वारस्येन तत्संख्यानियत्यङ्गीकार इति चेत्—तन्न; तस्य तन्नियतिपरत्वाप्रतीतेः । तदनिर्बन्धेऽपि तत्प्रतिपक्षनिरासे संख्याविवादस्तदवस्थश्च; तन्नियतितदभावयोः संख्याविषयत्वेन साध्यत्वात् । अतस्तद्युक्तिसिद्धेभ्यः पूर्वकाण्डे वृत्तिकारग्रन्थसिद्धेभ्यः पञ्चप्रमाणेभ्योऽन्यूनानतिरिक्तप्रमाणसंख्याविवादेऽपीति भाष्यं योजनीयम् ।

'इयन्त्येव प्रमाणानि; तत्स्वरूपाणि चैवम्' इत्यनिश्चये च प्रमेयविशेषानिश्चयः । प्रमाणविशेषाद्धि प्रमेयविशेषनिश्चयः । अतः प्रमाणसंख्यानियतिरावश्यकी । तत्संख्या चास्मदुक्तप्रक्रिययैव । अन्यथा सादृश्यादिप्रमाणविनियोजकभाष्यविरोधः । "रेखागवयादावपि सत्यगवयबुद्धिः सादृश्यनिबन्धना" इति हि भाष्यम् । किंच "इन्द्रियजन्मनः प्रत्यक्षस्य ह्येष स्वभावः" इत्याद्युक्त्वा "स्मरणानुमानागमयोगिप्रत्यक्षादिषु" इत्युक्त्या आदिग्रहणादुपमानादेरपि पृथक्प्रमाणत्वधीः । न चादिग्रहणमीश्वरप्रत्यक्षपरम्; स्वतः पृथक्प्रमाणपरत्वस्यैव युक्तत्वात् । तदसंभवे तु प्रमाणभेदावान्तरभेदपरता । किंच योगिप्रत्यक्षभेद एव परमात्मप्रत्यक्षमपि । तच्च वक्ष्यते । अन्यथा सविकल्पकनिर्विकल्पकयोगययोगिप्रत्यक्षातिरिक्तता स्यात् । तच्च प्रदेशान्तरभाष्यविरुद्धम् । अत आदिग्रहणमुपमानादिपरमेव । अतः पञ्चविधमेव तत् ।

---

1. अत्र प्राभाकरमतमनुसरत्ययं ग्रन्थकारः ।

## प्रत्यक्षनिरूपणम्

तत्रान्यप्रमाणानपेक्षयार्थपरिच्छेदकसाक्षाज्ज्ञानं प्रत्यक्षम् । साक्षात्त्वं नाम अव्यवहितत्वम्; तच्छब्दस्य तथा व्युत्पत्तेः । ज्ञानस्यार्थान्तरज्ञानकारणजत्वाव्यवधानेनार्थपरिच्छेदकत्वं प्रत्यक्षत्वमित्यर्थः । अनुमानादिज्ञानं तु धूमादिज्ञानकारणजत्वव्यवधानादग्न्यादिपरिच्छेदकम् । अतः साक्षात्पदेनानुमानादिव्यवच्छेदः ।

ननु प्रत्यक्षस्यापीन्द्रियकारणजत्वव्यवधानादर्थपरिच्छेदकत्वमिति नेतरप्रमाणवैषम्यम्—तन्न; इन्द्रियाणां सत्तया कारणत्वेन ज्ञानव्यवधानेन कारणत्वाभावात् । अनुमानादौ तु इन्द्रियजवस्त्वन्तरविषयज्ञानकारणजत्वमिति व्यवधानेनैवार्थपरिच्छेदः । अग्न्यादिसंबद्धधूमादिज्ञानेन ह्यग्न्यादिज्ञानम् । प्रत्यक्षं चायोगिनामिन्द्रियार्थसंनिकर्षजमेव । अतोऽव्यवधानं स्फुटमेव ।

नन्वन्तर्याम्यधिकरणे "न च दर्शनश्रवणादिशब्दाश्चक्षुरादिकरणजन्मनो ज्ञानस्य वाचकाः, अपितु रूपादिसाक्षात्कारस्य" इति भाष्यात् रूपादिसाक्षात्कारस्य प्रत्यक्षताभिमतेति प्रतीयते । तत्र साक्षात्कारशब्दार्थः कः? उच्यते—पूर्वभाष्ये ज्ञानस्य प्रस्तुतत्वात् तज्ज्ञानं साक्षात्क्रियत इति साक्षात्करोतीति वा व्युत्पत्त्या रूपादिसाक्षात्कारिज्ञानस्य वाचक इति ।

यत्तु स्वभावपरो वा ज्ञानस्वभावपरत्वात् तार्किकैकदेशिनां प्रतीतेः प्रतीत्यन्तराव्यवहितेन्द्रियजत्वमित्यादि साक्षात्त्वपरिष्काराभिधानम्—तत्तु मत्प्रक्रियायां नास्कन्दति ।

यत्तु कैश्चित् साक्षात्त्वं स्वरूपधीरित्युक्तम्—तन्न; विकल्पासहत्वात् । किं स्वमेव रूपं स्वरूपम्? स्वस्य रूपं वा स्वरूपमिति । नाद्यः; अनुमानादिधियामपि कतिपयधर्मधीत्वात् साक्षात्त्वापत्तेः । न च लिङ्गादिपरसंबन्धितारूपेण तासां भासमानत्वात् न स्वरूपधीत्वमिति न साक्षात्त्वमिति; दण्ड्यादिप्रत्ययानामपि परसंबन्धितारूपप्रत्ययत्वात् तत्राव्याप्तेः ।

न च विशदावभासत्वं साक्षात्त्वमिति; वैशद्यस्यापि सापेक्षत्वेऽनुमानादावपि तत्संभवात् । न च धीस्फुटता साक्षात्त्वम्; सर्वधियामपि तथात्वात् । एवमन्यथोक्तिदूषणान्युन्नेयानि ।

यत्तु अपरोक्षप्रमाव्याप्तमिति लक्षणम्—तन्न; पूर्ववद्घटादिप्रमेयेषु प्रमाश्रयात्मसु चातिव्याप्तेः।

अपरोक्षत्वं साक्षात्त्वम्। तच्च लैङ्गिकादिज्ञानव्यावृत्त ऐन्द्रियकज्ञानानुगतः कश्चित् ज्ञानवान्तरजातिभेद इति साक्षात्त्वलक्षणम्।

तत्र निर्विकल्पकं च घटादेरनुल्लेखितानुवृत्तिधर्मघटत्वादिकतिपयविशेषणविशिष्टतयार्थावच्छेदकं ज्ञानम्। यथा प्रथमाक्षिसंनिपातजं ज्ञानम्। अनुल्लेखितेति सविकल्पकव्यावृत्तिः।

न च वस्तुमात्रावभासकं निर्विकल्पकम्; जात्यादिधर्मविधुरतया वस्तुमात्रस्य प्रतिभासानुपपत्तेः। तथात्वे आत्मादेरपि चाक्षुषतापत्तिः; तत्र रूपादेरनुपकारकत्वात्। अतः केनचिद्विशेषणेन विशिष्टतयैव सर्वेषां ज्ञानम्। अन्यथा द्वितीयादिप्रत्ययेषु प्रथमाभिसंहितार्थप्रत्यभिज्ञा न स्यात्। तदभावे च तस्यानेकविशेषणविशिष्टत्वधीर्न स्यात्। प्रथमाक्षिप्रयोगे तु शैघ्र्यादेरनुवृत्त्युल्लेखाभावमात्रेण निर्विकल्पकत्वव्यवहारः; अनेकविशेषणविशिष्टत्वबुद्ध्यनुदयाच्च। विविधः कल्पो विकल्पः। तत्सहितं सविकल्पकम्। विविधत्वं च धर्मभेदकृतमित्यनेकविशेषणविशिष्टत्वधीरेव सविकल्पकम्। तथा वस्तुसंस्थानाख्यगोत्वादिविशिष्टतया ग्रहे द्वितीयादिप्रतीतिष्वनुवृत्त्यादिधर्मविकल्पोदयात् सविकल्पता तस्य। ततो रूपादिषु वस्तुधर्मेण केनचिद्विशेषणेन विशिष्टत्वग्रहादनुल्लेखितानुवृत्त्यादिधर्मेण विशिष्टतया वस्तुपरिच्छेदकमित्येव तल्लक्षणम्।

ननु वेदार्थसंग्रहे वस्तुसंस्थानाख्यजातेरनेकनिष्ठत्वाग्राह्यत्वग्राह्यत्वाभ्यामेव निर्विकल्पकत्वसविकल्पकत्वे उक्ते; न तु रूपादेः; नापि कतिपयविशेषणविशिष्टग्रहादेरिति—तन्न; संस्थानानुल्लेखेन दूरादौ रूपादिविशिष्टतया ग्रहणोपपत्तेः। रूपादिरपि संस्थानवत् इत्थमंशनिवेश्यैव। अत एव हि भाष्ये "निर्विकल्पकं नाम केनचिद्विशेषणेन वियुक्तस्य ग्रहणम्" इत्युक्तिः।

अत एव वेदार्थसंग्रहग्रन्थस्तु धर्ममात्रोपलक्षणपरः। "अतो निर्विकल्पकमेकजातीयद्रव्येषु" इत्यदिभाष्यमपि तथा। अत एव "न पुनः संस्थानरूपजात्यादेरग्रहणात्" इति भाष्ये आदिग्रहणात् रूपादेरपि ग्रहणम्। रूपादयोऽपि संस्थानवदनुवृत्तिधर्मभाजः। अनुवृत्तिधीश्च 'एतत्संस्थान्ययम्' इति पूर्वानुभूतवस्तुविषयतया प्रत्यभिज्ञाप्रत्यक्षधीः। अतः संस्थानविशिष्टत्वा-

कारेण गवादेरनुवृत्तिधीविषयत्वम्; केवलगोत्वादेरनुभूतत्वात्। एतेन रूपादि-विशिष्टानुवृत्तिरप्युक्ता। भाष्ये गोत्वादिसंस्थानादिमात्रानुवृत्त्युक्तिस्तु परमताभिप्राया। गवादेः प्रथमग्रहणे तु न संस्थानविशेषोल्लेखः। किंतु संस्थानादिविशिष्टवस्तुमात्रग्रह एव। अतो निर्विकल्पकमपि विशिष्टवस्तु-विषयमेव।

[1]ननु विशिष्टमेव वस्तु दुर्निरूपम्; तत् विशेषणविशेष्यतत्संबन्धेभ्यो भिन्नमभिन्नं वेति विकल्पासहत्वात्। तथाहि—नाद्यः; विशेषणादित्रयातिरिक्तवस्तु-नोऽप्रतीतेः। दण्ड्यानयनोक्तौ च तदानयनेऽतिप्रसङ्गात्। नापि द्वितीयः; अविशेषात् प्रत्येकं विशिष्टत्वापातात्। न च मिलितानां विशिष्टत्वम्; विकल्पासहत्वात्। किं मिलिता इति त एव? उत तेभ्योऽन्य एवेति। आद्ये प्रत्येकं विशिष्टत्वम्। द्वितीये तु प्रतीत्यादिविरोधः। न चैकज्ञानारूढो विरलनानाज्ञानारूढो वानेकस्तत्सम्बन्धश्च विशिष्टपदार्थः; 'घटपटौ' इत्युक्ते एकबुद्ध्यारोहे तयोस्तत्संबन्धस्य च विशिष्टत्वापातात्। घटपटत्वसंबद्धानां तद्बुद्ध्यारूढानामभ्युपगमे तत्संबन्धस्यापि तद्बुद्ध्यारोहोऽवश्याश्रयणीयः। अन्यथा घटस्य रूपविशिष्टत्वात् पटस्य त्वविशिष्टत्वात् एकत्र निवेशानुपपत्तिः। न च 'घटपटौ' इत्यत्र विशिष्टत्वम्; द्वित्वविरोधात्। अत एवाविरलनाना-ज्ञानानामपि विशिष्टतानिरास इति।

मैवम्। 'शुक्लां गाम्' इत्युक्ते प्रत्यक्षेण विशिष्टपदार्थस्य सिद्धत्वं प्रतीयते। तद्वाक्यात् शुक्लत्वादिविशिष्टो व्यक्तिविशेषः आनयनादिभिर्व्यवह्रियते च। कार्यान्वय्येव हि लक्षणम्। तत्संबन्धतदाश्रयावपि कार्यान्वयिनौ। यद्यपि तदाश्रयवन्न सर्वेषां संबन्धप्रतीतिः, तथापि पृथक्पदार्थयोः संबन्धव्यतिरेकेण सहस्थित्यनुपपत्तेरित्यादियुक्तिसिद्धः संबन्धः। आश्रयव्यतिरेकेण रूपस्पर्शादि-श्चक्षुःस्पर्शनादिभिरुपलभ्यते। अतो न गुणानां द्रव्याणां वापलापः। दण्डिकुण्डल्यादौ संयोगश्च प्रत्यक्षसिद्धः। अतो विशेषणविशेष्यतत्संबन्धैरेव विशिष्टत्वप्रतीतेस्तेषामेव विशिष्टत्वम्। न च प्रत्येकं विशिष्टतापातः; मिलितानामेव विशिष्टत्वात्।

न च तत्रापि प्रत्येकं विशिष्टता; मेलकश्चाधिक इति—मेलकस्य विशिष्टस्य निमित्तत्वात् तस्य विशिष्टत्वानन्तर्भावात्। मेलकस्य च न सर्वत्र;

---

1. धर्मधर्मिभावापलापिनां बौद्धानामाक्षेपः—नन्वित्यादिना।

नित्यात्मगुणादौ तदनपेक्षत्वात् । दण्डपादयो हि तदपेक्षाः । अन्यतरक्रियाभिमेलनं यत्र, तत्रैकबुद्धिविषयतार्हाणां पदार्थानामन्योन्यसापेक्षत्वरूपं मिलितत्वम् ।

न च तत् तेभ्योऽर्थान्तरम्; स्वरूपानतिरेकात् । तच्च लोकसिद्धम् । विशिष्टत्वधीविषयत्वे तेषां सापेक्षत्वं च । यौगपद्यात्तत्र विरामाप्रतीतेः सापेक्षता सिद्धा च । प्रत्येकं तेषु विशिष्टत्वबुद्ध्यनुदयादनुभूतिरेव विषयसत्त्वे शरणम् ।

ननु 'घटपटौ'इत्युक्ते एकबुद्धिविषयार्हत्वात् तयोरपि विशिष्टत्वमिति—सत्यम्; तत्रापि तदस्त्येव । यद्यपि "चार्थे द्वन्द्वः" इति चार्थमात्रे द्वन्द्वप्रतीतिः, तथापि इतरेतरयोगसमाहारौ विषयः, तयोरेव सामर्थ्यात् । "समर्थः पदविधिः" इति हि स्मृतिः । सामर्थ्यं चान्वय एव । समुच्चयान्वाचययोः पृथक्त्वसापेक्षत्वान्नान्वयः । केनचिद्धि किंचित् समुच्चीयते । सामर्थ्यहेतुभूतान्वयो गुणप्रधानयोरेव; गुणानामिव प्रधानयोरसंबन्धात् । संबन्धश्चार्थत उच्चारणतो वास्तु; उभयथाप्यन्वयसिद्धेः । ततश्चान्वितार्थपरे 'घटपटौ' इति अन्वितबोध च विशिष्टतासिद्धिः ।

न च घटत्वादिविशिष्टत्वात् द्विवचनाच्च न विशिष्टैक्यमिति—द्वित्वादिविशेषणानामुभयापेक्षत्वेन देशाद्युपाधितस्तद्विशिष्टैक्यसिद्धेः । न हि द्वित्वादिरेकस्य विशेषणम् । इतरेतरयोगे हि द्वन्द्वः । इतरेतरयुक्तत्वाकारेणोभयोः प्रधानतापि । कारकयोरितरक्रियान्वयानपेक्षं समस्तयोः क्रियान्वयसाहित्यं ययोः, तयोः प्रतीतिविषयत्वं वा यौगपद्यम् । आर्थं तु सहत्वम् । अत एव हि युगपदधिकरणवचनता[1] द्वन्द्वस्योक्ता । धवौ च खदिरौ चेति इतरयुक्तधवादौ हि द्वित्वोत्पत्तिरेकत्वोक्तिश्च । महाभाष्ये चैतत् स्पष्टीकृतम् । मीमांसकैरपि षष्ठलक्षणे धवश्च खदिरश्चेति पक्षेऽपीतरेतरयोगोऽपेक्षितः । इतरेतरयुक्तत्वाकारेणोभयोः पृथग्वाच्यत्वेऽपि न विशिष्टान्यत्वम्; तन्त्रोच्चारणादुभयोरेकबुद्धिविषयत्वार्हत्वात् । अन्योन्यसापेक्षविषयत्वादेकशेषित्वेन वान्वयाच्च । 'धवखदिरौ पश्य' इत्यादौ तयोः पश्यतिकर्मत्वेन प्रधानतयान्वयेऽपि न विशिष्टत्वाभेदः; एकवाक्यान्तर्भावात्;

---

1. युगपदधिकरणेति । युगपदेकैकेन पदेन अधिकरणमभिधेयं द्वन्द्ववाच्यं समुदायरूपं यदोच्यते तदा द्वन्द्व इत्यर्थः । अत्र चानुभवसिद्धं प्रमाणम् "द्यावा चिदस्मै पृथिवी संनमेते" इति श्रुतिवाक्यमवधेयम् । तत्र हि द्योशब्दो द्यावापृथिव्योर्वर्तते । एवं पृथिवीशब्दोऽपि द्यावापृथिव्योर्वर्तते । उभयत्रापि प्रथमाद्विवचनस्य सुपां सुलुगित्यादिना पूर्वसवर्णदीर्घः ।

युगपत्पश्यतिकर्मत्वार्हत्वाच्च । एवमितरेतरसापेक्षत्वे च तत्रापि विशिष्टता सिद्धा । अन्यसापेक्षतैव हि स्वरूपतो विषयतो विशिष्टतो वा विशेषण-विशेष्यस्वरूपेऽन्योन्यसापेक्षत्वाच्च संस्थानसंस्थानिनोर्दृश्यते । न तर्हि निरपेक्षयोर्विषयत्वे तथा; विशेषणत्वेन विशेष्यत्वेनोभयोः सापेक्षत्वात् । संबन्धस्तूभयत्र नान्तरीयकः । विशिष्टधीस्तु सर्वसापेक्षैव । अत एकबुद्धिविषयत्वार्हपदार्थानामन्योन्यसापेक्षस्वरूपत्वमन्योन्यसापेक्षविषयत्वं वा विशिष्टत्वम् । भिन्नेन्द्रियग्राह्यरूपरसादिविशिष्टत्वस्यैकबुद्धिविषयत्वं स्मृतिद्वारा भिन्नबुद्धिबोध्यानां वर्णानां पदानामिवास्तु ।

यद्यपि दण्डदण्डिनोरन्योन्यनिरपेक्षत्वं स्वरूपे; तथापि दण्डित्वस्वरूपे सापेक्षमेव । उपलक्षणातिरिक्तव्यावर्तकधर्मसंबन्धित्वं वा विशिष्टत्वम् । तत्रापि न तत्त्रितयातिरिक्तता विशिष्टत्वस्य, अप्रतीतेरेव । तत्संबन्धित्वस्य तद्धर्मसंबन्धाधीनत्वात् विषयत्वादौ धर्मसंबन्धयोरपि तत्रान्तर्भावः ।

विशिष्टार्थानङ्गीकारे च प्रतीतिव्यवहारविरोधः । किंचिद्विशिष्टपदार्थं खण्डयतापि विशिष्टार्थपरत्वेन प्रश्नादिवाक्यं प्रयुज्य परोक्त्यादिवाक्याद्वि-शिष्टार्थमवगम्यैव विशिष्टत्वखण्डनात्; तद्व्यतिरेकेण परप्रत्यायनस्याशक्यत्वात् । वाक्यं चानेकपदात्मकमनेकार्थविशिष्टार्थपरमेव । विशिष्टार्थबोधनपरत्वाभावे च वाक्यप्रयोगवैयर्थ्यं प्रश्नादौ । अतो विशिष्टत्वखण्डनस्य स्वव्याघातत्वान्नोत्तरार्हता । तथापि मृदुहृदयभ्रान्तिनिरासाय तस्य विशिष्टत्वस्य खण्डनानर्हतापि प्रदर्शितेत्यलं कोलाहलेन ।

' प्रकृतमनुसरामः । उल्लेखितानुवृत्त्यादिधर्मकानेकविशेषणविशिष्टतया साक्षाद्वस्तुव्यवच्छेदकं ज्ञानं सविकल्पकम् । उल्लेखितेत्यादिपदान्निर्विकल्पकव्या-वृत्तिः । तच्च द्विविधम्—योगिप्रत्यक्षमयोगिप्रत्यक्षं चेति । तत्र योगिप्रत्यक्षमिन्द्रियाद्यनपेक्षमर्थावच्छेदकं साक्षाज्ज्ञानम् । इन्द्रियाद्यनपेक्षमिति अयोगिप्रत्यक्षव्यवच्छेदः ।

ननु न योगिप्रत्यक्षाङ्गीकारः; शास्त्रयोन्यधिकरणभाष्येऽपि "योगजन्यम्" इत्यादौ योगिज्ञानस्य स्मृतित्वोक्तेः—तन्न । प्राभाकरमता-वलम्बनेन तथोक्तत्वात् । अत एव हि "स्मृत्यनवकाश" इत्यत्र "स्वयोगम-हिमसाक्षात्कृत" इत्यादिभाष्ये तदङ्गीकारः । परमात्ममुक्तप्रत्यक्षस्यापि योगिप्रत्यक्ष एवान्तर्भावः; तस्यापीन्द्रियाद्यनपेक्षत्वसाम्यात् । अत एव

ह्यन्तर्याम्यधिकरणे "न च परस्यात्मनः करणायत्तं द्रष्टृत्वादिकम्" इत्युक्तिः ।

तथा श्रीगीताभाष्ये "न मे विदुः सुरगणाः" "आहुस्त्वामृषयः" इत्यत्र च "सुरगणा महर्षयश्चातीन्द्रियार्थदर्शिनः" "महर्षयश्च सर्वेऽतीन्द्रिय-परावरतत्त्वविदः" इति । योगिनामतीन्द्रियार्थदर्शित्वादिन्द्रियाद्यनपेक्षता सिद्धा ।

ननु संसारिणां योगित्वेऽपि न सर्वसाक्षात्कारसामर्थ्यम् । यत एवमुक्तं "न मे विदुः" इत्यत्र—"देवत्वदेवर्षित्वादिहेतुभूतपुण्यानुगुणं मया दत्तं ज्ञानं परिमितम्" इति । परमात्मादेः प्रत्यक्षं तु सर्वसाक्षात्कारीति न योगिप्रत्यक्षसाम्यमिति—तन्न । तारतम्यमात्रात् प्रधानभेदे तारतम्यस्य सर्वत्र सुलभत्वादतिप्रसक्तेः । अत इन्द्रियाद्यनपेक्षत्वरूपोपाध्यैक्यात् परमात्मादि-प्रत्यक्षस्यापि योगिप्रत्यक्षान्तर्भाव एव । इन्द्रियाद्यपेक्षत्वे देशादिविप्रकृष्टार्था-वच्छेदकत्वमसिद्धम् । योगिप्रत्यक्षं तु सविकल्पकमेव; विषयग्रहणे विलम्बाभावात् । इन्द्रियद्वारैव ज्ञानप्रसरापेक्षायां हि संस्थानादेरनुवृत्त-त्वाद्यप्रतीतिः । सहकारिवैकल्याद्धि तत्र तथा । योगिनां तु ज्ञानस्य यावद्देशसंबन्धः तद्देशस्थसर्वपदार्थानां सगुणानामेवावच्छेदकत्वम् । परमात्मा-द्यनुग्रहस्तु न योगिप्रत्यक्ष एव । किन्तु सर्वत्र । संसारिणां तु युक्तावस्थायामेवाती-न्द्रियार्थावच्छेदकत्वम् । अन्यदेन्द्रियादिसापेक्षमेव । परमात्मा मुक्ताश्च सर्वदा अतीन्द्रियार्थज्ञानाः । तेषां शरीरेन्द्रियादिग्रहणं तु लीलामात्रम् । तदेन्द्रिया-दिद्वाराप्यर्थावच्छेदकता ज्ञानस्य । परमात्मा मुक्ताश्च सर्वज्ञा इति "यः सर्वज्ञः" "सर्वं ह पश्यः पश्यति" इत्यादिश्रुतिसिद्धम् । परमात्मादेश्च योगिशब्दादि-वाच्यता तत्र तत्र दृश्यते[1] । ज्ञानशक्त्यादियोगित्वमपि योगिशब्दप्रवृत्तिनिमित्तं परमात्मनः । नित्यमुक्तानां च स्वभावादेव तद्योगित्वम् । मुक्तानां तु मुक्त्युत्तरकालं तदाविष्कारः । संसारियोगिनां तु पुण्यतारतम्यात् तदाविष्कारतारम्यमिति वैषम्यम् । एतच्च भाष्यादौ स्पष्टम् ।

"आत्मप्रयत्नसापेक्ष" इत्यादि लक्षणं तु योगिविशेषपरम्; एतच्छ्लोकोक्त-लक्षणविरहिणामप्यतीन्द्रियार्थदर्शित्वस्मरणात् । सिद्धार्थव्युत्पत्त्या तत्स्मृतीनां तत्परत्वेन प्रामाण्यमप्युपपन्नम् । पुरोदेशादिसंबद्धपदार्थानामिन्द्रियाणां च संनिकर्षविशेषसापेक्षं साक्षादवच्छेदकं ज्ञानमयोगिप्रत्यक्षम् । तत्र

---

1. "योगी योगीशः" इति सहस्रनामपाठोऽत्रानुसंधेयः ।

पुरोदेशादिवर्तिवस्तुसंबन्धादेव घ्राणरसनश्रोत्रैः क्रमेण गन्धरसशब्दानां ग्रहणमिति ।

नन्वाश्रयाश्रयिभावस्वीकारे शब्दान्तरान्निराकृतोऽपि समवाय एव स्वीकृत इति—तन्न ; एतत्संबन्धस्य लोकसिद्धत्वात् ; समवायस्य दुर्निरूपत्वाच्च । जलपृथिव्यादौ ह्याधाराधेयभावसंबन्धः स्फुटः । स च न संयोगः; समवेतयोर्युद्धे संनिपातात् संयोगेऽप्याधाराधेयत्वदर्शनात् । न च संयोगस्य स्वभाववैरूप्यकल्पना युक्ता । अतस्तत्संबन्धात् वस्तुत उपाधितो वाधाराधेयभावो वस्त्वन्तरमेव । एवं च कल्पनालाघवम् । स च गुणादिभेदादनेकः ।

न च संबन्धसंबन्धिनोः संबन्धान्तरकल्पनायामनवस्था; अन्योन्यसापेक्षस्वरूपत्वरूपोपाधिव्यतिरेकेणार्थान्तराभावात् ।

एतेन विशेषणविशेषसंबन्धादयो व्याख्याताः । अत आश्रयाश्रयिभावसंबन्धस्य न गुणान्तर्भावः; गुणस्य गुणाश्रयत्वानुपपत्तेः । गुणादिघटकत्वादेव ह्येतत्संबन्धस्वीकारः । न च पदार्थान्तरत्वम्; समवायपदार्थदोषापातात् । अत औपाधिकत्वमेवेति सर्वं निरवद्यम् ।

मिथ्यावादिभिस्तु प्रमासाधनं प्रमाणमिति सामान्यलक्षणमुक्त्वा, तत् तत्त्वातत्त्वावेदकभेदात् द्विविधम्; प्रमात्रादिभेदोपादानोपमर्देनोत्पद्यमानं तत्त्वावेदकं तत्त्वमस्यादिमहावाक्यज्ञानम् । प्रमात्रादिप्रपञ्चकारणानुपमर्दकमतत्त्वावेदकमित्युक्तम्—तन्न ; सर्वप्रमाणानां यथार्थत्वेन तत्त्वातत्त्वविभागासंभवात् ; प्रमात्रादिभेदोपादानोपमर्दस्यादर्शनाच्च । "तत्त्वमसि" इति वाक्यजन्यज्ञानमपि [1]एवमेव । किंचैतत् जायमानमेव प्रमात्रादि प्रमृद्नाति ? उत जातं वा ?—नाद्यः; जायमानस्यैवोपादानादिकारणविनाशकत्वेनोत्पत्त्यनुपपत्तेः । तथात्वे न हि सत्ता । असतश्च कथं विनाशकत्वम् ? विनाशकत्वेऽपि निरालम्बनं स्यात् । नापि द्वितीयः, प्रमात्रादिभेदोपमर्देनोत्पद्यमानमिति स्वोक्तिविरोधात् ।

"तत्त्वमसि" इत्यादि वाक्यं जगत्कारणजीवादिविशिष्टपरमात्मपरत्वेन प्रपञ्चसत्त्वसाधकत्वान्न प्रपञ्चोपमर्दकमिति भाष्यादावुक्तम् । किंच महावाक्यजन्यज्ञानं ब्रह्म विषयीकृत्य प्रपञ्चनिवर्तकम्; उत न ? । आद्ये ब्रह्मणो दृश्यत्वेन[2]

---

1. एवमेवेति । प्रमात्रादिभेदानुपमर्देनैव जायमानमित्यर्थः ।

2. प्रपञ्चो मिथ्या, दृश्यत्वादित्यादौ दृश्यत्वस्य मिथ्यात्वसाधकत्वेन तदभिमतत्वादित्यर्थः ।

मिथ्यात्वम् । द्वितीये तु न प्रपञ्चनिवृत्तिः; अधिष्ठानाग्रहणात् । तद्ग्रहणादेव हि रज्जुसर्पादौ भ्रमनिवृत्तिः । अतत्त्वावेदकं तु नैव प्रमाणम्; रज्जुसर्पादिज्ञानसाम्यादकार्यकरत्वात् । न च व्यावहारिककार्यकरता; रज्जुसर्पादौ व्यवहारभङ्गदर्शनात् । न च रज्जुसर्पादौ भयादिकार्यं दृश्यत इति; भयरूपप्रतीतिमात्रस्यातत्कार्यत्वात्; किंतु प्रसर्पणदंशादेरपि तत्कार्यत्वात् । न हि तत् रज्जुसर्पादौ । तत्कार्यत्वे च नातत्त्वावेदकत्वम् ।

यत्तु अर्थेन्द्रियसंप्रयोगात् संप्रयुक्तेऽर्थे विज्ञानं प्रत्यक्षम्; अर्थेन्द्रियसंप्रयोगग्रहणात् तदसंप्रयोगजशुक्तिकारजतादिप्रतीतिनिरास इत्युक्तम्—तदप्यसत्; इन्द्रियसंप्रयोगाभावे भ्रान्तिज्ञानस्य निरालम्बनत्वापत्तेः । अपसिद्धान्तश्च; शुक्तिकादावनिर्वाच्यरजतसत्ताया एव तत्सिद्धान्तत्वात् । एतत्संभवे कथमेतत्प्रयुक्तेऽसंप्रयोगजत्वम्? शुक्तिकारजतादावपि परमार्थख्यातित्वं साधितम् ।

किंच पृथिव्याद्यर्थस्य शुक्तिकारजतसाम्याभ्युपगतेरर्थग्रहणेऽपि निरालम्बनत्वम् । अतो विज्ञानस्कन्धमात्रवादियोगाचारमतसाम्यमेव; सर्ववस्तूनां प्रतिभासमात्रस्वरूपत्वेनावास्तवत्वाभिमानात् । अतो मायावादिनां वेदान्तिन इति स्वगोष्ठीवादमात्रमेव विशेषः । वस्तुतस्तु माहायानिकपक्षान्न विशेष इत्यलं प्रच्छन्नबौद्धमतनिरासेनेति ।

इति
प्रत्यक्षनिरूपणम्

## अनुमाननिरूपणम्

गृहीतान्वययोर्व्याप्यदर्शनात् परोक्षव्यापकावच्छेदकज्ञानमनुमानम्[1] । सामान्यलक्षणोक्त प्रमाणान्तरानपेक्षमिति सर्वत्रान्वेति । गृहीतान्वयेत्यादिपदैः प्रत्यक्षादिव्यवच्छेदः । अन्वयश्चानौपाधिकः संबन्धः ।

[2]साधनाव्यापकत्वे सति साध्यव्यापक उपाधिः । यद्धि परस्य साध्यतयाभिमतं तदुपाधित्वेनाभिमतहेतुना व्याप्तम् । परप्रयुक्तहेतव्यापकश्च हेतुरुपाधिः । यथा—'अनुभूतिर्नानुभाव्या; अनुभाव्या चेज्जडत्वप्रसङ्गः, घटवत्' इति; 'अनुभूतिः स्वत एव सिध्यति, अनुभूतित्वात्; यदन्यतः सिध्यति न तदनुभूतिः; यथा घटः' इति वा परोक्तेऽनुमाने, घटादेर्जडत्वं नानुभाव्यत्वप्रयुक्तम्; किंतु स्वसत्तयैव स्वाश्रयं प्रत्यप्रकाशमानत्वप्रयुक्तमित्युपधिः ।

ननु नास्योपाधित्वम्; परप्रयुक्तस्यान्यतः सिद्धत्वहेतोः स्वसत्तयैव स्वाश्रयं प्रत्यप्रकाशमानत्वव्याप्तत्वात् । अन्यतः सिद्धिर्नाम दृश्यधीनप्रकाशत्वम् । अनुभूतेरनुभाव्यत्वे स्वसत्तयैव स्वाश्रयं प्रत्यप्रकाशमानत्वप्रसङ्गो घटवदिति वक्तुं शक्यत्वादिति—तन्न; तयोरनन्वयात् । अन्वयोऽनौपाधिकः संबन्ध इत्युक्तम् । अत्र तु तयोः संबन्धे जडत्वमेवोपाधिः ।

नन्वेवं तर्हि साधनाव्यापकत्वे सत्युपाधित्वम्, उपाधित्वे सति साधनाव्यापकत्वमितीतरेतराश्रयतेति—तन्न; जडत्वस्यान्यतः सिद्धत्वव्यापकत्वे स्वसत्तयैव स्वाश्रयाप्रकाशमानत्वस्यान्यतः सिद्धत्वपरत्वेनानुपाधित्वम्, एतत्सिद्धौ तत्सिद्धिरिति दोषस्य पक्षान्तरेऽपि समत्वात् व्याप्त्यग्रहात् । किंतु स्वसत्तयैव स्वाश्रयाप्रकाशमानत्वजडत्वयोः परस्परव्यापकत्वेनान्योन्योपा-

---

1. "ज्ञातसंबन्धनियमस्यैकदेशस्य दर्शनात् ।
एकदेशान्तरे बुद्धिरनुमानमबाधिते ॥"

इति शालिकनाथोक्तानुमानलक्षणस्यार्थतोऽयमनुवादः । गृहीतान्वयेत्यनेन ज्ञातसंबन्धनियमस्येत्यस्य, व्याप्यदर्शनादित्यनेन एकदेशस्य दर्शनादित्यस्य, परोक्षव्यापकावच्छेदज्ञानमित्यनेन एकदेशान्तरे बुद्धिरित्यस्य चानुवादो ज्ञेयः ।

2. इदं च न्यायकुसुमाञ्जलावुक्तं लक्षणम् ।

धित्वम् । अन्यतः सिद्धत्वस्य पूर्वोक्तोपाधिप्रयुक्तव्याप्त्युपजीवित्वादन्यतः सिद्धत्वजडत्वयोर्नान्वयनियमः । अत एव हि स्वातीतानुभूतिपरानुभूत्योरन्यतः सिद्धत्वम् । परानुभूतेरनुमानासिद्धौ शाब्दव्यवहारोच्छेद इत्यन्यत्रोक्तम् । परप्रयुक्तव्याप्त्युपजीविनोऽप्यन्यतः सिद्धत्वादेर्जडत्वादिसंबन्धोऽत एव नादरणीयः । तदुक्तम्—

> [1]"अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः ।
> तैर्दृष्टैरपि नैवेष्टा व्यापकांशावधारणा ॥"

इति ।

साध्यनियतस्वसंबन्धः साध्यसमव्याप्तो हेतुरुपाधिः । स्फटिकरक्तताया जपाकुसुमसंनिध्युपाधित इवेत्यर्थः ।

न च जडत्वस्योपाधित्वे साध्यस्यैवोपाधित्वात् सर्वानुमानोच्छेद इति—सर्वत्र परस्परव्याप्त्यभावात् । अतो यत्र साध्यसाधनयोः परस्परव्याप्तिः, तत्र परस्परमुपाधिः । यत्र परस्परव्यापकत्वाभावः तत्र साधनतया प्रयुक्तस्य साध्यान्वयनियतौ उपाधिता, न साध्यस्येति । अयमर्थः—एकसाध्यं प्रति समाविनाभावन्यूनाविनाभावहेतुद्वयसद्भावे न्यूनस्य समाविनाभावहेत्वव्याप्तौ न्यूनोऽप्रयोजकः । तदुक्तम्—

> "समासमाविनाभावावेकत्र स्तो यदा तदा ।
> समेन यदि नो व्याप्तस्तदा हीनोऽप्रयोजकः ॥"

इति ।

समाविनाभावस्तु प्रयोजकः; स एवोपाधिरिति । स्वसत्तयैव स्वाश्रयाप्रकाशमानत्वजडत्वयोश्च परस्परव्यापकता स्पष्टा । अन्यतः सिद्धभावस्य जडभावानुविधायित्वान्न्यूनता च सिद्धा । अन्यतः सिद्धत्वमजडाया अनुभूतेरस्तीत्युक्तम् । अन्यत्तु अक्षपादीयग्रन्थेषु द्रष्टव्यमित्युपरम्यते ।

यत्तु—साध्यव्यापके पक्षेतरत्वेऽपि प्रसङ्गात् तद्व्यतिरिक्त इति ; तन्न ; बाधा नास्तीति तस्या व्यापनात् ; अन्यथा निरुपाधित्वे बाधासिद्धेः ।

---

1. इदं च श्लोकवार्तिकस्थं वचनं कुसुमाञ्जलावप्युदाहृतम् । अयमत्र श्लोकार्थः—अन्ये ये सोपाधिका हेतवः, ते परप्रयुक्तानामुपाधिप्रयुक्तानां व्याप्तीनामुपजीवकाः । तैः सोपाधिभिः हेतुभिः पक्षे निश्चितदृष्टैरपि व्यापकांशावधारणा साध्यानुमितिर्न सिध्यतीति ।

यदाह 'बाधेन वोन्नीयते, अन्येन वेति न कश्चिद्विशेषः' इति । एतदर्थमपि विशेषणीयमिति चेत्—न । तथापि साधनाव्यापकत्वे सतीति तद्व्याप्त्यनवधारणे न शक्यावधारणत्वम् । एवं साध्यव्यापक इत्यपीत्युपाधिलक्षणखण्डनम् ।

तदसत् ; आबालगोपालं प्रसिद्धानुमानोच्छेदप्रसङ्गात् ; तथाच शाब्दव्युत्पत्त्यभावापत्तौ शाब्दव्यवहारोच्छेदात् खण्डनग्रन्थप्रवृत्तिवैफल्यात् तत्सरणीमनुसरतां च मूकीभावापत्तेश्च । किंच दण्डोद्यमनादौ तिर्यक्ष्वपि द्रवणादिदर्शनात् तेषामप्यनुमानज्ञानसद्भावधीः । किंच पक्षेतरत्वसाध्ययोर्नान्योन्यव्यापकतापि ; धूमादिदर्शनादग्न्याद्यनुमाने महाह्रदादेः पक्षेतरत्वेऽप्यग्न्यनन्वयदर्शनात् । न च पक्षेतरत्वं नाम सपक्षत्वम् ; न च तत्र तदुपाधिरिति—साध्येन समानसपक्षधर्मानुमानतः साध्यसिद्धेरर्थसिद्धत्वेनोपाध्युक्तिवैफल्यात् । बाधे विपक्षव्यापिपक्षेतरत्वस्योपाधित्वाविशेषात् पक्षेतरशब्दस्य सपक्षपरत्वाभावात् । तर्हि सपक्षत्वमुपाधिरिति चेन्न ; पक्षगतत्वेनोन्नीयमानोपाधेर्नोपाधिलक्षणवत्तेति तत्रापि साधनव्यापकत्वादेरुन्नीयमानत्वात् । न हि प्रत्यक्षेणैव तन्निर्धारणनियमः; कल्पनारूपार्थापत्तेरपि प्रमाणत्वात् ।

न च साधनाव्यापकत्वसाध्यव्यापकत्वयोर्नाशक्यावधारणीयत्वम् ; प्रत्यक्षादिना साहचर्यग्रहणादिना तदवधारणसिद्धेः । न च सर्वदेशादौ तत्साहचर्यादेर्ग्रहणाशक्यता ; देशाद्यनपेक्षाया वक्ष्यमाणत्वात् व्याप्यत्वावधारणादेव तदवधारणसिद्धेः । न च व्याप्यत्वावधारणमेवाशक्यम्, उपाधिसत्ताशङ्काग्रस्तत्वादिति—भूयो दर्शनात् तच्छङ्काया अपनीयमानत्वात् । एवं खण्डनोक्तिनिरास उन्नेयः ।

न च भूयोदर्शनावसेयमेव तदवधारणम् ; न तु तत उपाधिशङ्कानिरास इति—ज्ञानानां स्वतः प्रामाण्यस्य साधितत्वात् प्रथमस्यापि तद्ग्रहणस्य प्रमाणत्वात् । प्रमाणस्य प्रमेयावच्छेदरूपत्वात् व्याप्यत्वावच्छेदस्यापि सकृद्दर्शनाधीनत्वात् । अन्यत एव हि शङ्का बाधो वा । शङ्कायां वा बाधायां वा न प्रामाण्यम् । व्याप्तिकर्म हि व्याप्यम् । तच्च देशतः कालतो वा न्यूनधर्मः । व्यापकहेतुसाध्ययोरप्यापेक्षव्याप्यत्वसद्भावान्नाव्याप्तिः । परस्परव्यापकयोरपेक्ष्यान्यतरादर्शनेऽन्यतरदर्शने च साध्यत्वसाधनत्वव्यत्ययो हि दृश्यते । यथा कृत्तिकोदयाद्रोहिण्यासत्त्यनुमानम् । यथा आसन्नोदयरोहिणीदर्शनात्

कृतिकास्तमयानुमानं च । व्याप्यत्वावगतिश्च वस्तुनो यत्प्रमाणेन यत्संबन्ध-विशिष्टतयावगतिः, तत्प्रमाणादेव तत्संबन्ध्यन्तरसंबन्धव्याप्यताधीरपि । देशाद्यवच्छेदोऽपि न संबन्धस्य; धर्मत्वेन धर्मान्तरविशेष्यत्वानुपपत्तेः तद्विशेष्यत्वे धर्मनिरूप्यधर्मिणो न प्रत्यभिज्ञा; धर्मस्यापि धर्मित्वेन स्वतन्त्रत्वात् । यदा तु देशादिना धर्म्यवच्छेदे धर्मस्याप्यन्तर्भावः, तदा अग्न्यादिव्याप्यता धूमादेः सिद्धा; सकृद्दर्शनादेव देशकालादेरनन्वयात् । तदन्वये च तद्विशेषविशिष्टस्यैव व्याप्यता स्यात्; न तु सर्वदेशानुगतस्य ।

ननु तथाप्यग्न्याद्याकृतिकव्यक्तिभेदसंयोगादिसंबन्धवद्धूमाद्याकृतिकव्यक्ति-भेदमात्रस्यैव दृष्टत्वात् तत्संबन्धवद्व्यक्त्यन्तरस्य चादृष्टत्वात् न व्याप्यत्वग्रह इति—तन्न; व्यक्तिभेदस्यैव तदोपाधित्वात्; तस्य च व्यक्त्यन्तरदर्शन-निरस्यत्वात् ।

अथ तत्राप्युपाधिशङ्का; न; अग्नित्वधूमत्वविशिष्टत्वाकारेण सर्वानुगत-व्याप्यत्वग्रहस्य सुशकत्वात् । एवंच तर्कान्मानात् व्याप्यत्वग्रहे च लक्षणीयत्वम् ।

ननु धूमत्वादिविशिष्टत्वाकारेण सर्वतद्व्यक्तिप्रतीतौ अग्नित्वादिविशिष्ट-तद्व्यक्तेरपि तदविशेषात् प्रमितिविषयत्वेन नानुमानप्रामाण्यम्—तन्न; अधिगतार्थविषयस्याप्रामाण्यानङ्गीकारात् । तत्प्रतीतेः संस्कारमात्रजत्वाभावात् न च स्मृतित्वम् ।

ननु धूमासंबद्धस्याप्यग्नेर्दर्शनान्न तद्व्याप्यता धूमादेरिति—तन्न; अग्नेर्धूमव्यभिचारित्वेऽपि धूमस्य तदव्यभिचारात् । अतः संबन्धः सकृद्दर्शनगम्यः । औपाधिकशङ्कानिरासस्तु असकृद्दर्शनादस्तु ।

न च भूयोदर्शनसंस्कारसचिवं मनो बहिरर्थव्याप्तिग्रहे प्रमाणम्; तस्य केवलस्य बाह्यार्थग्रहेऽप्रामाण्यात् । न च बहुशोऽग्नौ सत्येव धूमदर्श-नात् असति चादर्शनात् तस्य च व्याप्तिं विना अनुपपन्नत्वात् अर्थापत्तिस्तत्र प्रमाणमिति—तदन्वयव्यतिरेकस्य दृष्टाग्निसंबन्धमात्रादप्युपपत्तेः प्रक्षीणत्वा-दर्थापत्तेः । अतो यत्प्रमाणादेव विशिष्टत्वावगमः, तत्प्रमाणादेव व्याप्यत्वा-वगतिरपि ।

तत् द्विविधम्—साक्षात् परंपरया वेति । धूमादिनाग्न्याद्यवच्छेदकं ज्ञानमाद्यस्योदाहरणम् । द्वितीयस्य स्फोटादिकार्यादवगतत्वेन तत्र शक्त्याद्य-वस्त्ववच्छेदकं ज्ञानम् ।

तत् पुनस्त्रिविधम्—कारणानुमानं कार्यानुमानम्, अनुभयानुमानमिति। विशिष्टपूरादिदर्शनात् वृष्ट्याद्यवच्छेदकं ज्ञानं कारणानुमानम्। विशिष्टमेघादिदर्शनात् वृष्ट्यागमज्ञानं कार्यानुमानम्। कृत्तिकोदयाद्रोहिण्याद्यासत्त्यवच्छेदकं ज्ञानमनुभयानुमानम्[1]।

किंच अन्वयव्यतिरेकी, केवलान्वयी, केवलव्यतिरेकी चेति त्रिविधम्। तत्राद्यः पक्षसपक्षान्वयी सपक्षैकदेशान्वयी वा विशिष्टसपक्षाद्व्यावृत्ताबाधितविषयोऽसत्प्रतिपक्षश्च। पक्षस्तु सिषाधयिषितधर्मवान् धर्मी। धर्मस्य सिद्धत्वे तु न पक्षतेत्युक्तम्। पक्षे सर्वत्रान्वयी नैकदेशी। एकदेशी व्यापकताभास इत्युक्तः। साध्यसमानधर्मवान् सपक्षः। तत्रान्वयी। तस्मात् व्यावृत्त्या आभास इत्यर्थादुक्तः। साध्यविरुद्धधर्मवान् विपक्षः। तस्मात् सर्वस्माद्व्यावृत्तः। तदव्यावृत्त्या आभासः। प्रमाणान्तराबाधितसाध्योऽबाधितविषयः। तद्बाधितत्वे त्वाभासः। अप्रतिसाधनोऽसत्प्रतिपक्षः। प्रतिसाधने आभासः। शून्यविपक्षवान् पूर्वोक्तलक्षणः केवलान्वयी। सपक्षशून्यः पूर्वोक्तलक्षणः केवलव्यतिरेकी।

स च सर्वः स्वार्थपरार्थभेदात् द्विविधः। तत्राद्यः स्पष्टः। इतरत्तु त्र्यवयववाक्यम्।

अवयवास्तु [2]प्रतिज्ञाहेतूदाहरणानि। तान्यवान्तरवाक्यानि। तत्र प्रसिद्धवस्तुनः साध्यधर्मवन्निर्देशः प्रतिज्ञा। प्रसिद्धपदाद्विशेषणाद्वा विशेष्याद्वा अप्रसिद्धस्याभासतोक्ता। साध्यधर्मवत्त्वपदात् धर्मिसाध्यस्याभासतोक्ता।

पक्षनिष्ठप्रसिद्धाव्यभिचारिलिङ्गनिर्देशो हेतुः। पक्षनिष्ठतावचनादपक्षनिष्ठस्याभासता। प्रसिद्धवचनादप्रसिद्धस्याभासता। अव्यभिचारिवचनात् व्यभिचारिण आभासता। व्यभिचारश्च द्विविधः—साधारणासाधरणभेदात्।

---

1. अत्र चेत्थं शालिकनाथो विशेषान्तरं वक्ति—ननु चन्द्रोदयात् समुद्रवृद्ध्यनुमाने, कृत्तिकोदयात् रोहिणीसंनिधानकल्पने च कथं समानाश्रयत्वम्? उच्यते—एककालवर्तित्वं चन्द्रोदयसमुद्रवृद्ध्योः। तत्र काल एक एव। तथा कृत्तिकोदयरोहिण्यासत्त्योरेकाहोरात्रवर्तित्वेन न दोष इति।

2. अत्र चायं ग्रन्थकारः प्राभाकरमतमनुसरति। यदाह शालिकनाथः—"अबाधित इति प्रतिज्ञा। ज्ञातसंबन्धनियमस्येति दृष्टान्तवचनम्। एकदेशदर्शनादिति हेत्वभिधानम्। तदेवं त्र्यवयवमनुमानम्" इति।

साधारणः [1]पक्षत्रयान्वयोऽनैकान्तिकः । असाधारणः सति सपक्षे पक्षमात्रान्वयः ।

अन्वयात् व्यतिरेकाच्च द्विविधमुदाहरणम् । प्रसिद्धसाध्यसाधनधर्मवद्दृष्टान्तनिर्देशोऽन्वय्युदाहरणम् । प्रसिद्धपदनिवेशात् अप्रसिद्धसाध्यसाधनवद्दृष्टान्तस्याभासता । साध्यसाधनधर्मवदित्युक्त्या साध्यसाधनधर्मविकलाश्रयहीनानामदृष्टान्तता । साध्यसाधनधर्मव्यावृत्तप्रसिद्धधर्मिनिर्देशो व्यतिरेक्युदाहरणम् । साध्येत्याद्युक्त्या साध्याव्यावृत्तसाधनाव्यावृत्ताप्रसिद्धाश्रयहीनानामनुदाहरणता ।

उपनयनिगमनाख्याववयवौ कैश्चिदुक्तौ । ते अनतिप्रयोजने अतिस्पष्टे च ।

अतः स्पष्टलक्षणराहित्ये पक्षादिवदाभासतोक्ता । तथाहि अप्रसिद्धविशेषणादयः पक्षाभासाः । ते च वस्तुतो हेतुदोषा एव । ते चासिद्ध्यन्तर्भूताः । तदुक्तं तज्ज्ञैः[2]—"व्याप्तस्य पक्षधर्मतया प्रतीतिः सिद्धिः । इयं च व्याप्तिपक्षधर्मतास्वरूपाणामन्यतमाप्रतीत्या भवन्ती यथासंख्यमन्यथासिद्धिराश्रयासिद्धिः स्वरूपासिद्धिरित्याख्यायते । मध्यमाप्याश्रयस्वरूपाप्रतीत्या तद्विशेषणपक्षत्वाप्रतीत्या चेति द्वयी । तत्र चरमा सिद्धसाधनमिति व्यवह्रियते" इति । तत्रान्यथासिद्धिर्हेत्वन्तरात् सिद्धिः । उपाधित्वाभिहितहेतुतः सिद्धिरन्यथासिद्धिरित्यर्थः । आश्रयस्वरूपासिद्धिराश्रयवस्तुनोऽसिद्धिः गगनकुसुमवत् स्वरूपाप्रतीत्या भवति । एवं सिषाधयिषितधर्मवत एव पक्षत्वात् धर्मवत्त्वसंदेह एव सिषाधयिषितत्वात् प्रतिपक्षिणोऽपि धर्मवत्त्वसिद्धावसंदेहात् अपक्षत्वे पक्षस्वरूपाप्रतीत्या दृश्यत इति तद्ग्रन्थसारार्थः । चक्रकानवस्थान्यान्योश्रयाश्च तर्करूपाः स्वरूपासिद्ध्यन्तर्भूताः ।

एवमनिश्चितपक्षवृत्तित्वादसिद्धो हेत्वाभास उक्तः । विरुद्धस्तु पक्षविपक्षयोरेव वर्तमानहेत्वाभासः । सव्यभिचारोऽनैकान्तिकाभासः । तत्स्वरूपमुक्तम् । प्रत्यक्षादिप्रमाणबाधितविषयः कालात्ययापदिष्टः । सप्रतिसधनः प्रकरणसमः । साधनविकलादयो दृष्टान्तदोषाः । एतत्सर्वं पूर्वोक्तलक्षणवाक्यादेव निरस्तम् । अन्यच्चान्यत्र द्रष्टव्यमित्युपरम्यते ।

---

1. पक्षत्रयेति । पक्षसपक्षविपक्षेत्यर्थः ।
2. उदयनाचार्यैः कुसुमाञ्जलावित्यर्थः ।

विवादाध्यासितमज्ञानं न ज्ञाननिवर्त्यं, ज्ञानविषयानावरणत्वात् । यद् ज्ञानविषयानावरणं न तज्ज्ञाननिवर्त्यं, यथा घटादि । ज्ञाननिवर्त्यमज्ञानं विषयावरणम्, यथा शुक्तिकाद्यज्ञानमित्यन्वयव्यतिरेकिण उदाहरणम् । स च सपक्षैकदेशवृत्तिः; ज्ञानानिवर्त्यकुड्यादीनां विषयावरणत्वदर्शनात् । न चास्य सपक्षाभासत्वम्; भाष्ये साधर्म्योदाहरणानुपादानादिति;—ज्ञानानिवर्त्यसाध्यधर्मि-घटादेर्विद्यमानत्वात् । भाष्येऽनुपादानं तु स्पष्टत्वात् । ज्ञाननिवर्त्याज्ञानस्य विषयावरणत्वस्यैव प्रदर्शनीयत्वाच्च व्यतिरेकिदृष्टान्तमात्रं प्रदर्शितम् ।

विवादाध्यासितमज्ञानं न ज्ञानमात्रब्रह्माश्रितम्; अज्ञानत्वात् । यथा शुक्तिकां रजतत्वेन गृह्णतोऽज्ञानम् । तद्धि ज्ञात्राश्रयमिति केवलान्वयिन उदाहरणम्; ज्ञानमात्रब्रह्माश्रितवस्त्वन्तराभावादविपक्षत्वात् ।

चिद्वस्तुप्रकृतिमहदादिश्च द्रव्यम्; गुणवत्त्वात्; यन्न द्रव्यं न तद् गुणवत्; यथा रूपरसादीति केवलव्यतिरेकिण उदाहरणम् । सर्वद्रव्याणां पक्षीकृतत्वेन सपक्षाभावात् । आदिशब्देन परमात्मा जीवास्तद्धर्मभूतज्ञानं च निर्दिष्टम् । अतः सर्वद्रव्यपक्षीकारः । दिक्कालयोरपृथग्द्रव्यत्वमुक्तमन्यत्र ।

> "ज्ञातसंबन्धनियमस्यैकदेशस्य दर्शनात् ।
> एकदेशान्तरे बुद्धिरनुमानमबाधिते ॥"

इति वृत्तिकारोक्तलक्षणं वास्तु । तद्विवरणं च पूर्वमीमांसाव्याख्यानेषु पञ्चिकादिषु[1] द्रष्टव्यम् ।

. तद्व्याख्यातृणां व्यतिरेकिदृष्टान्तः केवलव्यतिरेकी च नेष्टः । अस्मद्भाष्यकृतां तु तदुभयमपीष्टमेव; भाष्यदिषु तद्दर्शनात् ।

यत्तु तद्व्याख्यातृभिरुक्तं साधर्म्यदृष्टान्तादेव नियमसिद्धिरिति—तन्न; साधर्म्यदृष्टान्तमात्रान्नियत्यप्रतीतेः व्यातिरेकदृष्टान्तस्य विपक्षनिवृत्तेरपि वक्तव्यत्वात् ।

यत्तु विपक्षनिवृत्तेरभावरूपतया सपक्षेऽस्तित्वस्यैव नियतिहेतुता; न चानन्तविपक्षनिवृत्त्या नियमः सुग्रह इत्युक्तम्—तदपि न; साध्याभावरूप-

1. पञ्चिकादिष्विति । शालिकनाथीये प्रकरणपञ्चिकायामृजुविमलादौ चेत्यर्थः ।

कैवल्यानुवृत्तौ साधनाभावरूपकैवल्यस्य सपक्षनियतिनिश्चयहेतुत्वात् । न हि तदननुवृत्तौ तन्निश्चयः; सपक्षाणामप्यनन्तत्वात् विपक्षानन्त्यचोद्यसाम्याच्च ।

यदि धूमत्वाद्यतिरिक्ताकारेण सर्वव्यक्त्यन्वयस्य सुगमता, तदा केवलव्यतिरेकि च लोकेऽवश्यमङ्गीकार्यं व्युत्पत्त्यादौ । [1]लक्षणत एव हि गवादिव्युत्पत्तिः । सास्नादिमत्त्वं हि गवादेर्लक्षणम् । विप्रतिपन्नं प्रति तथैव साध्यं च । इयं गौः, सास्नादिमत्त्वात्; यद्गौर्न भवति, तत् सास्नादिमदपि न भवति; यथा महिषादीति प्रयोगात् । वैदिकार्थेषु तु वेदादेव धर्मासाधारण्यनिश्चय इति तत्र लक्षणवाक्येषु केवलव्यतिरेक्यभ्युपगमोऽपीति सर्वं सुस्थम् ।

इत्यनुमाननिरूपणम्

1. लक्षणत इति । श्रीमद्वेंकटनाथदेशिकैस्तु केवलव्यतिरेकी नाभ्युपगतः । तथाचाहुः—

"साध्याभावो विपक्षे कथमिव विदितस्तस्य साध्याप्रसिद्धे-
र्भावात्मन्यप्यमुष्मिन् प्रतिभटवपुषा ह्यत्र ते व्याप्तिसिद्धिः ।
इत्यज्ञातान्वयेऽस्मिन् कथमिव सुशकः स्यादभावो नियन्तुं
हेतौ सारोऽन्वयोऽतः क्वचिदनुपधिकः केवलान्वय्यपीष्टः ॥"

इति । केवलव्यतिरेक्यभ्युपगमे संप्रदायविरोधमप्याहुर्न्यायपरिशुद्धौ—"केवलव्यतिरेकि तु साधनदशामेव नासादयति, सपक्षान्वयविरहात्, असाधारणवत् इत्यादिना आत्मसिद्धौ भगवद्यामुनमुनिभिः प्रपञ्चितत्वात्" इति । स्वाचार्यवचनमपि निर्दिशति—"न च सिद्धान्तिनोऽयं प्रसङ्गः, केवलव्यतिरेकिप्रामाण्यानभ्युपगमात्" इति । लक्षणं च केवलव्यतिरेक्यनभ्युपगमेऽपि सुवचमिति तत्रैव प्रतिपादितम् ।

## शास्त्रनिरूपणम्

वैदिकशब्दजसंनिकृष्टार्थावच्छेदकं शास्त्रम् । तत्र वैदिकेत्युक्तेरवैदिकशब्दजन्यस्याशास्त्रार्थतोक्ता । शब्दजमित्युक्त्यानुमानोपमानादिव्यवच्छेदः । असंनिकृष्टोक्त्या प्रत्यक्षादिव्यवच्छेदः । ततश्चापौरुषेयग्रन्थसंदर्भान्तरार्थावच्छेदकज्ञानहेतुत्वात् तस्य वेदत्वव्यवहारः ।

काठकादिसमाख्या च प्रवचननिमित्तेति काठकादिसंज्ञया न तस्य पौरुषेयत्वम् । 'विश्वामित्रस्य सूक्तम्' इत्यादिभिः विश्वामित्रादिभिस्तज्जन्मभिस्तदधीयानैरपि तपोविशेषादपौरुषेयतदनुवाकादेर्दृष्टत्वनिमित्ता संज्ञा । काण्डर्षित्वमप्येवमेव । अत एव हि "ब्रह्म स्वयंभु" इत्यादिश्रुतिः । "अनन्ता वै वेदाः" इति चानन्त्यवचनं नावधिवैधुर्यमात्रात्; किंतु कालापरिच्छेदात् नित्यत्वादपि । एतेन वाक्यत्वात् तस्यानित्यत्वानुमानमपि निरस्तम् ।

"तस्य वा एतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदः" इत्यादौ उत्पत्त्युक्तिरपि महाप्रलयावसाने परमात्मनश्चतुर्मुखादिभ्यः प्रथमाध्यापनमात्रपरेत्युपपन्ना । अत एव हि "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति श्रुतिः । सर्वज्ञत्वादेव च पूर्वानुपूर्व्याविस्मरणात् तस्य तदध्यापकत्वमुपपन्नम् । आनुपूर्व्या अपुंप्रभवत्वत एव वेदस्य नित्यत्वमुक्तम् । अन्यत्र च "शब्दार्थसंबन्धश्चापौरुषेयः" इति । चतुर्विधपुरुषार्थतत्साधनाद्यावेदकत्वाद्वेदस्य वेदत्वम् । नित्यभगवच्छासनविधिनिषेधप्रचुरवेद्यवेदकमिति तदेव शास्त्रशब्दाभिधेयं ज्ञानम्[1] । अत एव हि "वेदशास्त्राविरोधिना" इत्युक्तिः । शब्दविशेषजन्यज्ञानादेव वस्त्ववच्छेदाद्ध्यानादिव्यवहाराच्च तज्ज्ञानस्यैव शास्त्रत्वम् । तज्जनकशब्दविशेषे तु तत्प्रयोग औपचारिक इत्युक्तम् ।

यत्तु कृत्स्नवेदस्य कार्यपरत्वात् कार्यस्य स्वसाधनापेक्षपर्यन्तत्वात् ज्ञानात् तत्प्रेरणाधीः शास्त्रमिति सर्वस्य तस्य प्रेरणापर्यन्तत्वमुक्तम्— तदसत्; कार्यवाक्यार्थवादिभिरपि शास्त्रमनिषिद्धस्वर्गादिसाधनफलपरमपीत्यभि-

---

1. अत एव "यः शास्त्रविधिमुत्सृज्य" इति गीतावचनभाष्ये 'शास्त्रं वेदाः' इत्युक्तम् ।

हितत्वात् सर्वस्य कार्यपरत्वाभावात् प्रेरणापर्यन्तत्वासिद्धेः । किंतु 'सर्वो वेदभागः परमात्मपरः' इति वाक्यार्थप्रदीपे उक्तम् । अतः परमात्मन एवेष्टदत्वेनेष्टसाधनत्वेऽपि यागसाध्योपासनादिकृत्स्नस्य तत्साधनत्वाद्यागादेश्च साध्यरूपत्वात् तद्धीतः प्रवृत्तेः तद्धीहेतुवाक्यानां च प्रचुरत्वात् तद्धियामपि प्राचुर्यात् तस्य शास्त्रत्वव्यवहारः ।

अथवा "शासु अनुशिष्टौ" इति स्मरणेऽपि धातूनां नानार्थत्वात् शासनस्य बोधनरूपतया शास्त्रतास्तु । एवंच सर्ववेदव्यापिता शास्त्रत्वव्यवहारस्य । वेदाश्च मन्त्रब्राह्मणार्थवादात्मकाः । कृत्स्नोऽप्यसंनिकृष्टार्थबोधनपर एव । [1]मन्त्रा हि समाराध्यदेवतास्वरूपादेः प्रमाणान्तरासिद्धस्य प्रतिबोधका इति तत्प्रतिपादकाः । ब्राह्मणभागेषु तु न विसंवादः । ब्राह्मणशेषार्थवादा अपि प्रमाणान्तरासिद्धानुष्ठेयार्थप्राशस्त्यादिबोधका.[2] । एवंच वेदशास्त्रशब्दयोः पर्यायत्वं चोपपन्नम् ।

भारतादौ तु शास्त्रत्वव्यवहारो भाक्तः; तेषां संकेतादि मूलत्वात् । आयुर्वेदधनुर्वेदयोः स्मृतिषूपवेदत्वोक्तेः पुरुषार्थतत्साधनयोः कथंचिद्वेदतास्तु । वेदाङ्गव्याकरणादावपि शास्त्रत्वव्यवहार औपचारिकः[3] । अतो वेदस्यैव शास्त्रत्वम् ।

[4]ननु शास्त्रस्यानुमानान्तर्भावः; । शब्दार्थयोस्तु स्वाभाविकसंबन्धात् शब्दश्रवणे तद्व्यापकपदार्थानुभवसंभवादिति—न; पदानां धूमादिवदेकैकार्थसंबन्ध-

---

1. जैमिनिना "तच्चोदकेषु मन्त्राख्या" इति मन्त्रलक्षणं सूत्रितम् । तत् कर्मसमवेतार्थस्मरणं चोदकं प्रयोजनतया प्रेरकं येषां तेषु मन्त्रव्यवहार इति तदर्थः । अनुष्ठेयार्थप्रकाशकत्वं मन्त्रत्वमिति यावत् । अतो देवतास्वरूपावगमो मन्त्रेणेति भावः ।

2. आदिशब्देन निन्दापरिग्रहः । अर्थवादो हि स्तुत्यादिना विहिते निषिद्धे वार्थे पुरुषं त्वरितं प्रवर्तयति निवर्तयति वा । यथा—"वायव्यं श्वेतमालभेत भूतिकामः" इति विहितमर्थं "वायुर्वै क्षेपिष्ठा देवता" इति प्रशंसन् पुरुषमविलम्बेन तत्र प्रवर्तयति । तथा "रजतं न देयम्" इति निषिद्धं रजतदानं "सोऽरोदीत् यदरोदीत् तद्रुद्रस्य रुद्रत्वम्" इति रुद्ररोदनकथनपुरःसरं विनिन्दन् पुरुषं रजतदानात् निवर्तयति ।

3. व्याकरणस्य वेदाख्यशास्त्रोपकारकत्वात् शास्त्रत्वेन व्यवहारः । तदुपकारप्रकारश्च "रक्षोहागमलध्वसंदेहाः प्रयोजनम्" इति वेदरक्षादिनेति महाभाष्ये विस्तरेणोपपादितमवगन्तव्यम् ।

4. नन्वित्यादिना वैशेषिकाणामाक्षेपः । तथाहि—प्रत्यक्षमनुमानं

नियत्यभावात् । अक्षादीनि हि पदानि नानार्थसंबद्धानि । अग्निगङ्गादिपदानि सादृश्यलक्ष्यार्थपराणि[1] । तानि च न नियतार्थपराणि ।

ननु मास्तु पदार्थानुमापकलिङ्गत्वम्; 'अक्षैर्दीव्यति' इत्यादिवाक्यानामक्षविशेषान्वयनियतेः ततस्तद्विशेषानुमानम्—तन्न; आकाङ्क्षासंनिधियोग्यताद्युपधित एकैकार्थपरत्वानियतावपि लौकिकवाक्यानामनुवादत्वेन प्रामाण्यफलाभावात् प्रथमं त्वाभ्युपगमात् । पुरोदितवाक्यश्रवणसमनन्तरं हि अस्य तज्ज्ञानात् तदविनाभूतार्थानुमा । अतो लौकिकवाक्यप्रयोगस्याभिप्रायानुसारित्वाद्वाक्यादभिप्रायापरपर्यायज्ञानाद्यनुमानादेव प्रवृत्तिरिति लिङ्गभूतवाक्यस्य पश्चात् स्वार्थेऽनुवादकतैवेति न परोक्षार्थपरत्वेन लौकिकवाक्यस्य प्रामाण्यमिति तत्र वाक्यादर्थानुमानं युक्तं लोके । वैदिकानां तु शब्दानां न वक्तेति नानुमानता वेदज्ञानस्य ।

ननु लौकिवाक्याना न लिङ्गत्वोक्तिर्भाष्यादौ—तन्न; वेदार्थसंग्रहादौ मन्वादिवाक्यानां विप्रकीर्णशाखमूलत्वेन तदनुमानलिङ्गत्वाभिधानात्; इतिहासपुराणानां मन्त्रार्थवादमूलत्वेन तल्लिङ्गत्वाभिधानाच्च । विप्रकीर्णशाखामूलत्वेन हि प्रामाण्योक्तौ तद्वाक्यानां तदनुमानलिङ्गत्वोक्तिरर्थात् । तेषां श्रुतिवदनपेक्षया प्रमाणत्वाभ्युपगतौ न मूलान्तरतः प्रामाण्योक्त्युपपत्तिः । श्रुतिस्मृत्योर्विरोधे न स्मृतिबाधोक्त्युपपत्तिश्च; उभयोस्तुल्यबलत्वेन विरोधे विकल्पापत्तेः । स्मृतीनामनुमानत्वे तु प्रत्यक्षादिश्रुत्या विलम्बितानुमानबाधो युक्तः ।

एवमाप्तमत्वेन निश्चितमन्वादिवाक्यानामपि मूलान्तरापेक्षया प्रामाण्येऽन्येषां संदिग्धशक्तिप्रमादादिमतां वाक्यानां किमिति नान्यतः प्रामाण्यम्? अतो वेद एव शास्त्रत् ।

---

चेति द्वयमेव प्रमाणम् । शब्दप्रमाणस्यानुमानेन कृतकरत्वम् । यथा—एतानि पदानि स्मारितार्थसंसर्गवन्ति, आकाङ्क्षादिमदाप्तोक्तपदत्वात्, गामभ्याजेति पदकदम्बवत् इति ज्ञानावच्छेदकतया संसर्गसिद्धावर्थबोध इति पदपक्षकानुमानेन सिद्धेः शब्दो न प्रमाणान्तरम् । एवमर्थपक्षकमनुमानमपि कथयन्ति । यथा—एते पदार्था मिथः संसर्गवन्तः, आकाङ्क्षादिमत्पदकदम्बस्मारितत्वात्, गामभ्याजेति स्मारितपदार्थवदिति ।

1. अग्निर्माणवकः, गङ्गायां घोष इत्यादाविति भावः ।

यद्यपि वेदाद्यमहावाक्यस्य प्रधानतमपरमात्मपरत्वादैक्यम्[1] ; तथाप्यवान्तरार्थभेदात् तस्य नानात्वमपि । तथा सिद्धाद्यर्थविशिष्टाकारभेदादर्थभेदोपपत्तिः । तत्र निष्कृष्टपरमात्मस्वरूपपराणि, परमव्योमपराणि, जीवस्वरूपत्रिगुणात्मकप्रधानमहदादिस्वरूपपराणीति सिद्धपराण्यपि शास्त्राण्यनेकविधानि । "यजेत स्वर्गकामः" "आत्मानमेव लोकमुपासीत" "नानृतं वदेत्" इत्यादीनि साध्यपराण्यपि नानाविधानि ।

एवंविधशास्त्रभेदहेतवः साध्यानुबन्धभेदाः । साध्यं च स्वर्गादिफलम् । तच्च द्विविधम्—अनभिसंहितमभिसंहितं चेति । तत्राद्यं नित्यकर्मसाध्यम् । द्वितीयं काम्यकर्मसाध्यम् ।

ननु नित्यकर्मणामपि फलसाधनत्वे नित्यकाम्याविवेकः—तन्न ; नित्यानामकरणे प्रत्यवायः । फलभावे तु न निवृत्तिः । तथा यावज्जीवमग्निहोत्रादिष्वपि प्रवृत्तिः । अतो नित्यादीनामपि फलवत्त्वम् । नित्यकर्मसु कर्तृविशेषणं जीवनादि । निषिद्धनिवृत्तौ न विशेषणापेक्षा, निषिद्धप्रवृत्तकर्तृलाभात् । नैमित्तिकेषु तु भेदनादयस्तद्विशेषणम् । 'संक्रान्तौ स्नायात्' इत्यादौ तु कालविशेष एव तद्विशेषणम् ।

न चाकरणे प्रत्यवायस्य सतः[2] तत्र स्वर्गादिफलकल्पना । आर्थवादिकफलसद्भावे तु तत्फलस्यैव कल्पना । यत्र त्वकरणे प्रत्यवायश्रुतिः, न च फलविशेषश्रुतिः, न च जीवनादिविशेषणश्रवणम् , तस्य कर्मणो नित्यत्वमेव । नित्यकर्मणामप्यपरिमितसुखहेतुत्वमेव[3] । प्रत्यवायपरिहारस्तु नान्तरीयकं[4]

---

1. ऐक्यमिति । पूर्वकाण्डो भगवदाराधनभूतकर्मबोधकः । उत्तरकाण्डस्तु साक्षात् भगवत्पर इति द्वयोरपि काण्डयोः प्रधानभूतभगवत्परत्वमित्यर्थः ।

2. प्रत्यवायस्य सत इति । प्रत्यवाये सति तन्निवृत्तिरूपं फलमनादृत्येति अनादरे षष्ठी ज्ञेया ।

3. अत्र "विद्यां चाविद्यां च यस्तद्वेदोभयं सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते ॥"
इत्यादिवचनान्यनुसंधेयानि । अविद्याशब्दोऽत्र विद्येतरकर्मपरः । मृत्युशब्दो ज्ञानसंकोचकरं प्राक्तनकर्मजातमाह । उपासनाङ्गानभिसंहितफलानुष्ठितकर्मभिः मृत्युशब्दाभिधेयकर्मनाशे ज्ञानप्रसरः स्वयमेवाविर्भवन् उपासनापरिपूर्तिमापादयन् अमृतशब्दाभिधेयापरिमितसुखोत्पादनाय कल्पत इति श्रुत्यर्थोऽवधेयः ।

4. नान्तरीयकमिति । अन्तरा विना भवतीत्यन्तरीयकम् । तन्न भवतीति नान्तरीयकम् । अवर्जनीयतया अवश्यंभावीत्यर्थः ।

फलम् । विहिताकरणस्य व्यापारनिवृत्तिरूपत्वेऽपि नरकात्मकान्याकाररूपबुद्धि-व्यापाराच्च तत्फलत्वम् । यत्राग्निहोत्रादौ स्वर्गादिकामना जीवनं च श्रुते तत्रोभयाधिकारपरत्वाद्भिन्नशास्त्रता ; तत्र साध्यस्य भिन्नत्वात् । काम्येच्छयाग्नि-होत्रादिप्रवृत्तौ नित्याधिकारः प्रसङ्गात् सिध्यतीति न तत्र प्रत्यवायः । केचित्तु नित्यकर्मणामनादिकालसञ्चितपापनिरासपरत्वमेवेत्युक्तम् । तत्पक्षेऽपि साध्यभेदात् शास्त्रभेदः सिद्धः । सन्ध्यावन्दनादिकर्मणां तु कर्मान्तराधिकारापादकत्वान्न फलान्तरसाधनधीत्वम् । तथाप्यवान्तरसंस्काररूपसाध्यभेदात् शास्त्रभेदः । एकैककर्मण्यपि हि फलभेदः श्रूयते । तत्फलसाधनत्वाकारेण विधेयार्थभेदात् शास्त्रभेदः सिद्धः । साध्यमपि विधेयभेदकतया शास्त्रभेदकम ; न तु स्वतः । स्वर्गपश्वादिसाध्यार्थानां साधनत्वेन विधेययागादीनामपि नानात्वात् तत्परशास्त्र-नानात्वं युक्तम् । एवं साध्यभेदात् शास्त्रभेदः कर्मसु द्रष्टव्यः ।

तथा वेदनेऽप्युद्गीथविद्यादौ कर्मफलानामविलम्बितसाध्यत्वादिफलश्रवणात् साध्यभेदात् शास्त्रभेदः । यद्यपि मोक्षोपायपरविद्यासु न भेद इति न साध्यभेदः, तथाप्यैहिकफलविद्यातो मोक्षपरविद्यानां भेदस्य वक्तव्यत्वात् साध्यभेदात् शास्त्र-भेदसाधनं सप्रयोजनम् ।

न केवलं फलाद्यधिकारसाध्यभेदेन शास्त्रभेदः, किंतूत्पत्तिप्राप्तिविकृति-करणोपकाराख्यावान्तरसाध्यभेदतोऽपि । न तु ततः परमशास्त्रभेदः । "वेदिं करोति" "पुरोडाशं करोति" इत्यादय उत्पत्तिसाध्यस्योदाहरणम् । कृतिविशेषाद्वे-द्यादिसंस्थानविशेष उत्पद्यत एव । 'पयो दोग्धि' इत्यादि प्राप्तेः । सिद्धमेव पयो दोहनात् प्राप्यते । 'आज्यं विलापयति' इति विकृतेः । घनीभूताज्यस्य विलापनात् द्रवत्वं विकार एव । 'पुरोडाशं पर्यग्नि करोति' इति संस्कारस्य । पर्यग्निकरणात् संस्कार एव पुरोडाश उत्पद्यते । संस्कारो हि कार्यान्तरयोग्यता । तदापादनं पर्यग्निकरणम् । 'आघारमाघारयति' 'आज्यभागौ यजति', 'व्रीहीनवहन्ति' इत्यादयः करणोपकाररूपसाध्यस्योदाहरणम् । आग्नेयादीनां फलकरणादीनामुपकार एवाघारादिसाध्यः । अतः करणोपकरणपर-शास्त्राणां भेदः ।

करणावान्तरव्यापारतोऽपि शास्त्रभेदः कैश्चिदुक्तः । आग्नेयादीनाम-वान्तरापूर्वाणि हि करणावान्तरव्यापारतयेष्टानि । अपूर्वानभ्युपगमादेव न तदभ्युपगमः । आग्नेयादियागानां क्षणिकत्वेऽपि तत्समाराध्यदेवतानां स्थायि-

त्वात् ततः फलसिद्धेर्यागजन्यापूर्वकल्पनानवकाशः । "स एवैनं भूतिं गमयति" इति देवताया एव हि फलसिद्धिश्रुतिः ।

विद्यास्वप्यात्मज्ञानादिसापेक्षत्वात् साध्यभेदात् शास्त्रभेदः सिद्धः । आत्मज्ञानादयोऽपि विद्याङ्गानीत्युपकारसाध्यभेदत उपासनादिमोक्षकारणोपकारसाध्यभेदात् शास्त्रभेदः ।

उपकारश्च कारणशरीरप्रविष्ट इति न परमशास्त्राद्भेदोऽपि । निरपेक्षसाध्यभेदपरत्वे हि तद्भेदः; अनपेक्षत्वनियमात् प्रमाणस्य । अङ्गशास्त्राणि तु प्रधानशास्त्रापेक्षाण्येव साध्यपराणीति न तेषामनपेक्षत्वम् । अङ्गत्वं च [1]फलवदफलन्यायात् । फलवत्पदार्थसंनिधावफलत्वेन श्रुताः पदार्थास्तदङ्गमिति हि तत्रोक्तम् । श्रुतिलिङ्गादिभिर्द्वारशेषतोक्ता । श्रुत्यादिस्वरूपं च श्रुतिलिङ्गादिनिरूपणे उक्तम् । अतोऽङ्गानां न परमसाध्यभेद इति न तत्परशास्त्राणां परत्वम् । अवान्तरसाध्यभेदादवान्तरभेदोऽस्त्येव ।

'दध्ना जुहोति' 'पयसा जुहोति' इति विकल्पार्थशास्त्राणां नियमांशसाध्यभेदात् परस्परं भेद इत्यादि साध्यभेदात् शास्त्रभेदः । विस्तरस्तु पूर्वकाण्डद्वितीयलक्षणे गुणोपसंहारपादे च ।

[2]अनुबन्धाश्च विधेयभेदहेतवः शब्दान्तराभ्याससंख्यागुणाक्रियानामधेयानीति ।

'जुहोति' 'ददाति' इत्यादयः शब्दान्तरस्योदाहरणम्; देवतोद्देशेन द्रव्यत्यागरूपयागात्मकार्थपरत्वाद्यजतेः; जुहोतेस्तु त्यक्तहविषश्चोदितदेशविशेषप्रक्षेपरूपाधिकार्थपरत्वात् । ददातेश्च पुरुषविशेषं प्रति त्यक्तवस्तुविषयत्वेन तस्य पुरुषस्य स्वत्वाभिमानोत्पत्तिपर्यन्तत्वात् शब्दभेदादेव विधेयव्यापारभेदावगतेस्तत्परशास्त्रभेदः ।

वेदान्ते तु सदात्माकाशादिवाचकशब्दभेदात् शास्त्रभेदः । "सन्मूलाः" इत्यादौ सच्छब्दापरित्यागेन तद्विद्यासमाप्तिः । तथा "आत्मा वा इदमेक एवाग्र आसीत्" "अस्य लोकस्य का गतिरिति; आकाश इति होवाच" इत्यादावपि. तथा । यद्यपि सदादिशब्दा निरुपाधिकसत्तायोगिपराः,

---

1. फलवत्संनिधावफलं तदङ्गमिति न्यायादित्यर्थः
2. अनुबन्धा इति । अवच्छेदका इत्यर्थः ।

तथापि तत्तद्वाच्यत्वाकारेणैवोपास्यत्वप्रतिपादनपरा इति विधेयविद्याविशेषपराः। अन्यथा सदादिशब्दावृत्त्यनुपयोगः । अतस्तद्विद्याविषयब्रह्मवाचक-सदादिशब्दानां केवलानाम् 'उपासीत' इत्यादिसहितानां विद्याविशेषभेदकत्वात् तत्परशास्त्रभेदः ।

अविशेषपुनःश्रुतिरभ्यासः । "समिधो यजति" "तनूनपातं यजति" इत्यादि तदुदाहरणम् ।

[1]समिदादीनां नामत्वेऽपि न विधेयभेदकत्वम्; यजतिपरतन्त्रत्वात् तन्नाम्नः । अतो 'यजति' इत्यविशेषेण पञ्चधा न्यस्ततया भेदविधयार्थपरत्वाभावे अभ्यासानुपपत्तेः तत्परशास्त्रभेदः । अभ्यासश्चैकप्रकरणैककर्तृकस्तद्भेदकः । न तु प्रकरणान्तरे तच्छब्दोच्चारणेऽपि; प्रतिपत्तृभेदेनापि तदुपपत्तेः । पुरुषाधीनोच्चारणभेदेऽपि न तद्भेदः, तस्य पुरुषाधीनत्वात् ।

तथोत्तरत्रापि "यः पृथिव्यां तिष्ठन्" इत्यादिपर्यायेषु "स त आत्मान्तर्याम्यमृतः" इति पुनः पुनरभ्यस्यते । तदभ्यासाद्विधेयविद्याभेदः । अन्यथा सर्वपर्यायान्ते "स त आत्मान्तर्याम्यमृतः" इति सकृदेवोपदेशः स्यात् ।

"यः पृथिव्यां तिष्ठन्" इत्येकैकपर्यायोक्तगुणविशिष्टस्यामृतत्वगुण-विशिष्टस्य च स्वान्तरात्मतयोपासने ब्रह्मप्राप्तिश्चोपपन्नेति तत्परशास्त्रभेदोपपत्तिः । पृथिव्याद्येकैकविशिष्टत्वेन ब्रह्मण एवोपास्यत्वात् तदुपासनस्य न प्रतीक-विषयत्वम् । अत एव ह्यक्षिस्थानमात्रविशिष्टाक्षिपुरुषविशिष्टस्य ब्रह्मप्राप्त्यु-पदेशः । सर्वान्तरात्मत्वगुणस्य नाक्ष्यादिविद्यासूपसंहार इत्युक्तं गुणोपसंहार-पादे "संभृति" इत्यत्र । अतः प्रतिपर्यायं विधेयविद्याभेदः "यः पृथिव्यां तिष्ठन्" इत्यादौ ।

संख्या च द्वित्वादिः स्पष्टा । "सप्तदश प्राजापत्यान् पशूनालभते । द्वे पौर्णमास्यौ द्वे अमावास्ये यजेत" इति तदुदाहरणम् । संख्या हि पृथक्त्व-निवेशिनी । द्वित्वादीनां विभक्तीनां हि सोपसर्जनसप्रत्ययप्रातिपदिकादुत्पन्न-त्वाद्विभक्तिश्रुतेरुपसर्जनादिसमुदायपृथक्त्वधीः । प्रजापतिरेषां देवतेति प्राजापत्याः ।

1. 'समिधो यजति' इत्यादौ यजतिपदाभ्यासात् भेद उक्तः । तत्र नामधेयभेदादेव भेदोऽस्तु । किमित्यभ्यासादित्युच्यत इत्याशङ्क्य समाधत्ते— समिदादीनामिति ।

ततो हि विभक्त्युत्पत्तिः । एवं पृथक्त्वे सप्तदशान्वये सति संख्यया यागानां विधेयसप्तदशत्वावगतिरिति तत्परशास्त्रभेदः ।

यद्यपि प्राजापत्यानां वाजपेयाङ्गत्वात् तत्परशास्त्राणां न परत्वम्; तथापि तत्र न्यायव्युत्पत्तौ परमशास्त्रभेदेऽपि स एव न्याय इति तदुदाहरणम् । अत एव हि "द्वे पौर्णमास्यौ" इत्याद्युदाहृतमस्माभिः । संख्यया विधेयार्थभेदात् तत्परशास्त्रभेदेऽन्यतः पश्वादेर्दुष्टत्वे यागदोषे तद्यागमात्रस्यैवावृत्तिः न्यायफलम् । सप्तदशयागानामेकशास्त्रार्थत्वेनैकयागदोषेऽपि सर्वयागावृत्तिः पूर्वपक्षफलम् । एवं दर्शपूर्णमासादावपि द्रष्टव्यम् ।

उत्तरत्र तु "यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः" "स वा एष पुरुषः पञ्चधा पञ्चात्मा" इत्यादयस्तदुदाहरणम् । पञ्चजनसंज्ञिताः प्राणादयः पञ्च; ते परमात्मात्मका इत्युपासनकर्मतया श्रुताः । तदुपासने चामृतत्वप्राप्तिः श्रुता । तानि च पञ्चसंख्याश्रवणात् पञ्चोपासनानि; अन्यथा तत्संख्योपादानानुपपत्तेः ।

ननु "यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः, तमेवं मन्ये" इत्यादावाकाशसहितप्राणाद्याधारत्वे न "तमेवं विद्वान्" इति प्रत्येकं संबन्धः । प्राजापत्यानां सहितानां करणत्ववत् द्वित्वादिगुणविशिष्टपौर्णमास्यादेः पुरुषार्थसाधनत्ववच्चात्रापि पञ्चजनाद्याधारतया परमात्मोपासनानां समुदितानामेव मोक्षसाधनत्वमिति—तन्न; प्राजापत्यानां वाजपेयाङ्गत्वनिश्चयात्, पौर्णमास्यादेरपि द्वित्वादिविशिष्टस्यैव फलसाधनत्वश्रवणात् पञ्चजनशब्दवाच्यचक्षुराद्येकेन्द्रियाधारतयोपासनमात्रादप्युपकोसलविद्यासु फलितसिद्धिश्रवणात् अत्र विरोधाभावात् परमशास्त्रभेदस्यैव युक्तत्वात् ।

तथा "स वा एष पुरुषः" इत्यत्र पूर्वत्रान्नप्राणमनोविज्ञानानन्दाः प्रस्तुताः । अन्नादेः परमात्मैवात्मेति ब्रह्मवल्ल्यामुक्तम् । ब्रह्मणश्चिदचिद्विशिष्टतया स्वरूपेण चोपासनभेदः प्रतर्दनविद्यावाक्यनिरूपण उक्तः । अन्नप्राणमनसामन्यतमान्तरात्मतया विज्ञानाख्यजीवान्तरात्मतयानन्दाख्यपरमात्मस्वरूपेण चोपासनं युक्तमिति तच्छास्त्राणि पञ्च ।

ननु "स वा एष पुरुषः पञ्चधा" इत्यत्र "येन सर्वम्" इत्यादिना गुणान्तरोपासनाच्छास्त्रैक्यधीः; तद्गुणानामन्नादिपञ्चोपासनासाधारण्यात् । "भूयो न मृत्युमुपयाहि" इति फलश्रुतेरपि तथात्वदर्शनात् तच्छ्रुतेस्तन्त्रेणो-

पदेशपरत्वात् । "चित्पतिस्त्वा" इत्यादिना अपेक्षया "अच्छिद्रेण" इत्यादेरन्वयश्च दृश्यते ।

"सन्ततमाघारयति, ऋजुमाघारयति, दीर्घमाघारयति" इत्यादि गुणतः शास्त्रभेदस्योदाहरणम् । आघारगतगुणाः सन्ततादिगुणा भिन्नाः, अन्योन्यनिरपेक्षत्वं चेति विधेयभेदहेतुत्वेन शास्त्रभेदकाः ।

उत्तरत्र तु "य एष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्" इत्यादि तदुदाहरणम् । आदित्यमण्डलाक्षिस्थानयोर्विरुद्धगुणत्वाद्विधेयभेदकत्वेन तत्परशास्त्रभेदः । तदुक्तं "संबन्धादेवमन्यत्रापि" इत्यधिकरणे ।

संनिधौ "मासमग्निहोत्रम्" इत्यादिप्रकरणान्तराद्विधेयभेदस्योदाहरणम् । प्रकरणान्तरे श्रूयमाणाग्निहोत्रादेः कुण्डपायिनामयनवाक्यैकवलान्मासादिगुणाधिक्याच्चाग्निहोत्रादिविधेयान्तरमेवेति तत्परशास्त्रभेदः । न च मासगुणात् तद्भेदः; उदाहरणस्याप्रयोजकत्वेन न्यायमात्रस्यैव प्रयोजकत्वात्; गुणश्रुत्यभावेऽपि केवलकर्मणः प्रकरणान्तरेऽपि श्रवणसंभवात् । किंचैकत्र फलान्तरसाधनतया श्रुतस्यैव वैश्वानरादेः फलान्तरसाधनतया नैमित्तिकतया वा श्रूयमाणत्वात् तत्र साध्यभेदाच्छास्त्रभेदः, न प्रकरणान्तरादिति प्रकरणान्तरादपि शास्त्रभेदोपपत्तेः ।

उत्तरत्र तु "एष तु वा अतिवदति यो यः सत्यं नातिवदति" इत्यादि उदाहरणम्; प्राणशब्दवाच्यजीवप्रकरणात् । प्रकरणान्तरत्वाद्धि परमात्मपरत्वेनैव "एष तु वा अतिवदति" इत्यादेः शास्त्रान्तरत्वमुक्तं भूमाधिकरणे ।

"एष ज्योतिरेष विश्वज्योतिः" इत्यादि नामधेयस्योदाहरणम् । ज्योतिरादिनामभेदात् विधेयनामिभेदे तत्परशास्त्रभेदः ।

उत्तरत्र तु दहरविद्यासंवर्गविद्याशाण्डिल्यविद्येत्यादयः प्रसिद्धाः ।

ननु तद्भेदाच्छास्त्रभेद इत्यन्योन्याश्रयता—तन्न; शब्दान्तरादेर्विधेयानां भिन्नत्वयोग्यतामात्रज्ञापनपरत्वेनाशास्त्रत्वात् । शब्दान्तरत्वं हि पदधर्मविशेषः । अभ्यासो वाक्यगतधर्मविशेषः । एवं संख्यादयोऽपि । अतो विमर्शदशायामेव शब्दान्तरादीनामन्वय इति शब्दान्तरत्वादिर्विधेयत्वाकारभेदयोग्यत्वनिश्चये तत्समर्पकाकारयोग्यत्वज्ञाने शास्त्रस्य योग्यत्वात् भिन्नत्वाच्छास्त्रात्

तदर्थनिर्णय इति न कश्चिद्दोषः । शब्दान्तरादिहेत्वभावेऽर्थस्यैक्यात् तत्परशास्त्रैक्यं च सिद्धम् ।

अभिधानाभिधेयापर्यवसाने चाकाङ्क्षितयोग्यकल्पितार्थेनान्वितः शास्त्रार्थ इति तात्पर्यावसानं द्रष्टव्यम् । तच्चोक्तं कर्तृविशेषादिकल्पनया पूर्वमेव । वैकृतसौर्यादेः स्वसंनिधावुपकारवर्गानध्ययनात् उपकाराभावे अनुपकृतस्य चाकारणत्वादुपकारतज्जनकयोश्चाकाङ्क्षितत्वादुपकारतज्जनकप्रयाजादिपदार्थाध्याहारात् तदन्वितसौर्यादिवाक्यं स्वार्थं प्रतिपादयति । न तु प्रयाजादिवाचकपदाध्याहार इष्टः; अर्थैरेवाकाङ्क्षापूर्तेः । एवमध्याहार एवातिदेश उच्यते । विशेषपदार्थातिदेशनियतिहेतुश्च वचनं चोदनालिङ्गानि च ।

"समानमितरत् श्येनेन" इत्यादि वचनस्योदाहरणम् । प्रस्तुतकर्मणः श्येनसादृश्यं हि वचनादेव । सादृश्यं चाङ्गादिद्वारेत्यङ्गातिदेशो वचनात् । प्रधानातिदेशे तु तत्त्वान्न सादृश्यम् ।

उत्तरत्र तु "तस्यैतस्य तदेव रूपं यदमुष्य रूपम्" इत्यादि । अत्र उपास्याक्षिपुरुषस्यादित्यमण्डलोक्तपुरुषतोक्तिः । हिरण्मयरूपाद्यतिदेशो हि तद्वचनादुच्यते ।

कुण्डपायिनामयनाग्निहोत्रादेरग्निहोत्रादिनाम्ना आधिकारिकाग्निहोत्रधर्मातिदेशः ।

उत्तरत्र तु परविद्यासु स्वसंनिध्यधीतसत्यज्ञानानन्तानन्दास्थूलत्वादिगुणानां स्वेतरसमस्तवस्तुभ्यः परमात्मनो व्यावर्तकानामानन्दमयविद्याद्यधीतानां नाम्नैवातिदेशः । तदुक्तम् "आनन्दादयः प्रधानस्य" "अक्षरधियां त्ववरोधः" 3-3-33 इत्यधिकरणयोः ।

न च सत्यादिगुणानां स्वप्रकरणाधीतानामुपदेशात् संबन्धः । उपदेशातिदेशकार्यविध्याख्यप्रमाणभेदादेव हि संबन्धः । "शरमयं बर्हिर्भवति" इत्यादिकार्यविधिवत् शाण्डिल्यविद्याविधयः आनन्दमयादिविद्याकार्ये न विहिताः, अप्रतीतेरेव ।

न च चोदनालिङ्गात् सत्यादिगुणातिदेशः; भाष्यादौ ततस्तदतिदेशानुक्तेः; निर्वपत्यालभत्यादिवत् प्रकृतिक्लृप्तलिङ्गस्य विरहात्; विद्यानां प्रकृतित्वाभावादेवासद्धर्मत्वाच्च । ननु प्रकृतिविकृतित्वाभावे कथं सत्यादि-

गुणातिदेश इति चेत्—तन्न; "समानमितरच्छ्येनेन" इत्यादौ प्रकृतिविकृतिभावानिश्चयेऽपि धर्मातिदेशदर्शनात् । अतिदेशो ह्याकाङ्क्षायामन्यत्र श्रुतधर्माणामन्यत्र संबन्धः । वचनात् तद्धर्मसमर्पणम् । तद्धर्माणां यत्राध्ययनं तत् कर्म तस्य प्रकृतिरिति तु पश्चान्निश्चयः । निवपत्यादिचोदनालिङ्गादतिदेशस्तु प्रकृतित्वनिश्चयादेव । विद्यायास्तु न तथा निश्चयः । अतः प्रकृतिकॢप्तलिङ्गस्य विरहात् परविद्येति नाम्नैव सत्याद्यतिदेशः । परविद्यानिश्चयस्तूपास्यवस्तुनो जगत्कारणत्वादिश्रवणात् ।

"स एष एव मृत्युः, एतस्मिन्मण्डले पुरुषः" इति च नामातिदेशस्योदाहरणम् । मृत्युरिति नाम्ना हि मृत्युवत्सर्वहारित्वधर्मातिदेश उक्तः "मृत्युवन्नहि लोकापत्तिः" इत्यत्र ।

"सौर्यं चरुं निर्वपेत्" इत्यादौ 'निर्वपेत्' इत्यादिचोदनालिङ्गात् दार्शपौर्णमासिकधर्मातिदेशः । उत्तरत्र तु चोदनालिङ्गान्नातिदेश इत्युक्तम् ।

एवं शास्त्रार्थपूर्तिरध्याहारेण वानुषङ्गेण वा शास्त्रत्वपूर्तिः पूर्वकाण्डोक्ता द्रष्टव्या । विस्तरभीत्या दिङ्मात्रं प्रदर्शितमिति सर्वं समवदातम् ।

इति शास्त्रनिरूपणम्

## उपमाननिरूपणम्

सादृश्यदर्शनात् परोक्षसादृश्यावच्छेदकं ज्ञानमुपमानम् । सादृश्यदर्शनादित्युक्त्यानुमानादेर्व्यवच्छेदः । परोक्षपदात् प्रत्यक्षस्य । परोक्षपदादेवापरोक्षसादृश्यविषयज्ञानस्यानुमानत्वमपि सिद्धम् । प्रत्यक्षतो दृश्यमानयोः क्वचित् सादृश्येनासौ सदृश इति ज्ञानं तु प्रत्यक्षमेव, इन्द्रियसंप्रयोगजत्वात् । अस्योदाहरणमदृष्टगोः पुरुषस्य वनगतस्य गवयं पश्यतो गवयसादृश्यधीतो यत् गोगतगवयसादृश्यस्यावच्छेदकं ज्ञानम् ।

न च प्रत्यक्षतास्य; इन्द्रियसंप्रयोगाभावे सादृश्यावच्छेदकत्वात् । नाप्यनुमानता; गवयगतसादृश्यस्य प्रतियोगित्वात् । 'यो यद्गतसादृश्यप्रतियोगी स तत्सदृशः, यथा यमो यमान्तरेण' इत्यनुमानमपि निरस्तम् ।

न चास्य स्मृतित्वम्; पूर्वं तदग्रहणात् । संस्कारमात्रजत्वाभावाच्च । अत्र सादृश्यदर्शनाद्धि सादृश्यज्ञानम् । न च गवयसादृश्यस्य संस्कारोद्बोधकत्वमात्रम्; सहाननुभवात् तयोः; धूमस्यापि तथात्वापातादनुमानस्यापि पृथक्प्रमाणत्वाभावप्रसङ्गाच्च । वस्तुतः संस्कारानुत्पत्तिरेव; पूर्वमननुभवात् । न च भूयोऽवयवसारूप्यस्य चैव सादृश्यत्वात् तस्य चैन्द्रियकत्वार्हत्वादाश्रयग्रहणकाल एव गृहीतत्वात् प्रतियोगिग्रहणात् संस्कारोद्बोधे स्मरणोपपत्तिरिति—गोग्रहणकाले तद्गतगवयसादृश्यस्यानुल्लेखात् संस्कारानुपपत्तेः ।

न च निर्विकल्पकप्रत्यक्षेण तदनुभवाभिमानाभावमात्रमिति—तदनुभवे तदभिमानाभावानुपपत्तेः । अतः कारणभेदात् प्रमाणान्तरत्वमेव । यत्तु सदृशदर्शनात् स्मर्यमाणपदार्थसादृश्यज्ञानस्य प्रमाणान्तरत्वे वैसादृश्यदर्शनात् वैसादृश्यज्ञानस्यापि प्रमाणान्तरतेत्युक्तम्—तन्न; वैसादृश्याख्यप्रमेयस्य सादृश्याभावरूपत्वात्; अभावस्य च केवलधर्मिमात्रत्वात् पृथक्पदार्थत्वाभावात् । तच्च वक्ष्यते ।

ननु अनवगतसंगतिसंज्ञास्मरणसहायं तत्समभिव्याहृतवाक्यार्थप्रत्यभिज्ञाप्रत्यक्षं संज्ञासंज्ञिसंबन्धप्रमितिसाधनमुपमानमित्येव तल्लक्षणं युक्तम् । उदाहरणं तु 'यथा गौर्गवयस्तथा' इत्यारण्यकवाक्यं श्रुतवतोऽरण्यगतगवयगतगोसादृश्यज्ञाने

सति गवयसंज्ञास्मरणसहायं वाक्यार्थप्रत्यभिज्ञाप्रत्यक्षं गवयत्वे संज्ञासंज्ञिसंबन्धप्रमितिं विदधदुपमानमित्युच्यते। न च वचनात् असति वृत्त्यन्तरे तत्र प्रयोगाद्वा लिङ्गात् पूर्वमेवायमधिगतः संज्ञासंज्ञिसंबन्धः केवलमधुना स्मर्यत इति वाच्यम्—निमित्तस्य प्रागनवगतेः। अवगतस्य सादृश्यस्य चानिमित्तत्वात्। निमित्तत्वे गौरवादप्रतीतगूनामरण्यवासिनां गवयव्यवहारानुत्पत्तिप्रसङ्गात्। अत एवोक्तम्—

"सादृश्यस्यानिमित्तत्वान्निमित्तस्याप्रतीतितः।
समयो दुर्ग्रहः पूर्वं शब्देनानुमयापि वा॥"

इति।

तन्न; गवयगवयशब्दयोः संबन्धधियः प्रत्यभिज्ञाप्रत्यक्षत्वात्। प्रमाणान्तरत्वे च 'सोऽयं देवदत्तः' इत्यादावपि तथात्वम्। न च तत्र पूर्वं संज्ञासंज्ञिसंबन्धस्यावगतत्वान्न तथात्वमिति—गवयादावप्याटविकवाक्यात् तदवगतेः समत्वात्। अन्यथा प्रत्यभिज्ञासंज्ञा न स्यात्। किंच 'नद्यास्तीरे फलानि' इत्यादिवाक्यगतविषयप्रत्यक्षस्यापि प्रमाणान्तरत्वम्। न च तत्र संज्ञासंज्ञिसंबन्धः पूर्वावगत इति न तत्रोपमानलक्षणमिति—नदीतीरविशेषफलविशेषसंबन्धस्य पूर्वमनवगतेः। न च तीरफलतत्संबन्धानां समभावाकारेणावगतेर्नानवगतिरिति—शब्दार्थसंबन्धानां समानाकारेणावगतिसाम्यात्।

न च 'अस्य गवयशब्दः संज्ञा' इति धीरुपमानम्; तस्य वनेचरवाक्यादवगतत्वेन स्मृतित्वात्। एवं तद्धर्मलक्षणान्तरनिरास उन्नेयः।

सादृश्यं चानेकम्। तच्च सदृशानेकावयवजम्। अन्यत्तु प्रमेयनिरूपणे वक्ष्यत इति सर्वं सुस्थम्।

इत्युपमाननिरूपणम्

## अथार्थापत्तिनिरूपणम्

उपलब्धार्थस्यार्थान्तराकल्पनायामनुपपत्तौ तन्निरासकपरोक्षार्थान्तरस्य कल्पनावच्छेदकं ज्ञानमर्थापत्तिः। परोक्षपदात् प्रत्यक्षव्यवच्छेदः। इतरपदैस्त्वनुमानादीनाम्। उदाहरणं तु—जीवतः पुरुषस्य गृहेऽभावदर्शनात् संदिग्धाज्जीवनाद्बहिर्देशस्थितिकल्पना। तत्संदेहनिवृत्तिस्तु फलम्।

ननु दृढतरप्रमाणेन गृहाभावोपलब्धौ 'जीवता क्वचित् स्थातव्यम्' इति सामान्यतः प्रवृत्तमनुमानमेवैतत्। 'विमतः पुरुषो बहिर्देशागतः, तस्य गृहेऽसत्त्वे सति सत्वात्; अहमिव' इति प्रयोग इति—तन्न; तत्सत्त्वस्य संदिग्धत्वेनासिद्धत्वात्। यो गृहाङ्गण एवोपलब्धः कालचक्रगणनादिवशात् कश्चित् कालं निश्चितजीवनोऽपि, तस्य काले गृहेऽदर्शनात् जीवनं संदिग्धम्। बहिःस्थानकल्पनया तु तत् पुनर्निश्चितम्। न तस्य बहिःस्थानकल्पनी निःसन्दिग्धजीवनस्य जीवत्ता; अनुमानप्रमेयाभावात्। बहिर्देशस्थितेरेव हि प्रमेयता। तस्य पूर्वमेव निश्चये किमनुमया? तदुक्तं नयज्ञैः—

> "तेन मेयानपेक्षस्य संदिग्धत्वादहेतुता।
> हेतुत्वं यावता त्वस्ति न ततोऽन्यत्प्रमीयते॥"

इति।

ननु जीवनगृहासत्त्वयोर्विरोधित्वात् गृहासत्त्वात् बहिःसत्त्वकल्पनानुमानमेव। उपपादकयोर्हि व्याप्तिरङ्गीकृता; अन्यथा अतिप्रसक्तेः। अनौपाधिकः संबन्धो व्याप्तिः। स चान्वयव्यतिरेकगम्यः। यदाहमेकत्र न तदान्यत्रेति स्वस्मिन्नेव तद्ग्रहणमिति—नैवम्; व्याप्तिसद्भावेऽप्यपक्षधर्मत्वात्। अर्थापत्तेस्तु स्वीकारः। अपक्षधर्मत्वोक्त्या साध्यसाधनयोर्व्यधिकरणत्वस्यैवोक्तत्वात् अव्याप्तेरेव फलितत्वात्।

तथा सति नोपपाद्योपपादकतेति—तन्न; विकल्पासहत्वात्। किं केवलगृहाभावस्य लिङ्गत्वम्? उत जीवनविशिष्टस्येति। नाद्यः; मरणादिनापि तदभावोपपत्तेर्न बहिर्भावस्य लिङ्गत्वात्। तदुक्तम्—

"गृहाभावस्तु यः शुद्धो विद्यमानत्ववर्जितः ।
संमतेष्वपि दृष्टत्वाद्बहिर्वृत्तेरसाधकः ॥"

इति ।

नापि द्वितीयः; विशेषणभूतजीवनस्य संदिग्धत्वेन तद्विशिष्टस्याप्य-लिङ्गत्वात् । ततो गृह एव दृश्यमानस्य प्रमाणान्तरनिश्चिताज्जीवनाद् गृहा-दर्शनसंदिग्धाद्बहिर्देशस्थितिकल्पना ।

न च संदिग्धस्य न कल्पकता जीवनस्येति—निश्चितस्य लिङ्गत्ववदर्थापत्तौ संदिग्धस्यैव कल्पकत्वात् । कल्प्यत्वाच्चैवोक्ते तथा दर्शनात् । तत्र संग्रहश्लोकश्च नयज्ञैरुक्तः—

"यत्कल्पनां विना योऽर्थः प्रतीतोऽप्येति संशयम् ।
तेन तत्कल्पनामेके त्वर्थापत्तिं प्रचक्षते ॥"

इति ।

बहिः स्थानादिकल्पनां विना जीवनादिः प्रतीतोऽपि संशयमेति । तेन जीवनादिना तस्य बहिःस्थानादिकल्पनामर्थापत्तिमेके प्रचक्षत इति तस्यार्थः ।

अथवा जीवतो गृहाभाव एव दृष्टो जीवनस्य संदेहमापादयन् गमको बहिः स्थानकल्पनायाः । जीवतो गृहाभाव इत्युक्त्या मृतादिगृहाभावस्या-कल्पकतोक्ता । अतो नातिव्याप्तिः । जीवनस्य संदेहमापादयन्नित्युक्त्या लिङ्गता चास्य निरस्ता; लिङ्गस्यार्थान्तरापादनसंशयेनार्थान्तरस्यागमकत्वात् । अर्थान्तरकल्पनया चापादितस्य संशयनिरासः फलम् । गृह एव दृश्यमानस्य तत्रादर्शने बहिर्देशकल्पनायाः प्राग्जीवने संदेहो जायत एव ।

यत्तु प्रमाणयोर्व्याघाते तत्परिहाराय सामान्यस्य विशेषानाक्रान्तविषयता-कल्पनारूपेत्यर्थापत्तिस्वरूपकथनम्—नैतत्; गृहाभावदर्शनजीवनविषयप्रमाण-योर्भिन्नविषयत्वेन विरोधाभावात् ।

न च 'जीवता क्वचित् स्थातव्यम्' इत्यनुमानं सामान्यविषयम्; क्वचिदित्युक्ते गृहस्यापि सामान्याकारेणान्तर्भावात्; गृहाभावदर्शनं

विशेषविषयमिति व्याघात इति—क्वचिदस्ति क्वचिन्नास्तीति प्रमेये चाविरोधात् । अस्तित्वनास्तित्वयोः पृथग्देशतया प्रत्यक्षेणोपलम्भात् न प्रमाणान्तरापेक्षा च । ननु मास्तूदाहृतसामान्यविशेषविषयत्वम्; यत्र त्वेकविषयता, तत्रार्थापत्तिर्व्यवस्थापिका प्रमाणमिति—तन्न; विकल्पात् व्याघातशान्तेः ।

अथ समविकल्पस्य बाधानर्हत्वात् तस्य चान्याय्यत्वात् तन्निवृत्तये विशेषव्यतिरिक्तविषयता सामान्यस्य कल्प्येति—तर्हि व्रीहियवयोः विषयव्यवस्था बाधपरिहाराय स्यात् । न च तत्रोभयोरेकविषयत्वान्न व्यवस्थेति—तर्हि किं सामान्यविशेषविषययोरेकविषयत्वं नास्ति ? ओमिति चेत्—न विषयव्यवस्थापेक्षा । एकविषयत्वे तु विकल्प एव ।

अथैकविषयत्वेऽपि तन्निवृत्तये विशेषव्यतिरिक्तविषयता; बहुविषयैकविषयसामान्यविशेषयोर्नैकरूप्यमिति न समविकल्प इति—तर्हि ऐकरूप्याभावयुक्त्यैव व्यवस्थासिद्धेः कृतमर्थापत्त्या । सावकाशत्वनिरवकाशत्वनिमित्तदौर्बल्यप्राबल्याभ्यां सामान्यविशेषविषययोर्व्यवस्थासिद्धिरिति नार्थापत्त्यपेक्षा ।

श्रुतावपि सामान्यविशेषयोः सत्त्वात् तत्राप्यर्थापत्त्यैव व्यवस्था स्यात् । न च तत्रापि श्रुत्यर्थापत्तिर्विद्यत इति—अभिहितार्थानुपपत्तौ प्रत्यक्षादिदृष्टार्थानुपपत्तौ च योऽर्थः कल्प्यते तस्यैवार्थापत्तेर्विषयत्वात् । श्रुतौ चोपपादकार्थव्यतिरेकेण लौकिकार्थाभिधानस्याशक्यत्वात् प्रमाणान्तराविषयत्वाच्च तत्रार्थापत्तेरविषयत्वाभिधानात् । अवयवानां तथा कल्पनया अनुपदमेवापर्यवसानादेवान्विताभिधानसमय एवोपपादकार्थस्वीकारात् । अर्थापत्तिस्त्वभिहिता । ईदृक् चेष्टानुपपत्ताविति विशेष इति दिङ्मात्रम् ।

'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्याद्यर्थापत्तेरुदाहरणम् । अन्विताभिधानसमर्थत्वात् पदानां नाभिधानेऽनुपपत्तिः । अभिहितार्थे पीनत्वे त्वनुपपत्तिः । सा तु रात्रिभोजनकल्पनया शान्ता । दृष्टार्थापत्तेरुदाहरणं तूक्तमेवेति । अर्थापत्तिलक्षणे उपलब्धपदोक्त्यैव श्रुतार्थापत्तिरपि संगृहीता; श्रुतस्याप्युपलब्धत्वाविशेषात् । भाट्टास्तु 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यादौ प्राथम्यात् लाघवाच्च 'रात्रौ भुङ्क्ते' इत्यादिशब्दकल्पनामाहुः । तन्न; अर्थस्यैवोपपादकत्वात्

तत्कल्पनामात्रादनुपपत्तिशान्तेः। "अग्नये जुष्टं निर्वपामि" इत्यादिमन्त्रे सौर्यादि-विकृतौ सूर्येत्यादिपदाध्याहारस्तु मन्त्रस्याभिधानद्वारैवार्थप्रकाशकत्वात् समवे-ताभिधानसमर्थपदस्यैवाकाङ्क्षितत्वात् क्रियत इति सर्वं सुस्थम्।

इत्यर्थापत्तिनिरूपणम्

यथार्थगमिकाभीष्टा रामावरजयोगिनः।
एषा प्रमाणसरणिर्व्यञ्जिता गहना शुभा॥

इति
श्रीमदात्रेयनाथसूरिसूनुना मेघनादारिसूरिणा विरचिते
नयद्युमणौ
प्रमाणनिरूपणम्

## १२. अथ प्रमेयनिरूपणम्

अभिवन्द्यात्रिनाथादीन् गुरून् रामानुजान् ।
विशदीकृतवेदान्तसदर्थं करुणालयम् ॥

आञ्जनेयं जिताशेषवैरिणं सर्ववेदिनम् ।
पद्मालयां हरिं लीलाविनिर्मितजगत्त्रयम् ॥

हयाननं च सर्वार्थतनुं कमललोचनम् ।
मानप्रमेयमधुना व्यज्यते सुखवित्तये ॥

यद्यपि सर्वार्थविशिष्टत्वाकारेण परमात्मैवैकः प्रमेयम्, तथापि विशेषण-विशेष्यत्वाकारभेदात् प्रमेयभेदोऽपि । प्रमेयश्च पदार्थः । स च द्रव्यगुणकर्म-भेदात् त्रिविधः । तत्र गुणवत् द्रव्यम् । गुणवत्पदात् गुणरहितगुणकर्मव्युदासः । तच्च चिदचिद्भेदात् द्विविधम् । चिच्च पुनः परमात्मजीवज्ञानभेदात् त्रिविधम् ।

परमात्मा च श्रुत्येकगम्यो जगदाख्यसमस्तवस्त्वेककारणं समस्तहेयर-हितः सत्यज्ञानादिस्वरूपगुणः समस्तचिदचिद्देहोऽप्राकृतनित्यविग्रहो लक्ष्मीपतिः नित्याप्राकृतस्थानविशेषे मुक्तजनभोग्यः साङ्गानुसंधानात्मकविद्यागम्यो नारायण एव । तत्र श्रुतिगम्य इति श्रुतेः कार्यादिपरत्वव्युदासः । श्रुतिगम्यत्वं च वाक्यार्थप्रतीतिसिद्धत्वम् । तदेकगम्यत्वोक्त्यानुमाननिरासः । स च वक्ष्यते । जगदाख्यवस्त्विति भेदापारमार्थ्यजगदपारमार्थ्यव्युदासः । एककारणत्वोक्त्या जगतः सत्त्वादिरूपेण निमित्तसमवाय्यसमवायिरूपेण च नानाकारणत्वपक्ष-निरासः । जगतः प्रवाहानादित्वनिरीश्वरत्वनिरासश्च । समस्तहेयरहित इति तस्याविद्यादिहेयसंबन्धपक्षनिरासः । सत्यज्ञानादिस्वरूप इति शून्यज्ञा-नादिपरपक्षनिरासः । सत्यादिगुणोक्त्या निर्विशेषत्वनिरासः; जीवत्वादिनिरासश्च । समस्तचिदचिद्देह इति जगतः स्वरूपेण परमात्मत्वनिरासः ।

ननु न तस्य श्रुत्येकगम्यता । महीमहार्णवादेः सावयवत्वेन कार्यत्वात् सोपादानत्वात् कार्यकारणसंप्रदानप्रयोजनाभिज्ञकर्तृकत्वानुमानेन पक्षधर्म-ताबलादीश्वरसिद्धिरिति—तन्न; विकल्पासहत्वात् । किमेककर्तृकत्वं

सिषाधयिषितम्? उत सकर्तृकत्वमात्रम्? आद्ये कार्यत्वस्य नानाकर्तृकनरेन्द्रभवनादिषु व्यभिचारादनैकान्त्यम् । नानाकर्तृकतयापि परिदृश्यमानघटादिदृष्टान्तश्च साध्यविकलः । द्वितीये जीवानामेव कर्तृत्वात् सिद्धसाधनता ।

न चेदानींतनजीवानां न तन्निर्माणशक्तिनिश्चयः; इदानींतनेष्वपि कार्यनिर्माणकार्यवैचित्र्यदर्शनात्; कालक्रमेणानेकेषामतिविचित्रनरेन्द्रभवनादिनिर्मातृत्वदर्शनात् शक्तिविशेषनिश्चयात् । शक्तिश्च विशिष्टपुण्यादुपपन्ना । एवं दर्शनानुगुणानेककर्तृत्वे न कर्तृकल्पनागौरवम् । कल्पनायामपि धर्म्यन्तरकल्पनातो नानात्वधर्मकल्पना युक्ता । एवं कार्यवैचित्र्याद्विशिष्टशक्तिज्ञानकर्तृत्वं जीवानामेवेति न तदतिरिक्तानुमानम् । शक्त्यादिवैचित्र्यस्य पुण्यादिमूलतया जीवेष्वेव दर्शनान्न कर्मादिरहितकर्तृत्वानुमानम् । एतेनेच्छाया अपि कर्ममूलता सिद्धा । कर्मरहितत्वे न मनःसंबन्धो मुक्तवत् कर्तृज्ञानाद्युदयश्च ।

न च धर्मिणि पक्षदृष्टसर्वधर्मानुमानेऽतिप्रसङ्गादनुमानोच्छेदः—कार्योपयोगित्वेन ज्ञानविशेषादेरपि सिद्धत्वानुमानात् ।

एतेनाश्रयासिद्धिधर्मग्राहकप्रमाणविरुद्धयोरन्यतरदित्युक्तिर्निरस्ता । कर्त्रङ्गीकारात्, धर्मिग्रहणसमय एव यथादर्शनं कर्ममूलज्ञानादिमद्धर्मिग्रहणाच्च । कर्मरहितधर्मिपरिच्छेदे हि तद्ग्राहकप्रमाणविरोधः । किंच मह्यद्याश्रयस्वीकारेण जीवकर्तृकत्वसाधनान्नाश्रयासिद्धिः ।

किंच उत्पत्तावदृष्टस्याप्युपकरणत्वात् कुलालादेश्च न तज्ज्ञानम् । उपकरणाद्यज्ञाने बालस्यापि भ्रान्त्यादेरपि कार्यकर्तृत्वं चेति साध्यवैकल्यं च दृष्टान्तस्य । नाप्यसिद्धिर्हेतोः । एतेन 'अदृष्टं चेतनाधिष्ठितमेव सुखादिकार्यकरम्; अचेतनत्वात्; वासीवत्' इत्यनुमानं निरस्तम्; पूर्वोक्तरीत्या क्षेत्रज्ञानामेव तदधिष्ठानोपपत्तेः ।

न च तेषामदृष्टरूपशक्त्या कार्याज्ञानात् तदधिष्ठानम् । न च समवायादपि तत्; अतद्गुणत्वात् । न च संयुक्तसमवायादपि तत्; सर्वजगतां संयोगानुमतेः । सर्वगता हि जीवाः । अदृष्टं च तद्गुणः । किंच अधिष्ठानाद्वास्यादेः क्रियाश्रयत्वसंपत्; न गुणादृष्टस्य तदाश्रयत्वमिति न वृत्तिः ।

न च फलदानाभिमुख्यं तत्प्रवृत्तिः; आभिमुख्यस्यावस्थाभेदत्वेनाधिष्ठानानपेक्षत्वात् । न च घटाद्यवस्थावत् तस्याः कार्यत्वे सकर्तृकता; अनिष्ठानानुपपत्तेरुक्तत्वेन देशादिमात्रादेव तदुपपत्तेः । न चेश्वरस्येच्छामात्रात् तदधिष्ठानम्; कुलालादिषु दर्शने परसमवेतगुणस्य तावन्मात्रात् प्रवृत्त्यनुपपत्तेर्दर्शनाच्च । न चेश्वरस्येच्छादेहरहितस्य । देहित्वे चानित्यत्वादिदोषः । अन्यद्भाष्यादौ ।

अतः श्रुत्येकसमधिगम्यता । देशादिप्रतिपन्नोपाधावबाधात् समस्तचिदचिद्वस्तुनः पारमर्थ्यमिति मिथ्यात्वशून्यत्वक्षणिकत्वनिरासः तत्तद्भाष्यादौ प्रपञ्चितो द्रष्टव्यः ।

ननु जगतो न ब्रह्मैककारणत्वोपपत्तिः; निमित्तादिभेदात् कार्योत्पत्तिदर्शनादिति—तन्न । सर्वशक्तित्वेन श्रुतस्य समस्तविसजातीयतया सर्वोपपत्तेः । न च दृष्टविरोधे श्रुतेरतत्परत्वम् । श्रुत्येकगम्ये श्रुतिविरोधग्रहणे प्रमाणाभावात् । विरोधे सति हि अतत्परता । कुलालादिकारणानां भेदस्त्वशक्तिप्रयुक्तः; न तु कारणत्वप्रयुक्तः । वस्तुतस्तु घटादेरपि सर्वशरीरि ब्रह्मैकमेव कारणम्; "यतो वा इमानि" इत्यादौ जायमानसर्वपदार्थानां सर्वप्रमाणेन तस्य कारणत्वप्रयुक्तत्वश्रवणात् । यत इति पञ्चमी सर्वाकारकारणत्वपरा । अत एव हि "तदात्मानं स्वयमकुरुत" इत्यादौ तस्यैवोपादानत्वादिश्रवणम् ।

न च तस्य करणाभावात् कारणत्वानुपपत्तिः;—सर्वशक्तित्वादेव । इच्छायां देहादिकारणाबाधश्च; "स वराहो रूपं कृत्वा" इत्यादिश्रवणात् । "इच्छागृहीताभिमतोरुदेहः" इत्यादिस्मरणाच्च । लीलाप्रयोजनत्वादेव न प्रयोजनाभावचोद्यम् । विकारापुरुषार्थयोस्तस्य चिदचिदात्मकदेहांशगतत्वान्न तद्भाक्त्वचोद्यम् ।

न च वेदान्तवेद्यकारणवस्तुनः सिद्धस्वरूपत्वेन प्रवृत्त्याद्यनन्वयान्न पुरुषार्थत्वम्; तदन्वयिन एव पुरुषार्थत्वप्रतीतेरिति—"आनन्दो ब्रह्म" "रसं ह्येवायं लब्ध्वा" इत्यादौ तस्य स्वतः पुरुषार्थत्वश्रवणात् । न च प्रधानतत्कार्येष्वन्यतमस्य जगत्कारणत्वम्; कारणवाक्येषु श्रूयमाणेक्षणादिगुणानन्वयात् । स चेक्षत्याद्यधिकरणसिद्धः । न च कटादिकार्याणां तत्कारणसालक्षण्यदर्शनात् जगतश्च सुखाद्यात्मकत्वोपपत्तेः तत्सलक्षणसुखाद्यात्मकसत्त्वादिमयस्य प्रधानस्य कारणत्वम्; गोमयवृश्चिकादौ तत्सालक्षण्यस्य व्याप्तिभङ्गात् । वस्तुतस्तु

स्थूलसूक्ष्मचिदचिद्देहिब्रह्मण एव कार्यत्वात् कारणत्वाच्च न वैलक्षण्यम् । ब्रह्मात्मकप्रधानकारणत्वाच्च जगतः तत्कारणत्वोपपत्तिः ।

न च साम्यावस्थापन्नसत्त्वादिः प्रधानम्; "सत्वं रजस्तम इति गुणाः" इत्यादौ गुणत्वप्रतीतेः द्रव्यकारणत्वानुपपत्तेः । द्रव्यत्वेऽपि तेषां निरवयवत्व-सर्वगतत्वयोरभिमतत्वात् सर्वदा कार्योत्पत्तिरनुत्पत्तिर्वा स्यात् । न च सहकारिवशात् कादाचित्कत्वं कार्यस्य; पुरुषाधिष्ठानातिरेकेण सहकार्यन्त-रानभ्युपगमात्; पुरुषस्य च व्यतिरेकेणाधिष्ठानान्तराभावात् । तस्य च सर्वदा सर्वगतत्वात् नित्यसृष्ट्याद्यापत्तेस्तदवस्थत्वात् । सत्त्वादेश्च निरवयवत्वे संयोगानुपपत्तेः स्थूलकार्यानारम्भात्; लोके च सावयवानामेव कार्या-रम्भकत्वदर्शनात्, सावयवत्वे च घटादिवदनित्यत्वात् । कारणानां निरवयवानां संयोगवत्त्वोपपत्तावपि परमाणुपरिमाणानतिरेकात् न स्थूलकार्यारम्भः । तदारम्भकत्वोपपत्तावपि तेषु कादाचित्ककर्मोत्पत्त्यनुपपत्तेः नित्यसृष्ट्यसृष्ट्य-न्यतरनियत्यापातः । न च जीवानामदृष्टादीश्वरतया तेषु क्रियोत्पत्तेः कादाचित्कत्वम्; अदृष्टस्य जीवसमवेतत्वेनाधिष्ठानानुपपत्तेरुक्तत्वात् ।

न चादृष्टवज्जीवसंयुक्ताणुसंयुक्तयोगात्तदधिष्ठानोपपत्तिः; संयुक्तद्रव्य-समवेतगुणाधिष्ठानप्रवृत्त्योरदर्शनात् । अदृष्टस्यार्थस्य कल्पनायामपि न युगपत्सृष्टिप्रलययोरुपपत्तिः; सर्वस्य तद्धेतुसर्वगतादृष्टैकरूप्याभावात् । न ह्यसंकेतपूर्वयुगपत्क्रियमाणादृष्टैकरूप्यम् । सृष्टपृथिव्यादिस्थायिपदार्थस्य क्रियमाणकरिष्यमाणादृष्टवज्जीवानामपि भोग्यत्वादि । असददृष्टाधिष्ठानस्य त्वनुपपन्नत्वमित्यादि द्रष्टव्यम् ।

कार्यमपि कारणादनन्यदिति सत्कार्यवादिसिद्धम् । अतः श्रुत्येकसमधि-गम्यब्रह्मैककारणत्वमेव युक्तम् ।

वेदान्तानां सिद्धार्थपरत्वे जगतः प्रवाहानादित्वनिरीश्वरत्वनिरासौ सिद्धौ; श्रुतस्यैव प्रमाणत्वात् । श्रूयते च तथैव—"इदं वा अग्रे नैव किञ्चनासीत्" "पतिं विश्वस्य" इत्यादौ युगपत्सृष्ट्यादिरीश्वरश्च । तस्य हेयराहित्यं च "निष्कलं निष्क्रियं शान्तम्" इत्यादौ । "आनन्दो ब्रह्म" "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादौ च सत्यज्ञानादिस्वरूपगुणत्वम् । एवमविद्यादि-संबन्धे श्रुत्यादिविरोधः स्पष्टः ।

ननु न तद्विरोधः "एकधैवानुद्रष्टव्यः" "नेह नानास्ति किंचन" "एकमेवाद्वितीयं ब्रह्म" इत्यादिभिरखण्डैकरसत्वप्रतीतेः तदविरोधाय "सत्यं ज्ञानम्" इति वाक्यमखण्डैकरसार्थपरमेवेति तस्यैवाविद्याश्रयत्वम् । न च सत्यादिपदानां सामानाधिकरण्यात् सत्यादिविशिष्टार्थपरता ; 'सोऽयं देवदत्तः' इति वाक्यवत् सामानाधिकरण्यस्याखण्डैकार्थपरत्वात् ।

तदङ्गीकारेऽपि न तद्वाक्यार्थभेदभङ्गः । प्रपञ्चप्रतिभेदस्य व्यावहारिकधर्मतया प्रतीयमानस्य निराकर्तुमशक्यत्वेऽपि शङ्क्यमानदोषप्रत्यक्षादेर्व्यावहारिकभेदपदार्थविषयत्वेनापि सावकाशत्वादनन्यथासिद्धानन्यपरसत्यज्ञानादिवेदान्तवाक्यानामखण्डैकरसत्वमेव ।

यद्यपि प्रतियोग्यपेक्षो भेदः प्रमाणानवसेयः, तथापि यावदेकात्मबोधं साक्षिवेद्यतया सोऽस्त्येव । एवंच भेदस्यात्यन्तापह्नव एव । न च सर्वव्यवहारोच्छेदः । यद्यपि प्रत्यक्षस्य सन्मात्रविषयत्वमिष्टम्, तथापि तदज्ञानोपरमे वस्तुनो निरस्तनिखिलव्यवहारत्वाद्विषयविषयित्वानुपपत्तिः ।

न चैतावता भेदस्य वास्तवत्वम्; प्रत्यक्षस्य पूर्वोक्तविधया अविधायकत्वात् । अविद्यातो भेदसिद्धिश्चेति न तत्स्वरूपापलापः । प्रत्यक्षस्य सन्मात्रविषयत्वेऽप्यज्ञानविशिष्टवस्तुविषयत्वात् नाज्ञानोपमर्दकत्वमिति तन्न तत्त्वैकविषयम् । आगमस्तु विरुद्धपदार्थसामानाधिकरण्याभिधानमुखेन समस्तोपाधिमुक्तं वस्तु लक्षयन्नान्तरीयकतया तदज्ञानतत्कार्यं निवर्तयतीति सत्यमित्यादिवेदान्तवाक्यानामेवाद्वैतवस्तुपरत्वम् ।

अयमर्थः—"एकमेवाद्वितीयं ब्रह्म" इत्यादौ सजातीयविजातीयस्वगतनानात्वनिरासेनाखण्डैकरसं ब्रह्मेति प्रतिपाद्यते । एवंच न गुणतोऽपि सद्वितीयत्वम्; अद्वितीयश्रुतिविरोधात् निर्गुणत्वश्रुतिविरोधाच्चेति वेदान्तानां विरुद्धपदार्थसामानाधिकरण्येनोपाधिविनिर्मुक्तब्रह्मपरत्वं सामानाधिकरण्यमुपन्यस्य निरूप्यते ।

ननु न सिद्धार्थव्युत्पत्तिरिति न ब्रह्मपरत्वमिति—तन्न । 'पुत्रस्ते जातः' इत्यादिवाक्यश्रवणानन्तरं श्रोतुर्मुखविकासादिलिङ्गाद्धर्षमनुमाय ज्ञातपुत्रजन्मन एव तद्धेतुत्वमनुमायाविशेषेण तदर्थबोधकत्वमानन्तर्यात् अवधार्य पुनरावापोद्धाराभ्यां सर्वपदानां व्युत्पित्सोः सिद्धार्थव्युत्पत्तेः । न च सुखप्रसवादिहर्षहेत्वानन्त्यान्न पुत्रजन्मन एव तद्धेतुत्वनिश्चय इति—गवानयनादि-

प्रवर्तकवाक्येष्वपि श्रोतुरानुषङ्गिकव्यापारसंभवधीतस्तदनिर्धारणापत्तेः समत्वात् । अथ तत्पदानामन्यत्रावापोद्धारदर्शनात् अर्थविशेषनियमकल्पनेति, तत् प्रकृतेऽपि समम् ।

न च 'सोऽयम्' इत्यादि वाक्यं विशिष्टार्थपरम्; तस्य तादृगर्थप्रतिपादनायोग्यत्वात् । न लक्षणा दोषः; स्ववाच्यविशेषांशाविवक्षया प्रधानांशप्रतिपादनात् । न चाविरुद्धानामेकत्रान्वययोग्यत्वात् तत्पदानां विशिष्टार्थपरत्वम्—अविशेषेण विवक्षायामेकविशेषणविशिष्टतया प्रतिपाद्याकारस्यापि पदान्तरेणापि विशेषणान्तरविशिष्टतया प्रतिपाद्यतापत्तेः । अन्योन्यनिरपेक्षविशिष्टत्वाकारप्रतिपादने शास्त्रे एकार्थाप्रतिपादनान्न सामानाधिकरण्यपरत्वम् । एकार्थवृत्तौ हि सामानाधिकरण्यम् । न हि विशिष्टत्वाकारभेदप्रतिपादकघटपटपदयोः सामानाधिकरण्यम् । अतः सर्वत्र सामानाधिकरण्ये पदार्थस्वरूपमात्रविवक्षा । एवमद्वैततात्पर्यानुरोधात् सामानाधिकरन्यानुरोधाच्चाद्वैतविरोधात् ब्रह्मणोऽविद्याश्रयत्वम्; अविद्यातदाश्रयत्वयोर्मिथ्यात्वान्न तस्यावद्यत्वं चेति ।

मैवम्; "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च", "नित्यो नित्यानाम्" इत्यादिभिः गुणतो द्वैतप्रतीतेः जीवादिभेदप्रतीतेश्च वेदान्तानामखण्डैकार्थपरत्वाभावात् । न च श्रुतीनामासामविद्योपहितब्रह्मविषयत्वम्; "एकधैवानुद्रष्टव्यम्" इत्यादेरपि तदविशेषात् । तासामनुपहितब्रह्मविषयत्वे तु तस्य घटादिवज्जडत्वम् ।

उपहितानुपहितव्यवस्थायां च न प्रमाणम् । अद्वैतवाक्यानां तत्र प्रामाण्ये तेषामखण्डार्थपरत्वे च सगुणवाक्यानामुपहितविषयत्वम्, एतत्सिद्धौ तत्सिद्धिरित्यन्योन्याश्रयणं च ।

न च पदानां सामानाधिकरण्ये स्वरूपमात्रपरत्वम्; स्ववाच्यगुणांशांशाविवक्षायां प्रमाणाभावात् । न च 'सोऽयम्' इत्यादौ विरुद्धविशेषणद्वयविशिष्टत्वप्रतिपादनानुपपत्तिरेव तत्र प्रमाणम्; स इति पदस्यातीतकालसंबन्धिस्मारकत्वात् देवदत्तपदस्य नामिविशेषपरत्वादयमिति पदस्य च तत्स्मार्यस्य पुरोवर्तित्वादिसंबन्धनिर्देशपरत्वात् तन्निर्देशानां संभूय नानाविशेषणविशिष्टैकवस्तुप्रतिपादकत्वाद्विशिष्टवस्तुधीरिति विशेषणयोस्तद्विशेष्ययोस्तद्वाचकयोस्तत्प्रत्यक्षयोस्तत्प्रत्यभिज्ञाप्रत्यक्षस्य च समुच्चारणात् तन्निर्देशस्यैकबुद्ध्यारोहणात् 'सोऽयम्' इति प्रत्यभिज्ञाप्रत्यक्षेऽपि स्मार्यानुभूयमानविशेषणविशिष्टैकवस्तुधीरिति

न कश्चिद्विशेषः तद्वाचकतत्प्रत्यययोः । प्रत्यभिज्ञाप्रत्यक्षस्य भूतादिविशेषण-विशेष्यविशिष्टैकार्थपरता चाङ्गीकार्या स्थायिपदार्थवादिभिः । अन्यथा न स्थायिवस्तुनि प्रमाणमिति क्षणिकपक्षस्य विजयः ।

न च विशिष्टपरत्वे पदान्तरेण विशिष्टतया प्रतिपाद्याकारस्यैव विशेषणान्तरविशेष्यतया प्रतिपाद्यत्वप्रसक्तिः । 'गामानय दण्डेन देवदत्तानेन मार्गेण' इत्यादिवाक्येष्वपि तत्त्वप्रतिपादनप्रसक्तेः अविशेषात्, गवानयनयोरन्यतरत् प्रसिद्धपदैरर्थान्तरविशिष्टतया प्रतिपाद्यते । समानाधिकरणपदानीव वाक्यगतपदान्यप्येकार्थपराण्येव । "अर्थैकत्वादेकं वाक्यम्" इति हि नयविदः । अथ गुणानां च परस्परासंबन्धाद्विशिष्टाकाराणामप्यसंबन्धे तद्विशेषण-विशिष्टस्यैकस्यैव वाच्यत्वम्; तर्हि समानाधिकरणपदानामपि तदविशिष्टम् । किंतु वाक्यगम्यस्तु विशिष्टैकार्थो वाक्ये । सामानाधिकरण्यगम्यं तु तदर्थैक्यं सामानाधिकरण्ये । पदानि तूभयत्र विशिष्टार्थपराण्येव । द्वितीयान्तादिकारकप्रतिपाद्यं सामानाधिकरण्ये; अन्यत्र क्रियाकारकपदप्रतिपाद्यमित्येतावन्मात्रमेव विशेषः । समानाधिकरणप्रतिपाद्यस्य तु प्रधानतया वा गुणतया वा क्रियान्वयः पश्चात् ।

न चान्योन्यनिरपेक्षं पदानां व्युत्पत्तेर्विशिष्टार्थपरत्वे घटपटादि-शब्दवन्नैकार्थपरत्वमिति—गवानयनादिवाक्यानामपि तदविशेषापत्तेः । अथ तत्र विशेष्यैक्यादैक्यम्, तर्हि तदन्यत्रापि समानम् । एवंच पदानां व्युत्पत्तिसिद्धार्थापरित्यागलाभो मुख्यार्थलाभश्च । पक्षान्तरे तु तद्वैपरीत्यम् । वाच्यगुणांशाविवक्षायामपि त्याग एव । प्रधानांशस्वरूपपरत्वेऽपि लक्षणा च; विशिष्टवाच्यांशत्यागान्नान्तरीयकस्वरूपपरत्वाङ्गीकारात् । स्वरूपं चैकपदमात्र-लभ्यमिति पदान्तरवैयर्थ्यं च । उपलक्षणत्वेऽपि तदविशिष्टम्; स्वरूपमात्र-परत्वेनोपलक्ष्याकारभेदानङ्गीकारात् । तदङ्गीकारे च नाखण्डैकार्थपरता । एवं मिथ्यावाद्येकदेशिपक्षनिरास उन्नेयः ।

अपरे तु तदेकदेशिनो लक्षणामभ्युपगम्यैवाखण्डार्थपरतामाहुः । तथाहि—'सोऽयम्' इत्यादौ भूतवर्तमानकालसंबन्ध्यैक्ये प्रमाणाभावात् तत्कालविशिष्टस्य वर्तमानकालविशिष्टत्वानुपपत्त्या लक्षणैव । 'सोऽयम्' इत्यादिपदानां च स्ववाच्यांशमात्रोपक्षयान्नैक्ये प्रामाण्यम् ।

न च तद्विशिष्टत्वाकारयोः परस्परासंबन्धेऽपि रूपरसादिसंबन्ध्यैक्यवत् कालद्वयसंबन्ध्यैक्योपपत्तिः; एकदेशाद्युपाधौ रूपरसादेः कालयोरिवान्यतराभावनियत्यभावात् । न च बालत्वयुवत्वादेरिव पर्यायात् तयोर्विशेषणत्वम्; बालत्वादिसंबन्धव्यतिरेकेण प्रत्यभिज्ञया तदैक्यसिद्धेः । इह तु कालद्वयसंबन्धव्यतिरेकेण न संबन्ध्यैक्ये निश्चयोपाय इति ।

अतः समानाधिकरणपदवद्वाक्यस्यापि विधिमुखेनाप्रामाण्यानास्कन्दिताबाधितप्रतीतिजनकत्वेन प्रामाण्याच्च कालद्वयनामधेयोपाधिसंबन्धनिमित्तदेवदत्तगतानेकत्वभ्रान्तिनिवर्तनात् तत्स्वरूपमात्रसमर्पणानुपपत्त्या लक्षणैवात्र स्वीकार्या ।

एवं "सत्यं ज्ञानम्" इति वाक्यानामपि । तत्र ब्रह्मेति पदाल्लक्ष्यं निर्दिष्टम् । सत्यमित्यनेन मिथ्यात्वभ्रान्तेः निवृत्तिः; ज्ञानमिति जडत्वभ्रान्तेः; अनन्तमिति व्यवच्छेदभ्रान्तेः । एवं तत्तद्भ्रान्तिनिवर्तनान्न पर्यायता च ।

अतः "ब्रह्मविदाप्नोति परम्" इत्याद्युक्ते ब्रह्मस्वरूपमात्रस्य बुभुत्सितत्वात् "एकधैवानुद्रष्टव्यम्" इत्यादावेकरसत्वश्रवणात् "यतो वाचो निवर्तन्ते" इति तस्य वाच्यत्वनिषेधाच्च वाक्याप्रामाण्यनिरासाय सर्वपदानां ब्रह्मणि लाक्षणिक्येव वृत्तिरिति ।

तदप्यसत्; गवानयनादिवाक्यानां प्रामाण्यवत् 'सोऽयम्' इत्यादिपदानामेव तदैक्यप्रमाणत्वात् । 'सोऽयम्' इति पदयोः स्ववाच्यभूतादिकालविशिष्टार्थमात्रोपक्षयो गामानयेत्यादिवत्, अविशेषात् । दोषसाम्यं गवानयनादिविशिष्टगवाद्यैक्यार्थपरत्वानङ्गीकारे, तदुच्चारणार्थापरित्यागेन अपर्यायगुणविशेषणवाच्यनेकपदानां तत्तद्विशिष्टैकार्थपरत्वेन वर्तमानत्वात् । तज्ज्ञानं चाप्यपर्यायैकपदविभक्त्या निर्देशात् । अत एव सामानाधिकरण्यादैक्यसिद्धौ कालद्वयविशिष्टत्वधीरप्युपपन्ना; विशिष्टैक्यपरत्वात् सामानाधिकरण्यस्य । "भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्" इति हि तज्ज्ञोक्तिः । भिन्नाः याः प्रवृत्तयः, तासां निमित्तानि हेतवः भिन्नप्रवृत्तिनिमित्तभूताः शब्दाः । तेषां सतामेकस्मिन्नर्थे वृत्तिः वाचकत्वेन वर्तमानत्वम् ।

भिन्नस्ववाच्यविशिष्टांशापरित्यागेनानेकदेशज्ञप्तौ वा विरोधः, अनेककाल ज्ञप्तौ वेति विकल्पे—नाद्यः; क्रमेण देशभेदात् एकदेश एवानेककालप्रतीतिवत्

प्रतीत्यविरोधात् द्वयविशिष्टतया प्रत्यभिज्ञायामिव प्रतीत्युपपत्तेरित्युक्तत्वात् । न च कालद्वयसत्ता, न च युगपदिति वा सामान्यतो विरुध्यते । तद्विशिष्टत्वे च देश एवोपाधिः । देशस्योपाधित्वं युक्तम्; 'पूर्वस्मिन् देशे दृष्ट एवेदानीमपि दृश्यते' इत्यादौ तथा दर्शनात् । देशविशेषणत्वे च काल एवोपाधिः । कालभेदादेकदेशस्यापि विशेषणत्वाविरोधः । एवं देशभेदात् विरुद्धकालविशेषोपपत्तिः । एकदेशस्यापि विरुद्धकालविशेषणत्वे निर्वाहकोपाध्याकारभेदात् स्वरूपेण तदुपपत्तिः । आकारभेदश्चालोकसंबद्धत्वादिरिति दिक् ।

अथवा देशकालयोः रूपरसादीनां द्रव्यविशेषणत्व इव स्वरूपनिर्वाहकतास्तु । रूपादयो हि रूपिग्रहणनिर्वाहकाः स्वग्रहणनिर्वाहकाश्च । सायं तत्राभूत्, 'प्रातरत्र, भविष्यति काञ्चीदेशस्थः' इत्यादावन्यानपेक्षयापि विशेषणत्वप्रतीतेः । "देशद्वयसंबन्धस्तु कालभेदेन परिहृतः" इति भाष्यकारोक्तिस्तु 'इदानीमत्रस्थः, तदानीं तत्रस्थः' इत्यभिप्राया । एवंच पदानां न मुख्यार्थत्वविरोधः ।

न च कालद्वयादिसंबन्धहेतुको देवदत्तभेदभ्रमः; परस्परान्वययोग्यार्थवाचकपदानामेकव्युत्पत्तेः । प्रत्यभिज्ञायामिव 'सोऽयम्' इत्यादिपदार्थानां नान्वयविरोध इत्युक्तम् । एवं च न तन्मुखेन प्रामाण्यहानिर्वाक्यस्य । लक्षणाबीजं च न वाक्यप्रामाण्यम्; किंतु वाच्यान्वयानुपपत्तिरेव तत्संबन्धिलक्षणाबीजम्; गङ्गाघोषादिवाक्ये तथा व्युत्पत्तेः । 'सोऽयम्' इत्यादौ न विशिष्टार्थपरत्वेऽनुपपत्तिरित्युक्तम् ।

एवं सत्यज्ञानादिवाक्येष्वपि न सत्यादिपदनां ब्रह्मणो मिथ्यात्वादिभ्रान्तिनिवृत्तिपरत्वम्; एतद्वाक्यव्यतिरेकेण ब्रह्माद्व्यधर्म्यप्रतीतेस्तद्गतमिथ्यात्वव्यावृत्तिरूपधर्मविषयतया ज्ञानोत्पत्त्यनुपपत्तेः । धर्मिप्रतीतौ हि धर्मान्तरसत्तातन्निषेधयोरन्यतरोपपत्तिः ।

न च स्वयंप्रकाशत्वाद्धर्मिप्रतीतिः, ब्रह्मस्वरूपबुभुत्सया तद्वाक्यावतारोत्त्यनुपपत्तेः । स्वयं प्रकाशमानस्य किं प्रमाणान्तरेण ? स्वयंप्रकाशत्वे च तत्तद्व्यावृत्तेः स्वरूपत्वे धर्मत्वे च तस्या अपि तत एव प्रकाश्यत्वोपपत्तेः न तदर्थतयापि लक्षणवाक्योपपत्तिः ।

वाक्यस्य ब्रह्मस्वरूपपरत्वे तस्य प्रमेयत्वम् । ततो घटादिवज्जडत्वापत्तिः । व्यावृत्तेः स्वरूपत्वे चैकपदमात्रलभ्यत्वात् पदान्तरवैयर्थ्यम् ; धर्मत्वे च ब्रह्मणः सविशेषत्वम् ।

सत्यत्वादिविशिष्टाकारप्रतिपादने तु न काचिदनुपपत्तिः । ततः परिणामित्वेनासच्छब्दवाच्यप्रधानादिव्यावृत्तिश्चार्थसिद्धा । ब्रह्मणः स्वयंप्रकाशत्वेऽपि ततो जीवानां भिन्नत्वात् तान् प्रत्यप्रकाशमानत्वात् तेषां तत्स्वरूपबुभुत्सया लक्षणवाक्यावतारश्च युक्तः । स्वरूपं सत्यादिगुणविशिष्टमेव ; निर्धर्मकस्य प्रमाणाविषयत्वात् ।

न च तत्स्वरूपमात्रस्यैव बुभुत्सितत्वान्न गुणविशिष्टाकारबुभुत्सेति— "ब्रह्मविदाप्नोति परम्" इत्युक्ते ब्रह्मशब्दमात्रस्य बृहत्त्वबृंहणत्वयोग्यार्थपरतयैव व्युत्पन्नत्वाद्विशिष्टार्थस्यैव बुभुत्सितत्वात् । अत एव ह्यनन्तादिपदैश्च स्वरूपगुणबृहत्त्वाद्यभिधानम्, "तस्माद्वा एतस्मादात्मनः" इत्यादिना बृंहणत्वाभिधानं च । सूक्ष्मचिदचितोः स्थूलाकारपरिणामहेतुत्वमेव हि बृंहणत्वम् । लोकेपि हि 'को गौः? सास्नादिमान् गौः' इति विशिष्टार्थविषय एव दृश्यते व्युत्पत्तिः । तथा व्युत्पत्तेरेव हि वेदेऽपि शब्दार्थधीः । केवलबुभुत्सायामप्यसाधारणस्वरूपविशेषैरेव स्वरूपस्य ज्ञाप्यमानत्वं दृश्यत इति नाखण्डार्थपरता कस्यापि शब्दस्य ।

शब्दमात्रं विशिष्टार्थपरमित्युक्तं भाष्यादौ ; न ब्रह्मव्यतिरिक्तं प्रत्यक्षादिप्रमाणसिद्धं बाध्यमानं मिथ्येति च । "नेह नानास्ति" इत्यादीन्यप्यब्रह्मात्मकनिषेधपराणि । "निष्कलम्" इत्यादीनि हेयसंबन्धनिषेधपराणि ।

एवं भास्करयादवप्रकाशमतयोरपि ब्रह्मण एवोपाधिसंबन्धाभ्युपगमादचिदाद्याकारपरिणामाभ्युपगमाद्ब्रह्मणोऽपि विकारादिप्रसक्तेः श्रुत्यादिविरोधः । एवं पक्षत्रयेऽप्यविद्यात उपाधितो वा परिणामतो वा ब्रह्मण एव जीवत्वे दुःखित्वं समानं दूषणम । ब्रह्माज्ञानपक्षे ब्रह्मण एव जीवत्वेनैक्यात् बन्धमोक्षाव्यवस्थादयोऽधिकाः । जीवाज्ञानपक्षे जीवस्य नाशादयः जीवनित्यत्वश्रुतिविरोधश्च । भास्करमतेऽपि तदविशिष्टम्; उपाधिगमनादौ सर्वगतब्रह्मणो गमनात् क्षणे क्षणे बन्धमोक्षादिप्रसक्तिश्च । नित्यतया भिन्नत्वेन च चिदचितोः प्रतिपादकश्रुतिविरोधश्चेत्येवमादि द्रष्टव्यम ।

एवं ब्रह्मणः स्वरूपेण जगत्तादात्म्ये महान् दोषः । आत्मशरीरभावे तु न कश्चिद्दोषः । ब्रह्मणो जगदन्तरात्मत्वं जगतश्च तच्छरीरत्वमन्तर्यामि-

ब्राह्मणादौ "जगत् सर्वं शरीरं ते" इत्यादौ च। शरीरत्वोपपत्तिः शरीरलक्षणे। शरीरत्वाद्रूपादिवत् परमात्मविशेषणत्वे 'शुक्लः पटः' इतिवत् "सर्वं खल्विदं ब्रह्म" "पुरुष एवेदम्" इत्यादौ परमात्मनो जगत्सामानाधिकरण्यव्यपदेशो मुख्यः। विकारपुरुषार्थयोश्चिदचिद्रूपदेहमात्रगतत्वान्न परात्मनि प्रसक्तिः। सुखदुःखयोश्च कर्ममूलत्वात् परमात्मनस्तदभावान्न जीववत् दुःखित्वम्; देहित्वावस्थायामेव "अनश्नन्नन्यो अभिचाकशीति" इति कर्मफलानशनश्रवणात्। "तस्योदिति नाम" इत्यादौ "न मां कर्माणि लिम्पन्ति" इत्यादौ च तस्य देहयुक्तावस्थायामेव कर्मसंबन्धाभावः प्रतीयते।

एवं स्वेतरसमस्तचिदचिद्देहित्वेन सर्वनियन्तृत्वाधारत्वशेषित्वानि च तस्य सिद्धानि; आत्मत्वस्य नियन्तृत्वादिरूपत्वात्; देहस्य च नियाम्यत्वादिरूपत्वात्।

सर्वनियन्तृत्वोक्त्या चान्यस्यानीश्वरत्वमपि सिद्धम्; नियन्तृत्वस्यैवेश्वरत्वरूपत्वात्। अत एव "न तस्येशे" इत्यादिश्रुतिः।

न च "ततो यदुत्तरतरम्" इत्यादौ जगत्कारणवस्तुनोऽधिकस्वप्रतीतिः—"पुरुषान्न परं किंचित्" इति जगत्कारणपुरुषाधिकवस्तुनिषेधात्। अतः "ततो यदुत्तरतरम्" इत्युपसंहार एव। एतच्च 'परमतः सेतून्मान' इत्यत्र सिद्धम्। एवं जगत्कारणवस्तुन एवेश्वरत्वम्; ईश्वराधिकं ब्रह्मेति पक्षो निरस्तः। यादवप्रकाशस्तु चिदचिदीश्वराणां ब्रह्मपरिणामित्वं वदन् ब्रह्मणस्तदाधिक्यमाह। मिथ्यावाद्यपि जीवत्वेश्वरत्वयोराविद्यत्वं वदन् तस्य तदाधिक्यमाह। ईश्वरस्य परिणामित्वाविद्यत्वयोः प्रमाणाभावाच्च तन्निरासः; तत्त्वावेदनपरत्वेनाभिहितान्तरादित्यादिविद्यास्वेवेशितृत्वादिश्रवणाच्चेत्यलमनेन।

तस्य देहित्वं च "आदित्यवर्णं तमसः परस्तात्", "य एषोऽन्तरादित्ये हिरण्मयः पुरुषः"

"समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः।
तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत्॥"

इत्यादिषु। आदित्यवर्णादेरनात्मधर्मत्वात् तच्छ्रुतीनां देहपरत्वं सिद्धम्। न च त्रिगुणात्मकप्रधानपरिणामविशेषः सः, "न भूतसङ्घसंस्थानो देहोऽस्य परमात्मनः" इति भूतसङ्घातत्वनिषेधात् तद्देहस्य; अस्त्रभूषणाध्यायादौ

"समस्ताः शक्तयश्चैताः" इत्यादौ च सविकारत्रिगुणाश्रयप्रधानाधारत्वप्रतीतेश्च । स नित्यः; "सदैकरूपरूपाय" इत्यादौ तद्रूपस्यैकरूप्यप्रतीतेः । कृष्णाद्यवतारेष्वपि तद्देहस्याविर्भावतिरोधानमात्रम् । न च कथं विकाराद्यभावे रामादिनानारूपत्वमिति; तद्देहस्यापि शक्तिमयत्वेन सर्वप्रकारेण दर्शनयोग्यत्वात् । तद्दर्शनमपि इच्छामूलमेव ।

यथा धृतराष्ट्रार्जुनाभ्यां तद्देहस्यैव विश्वाधारत्वादिदर्शनम् । न हि पूर्वमविश्वाधारतया दर्शनम् । सर्वदा तथात्वेनादर्शनं संसारिणां कर्मतिरोधानहीनज्ञानत्वात् । ईश्वरेच्छया तेषामपि शक्त्याधाने तद्दर्शनम्; यथा धृतराष्ट्रार्जुनयोः । अत एव हि—"दर्शयामास पार्थाय परमं रूपम्"इत्युक्तिः । सृष्टत्वे तु 'सृष्टवान्'इत्युक्तिः स्यात् । यथा विश्वाधाररूपस्य तिरोधानम्, तथा कृष्णाद्यवतारेष्वपि तिरोधानप्रकारविशेषाः शापमूलशरघातादयः । यथा रामावतारे सशरीरवैष्णवतेजःप्रवेशः "विवेश वैष्णवं तेजः सशरीरः सहानुगः" इत्युक्तः । अतः "अजायमानो बहुधा विजायते" इत्यादीन्यपि तद्रूपदर्शनपराण्येव; न तु संसारिवज्जन्मपराणि । अत एव हि—"जन्म कर्म च मे दिव्यम्" इत्युक्तिः । रामाद्यवतारेषु पुंगर्भात् निर्गमनं प्रवेशनं चादित्यादीनां स्वसमाराधनफलम् । परमव्योम्नि च विग्रहवानेव स्थितः; "क्षयन्तमस्य रजसः पराके" इत्यत्र वर्तमाननिर्देशात् । रजःशब्दोपलक्षितात् त्रिगुणात्मकप्रधानादस्मात् पराके परस्तात् । अस्येति विभक्तिविपरिणामः पञ्चमीत्वेन । "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इति श्रुतिस्तु कर्ममूलदेहाभावपरा; प्रियाप्रिययोः सह पाठात् । "अपाणिपादः" इत्यादौ च परमात्मनो देहाभावश्रुतिस्तु देहाभावेऽपि कार्यसाधनसामर्थ्यपरा ।

लक्ष्मीपतित्वं च "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ" "मह्रीं देवीं विष्णुपत्नीमजूर्याम्" इत्यादौ । लक्षणवाक्ये लक्ष्मीपतित्वोक्तिः भूमिपतित्वादेरुपलक्षणम् । "अस्येशाना जगतो विष्णुपत्नी" इति च भूमिपतित्वे प्रमाणम् । तद्वाक्यं भूमिपरमेव; पूर्वापरवाक्यपरामर्शात् तथात्वदर्शनात् । अतोऽत्र ह्रीशब्दो नीलापरः । अत एव "एवंभूतभूमिनीलानायक" इति भाष्यकारोक्तिः ।

न च विष्ण्वाद्यवतार एव तत्पतित्वम्;

"वैकुण्ठे तु परे लोके श्रिया सार्धं जगत्पतिः ।
आस्ते विष्णुरचिन्त्यात्मा भक्तैर्भागवतैः सह ॥"

इत्यादौ परमव्योमस्थस्य तत्पतित्वोक्तेः; परमकारणपरे "अद्भ्यः संभूतः" इत्यनुवाके तत्पतित्वश्रवणाच्च । न चैवं पत्नीवत्त्वे न संसारिवैषम्यम्; असंसारित्वस्वभावस्योक्तत्वात्; लीलार्थतया तत्सद्भावोपपत्तेश्च ।

नित्याप्राकृतस्थानविशेषवत्त्वं च "योऽस्याध्यक्षः परमे व्योमन्" इत्यादौ । न चास्य स्वर्गादिलोकपरता; अस्येति सृज्यसर्वप्राकृतपदार्थं निर्दिश्य तदध्यक्षपुरुषावासत्वेन तल्लोकाभिधानात्; परमशब्दविशेषितत्वाच्च । "अर्वाग् देवा अस्य विसर्जनाय" इति प्रकृतत्वात् सृज्यसर्वपदार्थप्रतीतिः । अप्राकृतत्वं च "तमसः परस्तात्" "रजसः पराके" इत्यादौ तस्य त्रिगुणातीतत्वश्रवणात् । "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इत्यध्वनः पारत्वश्रवणाच्च ।

"ऊर्ध्वलोकस्थितस्तेषां यो भित्त्वा सूर्यमण्डलम् ।
ब्रह्मलोकमतिक्रम्य तेन यान्ति परां गतिम् ॥"

"परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्"

इत्यादिना चतुर्मुखलोकात् परस्तादेव मुक्तगम्यस्य परमपदस्य प्रतीतेः परशब्दो न चतुर्मुखलोकपरः । तथा श्रीपाञ्चरात्रे "मानुष्यादच्छिद्रं परं ब्रह्म; नास्ति ज्ञेयमतः परम्" इत्यादिषु तस्याप्राकृतत्वादिकमुक्तम् ।

"सत्यं ज्ञानमनन्तं ब्रह्म, यो वेद निहितं गुहायां परमे व्योमन्" इति च ब्रह्मणः परमव्योमस्थत्वश्रवणाम् । न चास्य प्राकृतव्योमपरता, हृदयगुहापरता वा; परमपदविशेष्यत्वानुपपत्तेस्तयोः । "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इति परमव्योमस्थत्वाकारपरामर्शादप्येवम्; तत आकाशाद्युत्पत्त्यभिधानाच्च । एवं मुक्तैश्वर्यपरासु श्रुतिष्वपि तत्स्थानवैभवं द्रष्टव्यम् । तत्स्थानस्य नित्यता च तल्लोकगतस्यापुनरावृत्तिश्रवणाच्च । "तदक्षरे परमे व्योमन्" इत्यक्षरत्वश्रवणाच्च । अक्षरत्वं नामाविनाशित्वम् ।

तत्स्थानसाधनादेव भोग्यजातमप्यर्थसिद्धम् । "सर्वगन्धः सर्वरसः" "स पर्यगाच्छुक्रम्" "अपराजितमायतनम्" स गच्छत्यमितौजसं पर्यङ्कम्" इत्यादिभिः श्रुतिभिश्च । ब्रह्मणो मुक्तजनभोग्यत्वं च "रसो वै सः, रसं ह्येवायम्" इत्यादौ । एवंविधस्थानाद्यनङ्गीकारे श्रुत्यादिविरोधः ।

परमात्मात्नो विद्यागम्यत्वं च "ब्रह्मविदाप्नोति परम्" इत्यादिभिः । तस्यैव प्राप्यत्वोक्त्योपासनमपि सिद्धम् । विद्या च स्नेहपूर्वानुसन्धानरूपा गुणोपसंहारन्यायादुपसंहृतगुणा अहरहरावर्तनीया दहरादिशब्दवाच्या । न तु वाक्यार्थज्ञानमात्ररूपा; उपनिषत्स्वपि विद्युपासिध्यायतीनां पर्यायताश्रवणात् । तच्च "आवृत्तिरसकृदुपदेशात्" इत्यादिसिद्धम् । सैव भक्तिशब्दवाच्या ;

"स्नेहपूर्वमनुध्यानं भक्तिरित्यभिधीयते ।"
"पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ॥"

इत्यादिस्मृतिभिः ।

एवंविधविद्याया वर्णाद्युचितधर्मादिरङ्गम् ; "यज्ञेन" इत्यादिना यज्ञादेस्तत्र विनियोगात् । "नाविरतो दुश्चरितात्" इत्यादिभिर्धर्माभावे विद्यानाप्त्या परमात्मानाप्तिवचनाच्च । न च "न कर्मणा न प्रजया धनेन त्यागेनैके" "सर्वधर्मान् परित्यज्य" इत्यादौ विदुषो धर्मत्यागवचनान्न तस्य विद्याङ्गत्वमिति ; तत्र श्रुत्यादौ फलादित्यागमात्रचनात् । एवं विषयव्यवस्था च पूर्वोदाहृताङ्गत्वश्रुतेः ।

न च विदुषोऽनुष्ठानाननुष्ठानयोः श्रवणाच्चानुष्ठानाननुष्ठानयोः विकल्पः षोडशिग्रहणाग्रहणवदिति ; समुच्चयसंभवे विकल्पानुपपत्तेः । अत एव हि "विद्यां चाविद्यां च यस्तद्वेदोभयं सह" इत्यादौ उभयानुष्ठानोक्तिः । न च पाक्षिकाङ्गानुष्ठानपरा सा ; अपेक्षितविद्योपयोगिमृत्युतरणावान्तरफलश्रवणात् कर्मणः । मृत्युशब्दवाच्यविद्योदयविरोधि कर्म विदुषां संभवत्येवेति तन्निरसनमार्गश्च सर्वेषामपेक्षित एव ।

न च विद्योदयविरोधिपापनिरसनरूपफलसंभवे च न फलत्यागपरता ; त्यागशब्दस्य स्वर्गादिफलत्यागपरत्वात् । न च विनियोगे च न स्वर्गादिफलपरत्वमिति न तत्त्यागोपपत्तिरिति ; "आयुराशास्ते" इत्यादावायुरादिफलश्रवणात् तदुपपत्तेः । न चाङ्गफलत्यागपरत्वे विद्याविरोधिनिरासफलस्यापि त्याज्यता ; अवघातजवैतुष्यादेर्यागानुकूलत्ववत् तत्फलस्य विद्यानुकूलत्वेनात्याज्यत्वात् । एवंविधफलस्यापि नाभिसन्धानमिति च तत्त्यागवचनोपपत्तिः । अत एव हि "कर्मण्येवाधिकारस्ते" इत्याद्युक्तिः । इतिहासपुराणोपबृंहणादेव वेदार्थनिर्णय इति तदनुसारादेव हि त्यागश्रुत्यर्थो वक्तव्यः । सर्वकर्मत्यागश्च

दुरनुष्ठेय इति न तत्स्वरूपत्यागः। अत एव "न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः" इत्यादि।

एवमङ्गत्वानङ्गीकारे कर्मणां प्रधानत्वाङ्गीकारे च श्रुत्यादिविरोधः स्पष्टः; "तमेवं विद्वानमृत इह भवति" इत्यादौ विद्याया मोक्षसाधनत्वश्रवणात् "यज्ञेन" इत्यादौ कर्मणामङ्गत्वश्रवणाच्च। अङ्गत्वेऽपि "दर्शपूर्णमासाभ्याम्" इत्यादिष्विव विद्याया मोक्षसाधनत्वोक्तिश्चोपपन्ना; प्रधानस्यैव फलसाधनत्वात्।

एवंविधविद्यानुष्ठानं चाशरीरपातात्; "स खल्वेवं वर्तयन् यावदायुषम्" इति श्रुतेः।

एवंविधविद्याधिगमे प्रारब्धकर्मफलावसाने देहपातसमये च पूर्वापरसर्वपुण्यपापकर्मणां पुत्रादिषु दायवन्मित्रेषु शत्रुषु च संक्रमः। शताधिकया भगवत्प्रकाशितया नाड्या आदित्यरश्म्यनुसार्युपसृत्या अर्चिराद्यातिवाहिकगणैरमानवान्तैः क्रमेण पूर्वोक्ताप्राकृतदेशप्राप्त्या ब्रह्मणः सविभूतिकस्यानुभाव्यत्वमिति भाष्यादिषूक्तप्रमाणादयो द्रष्टव्याः।

कारणवस्तुनो नारायणत्वं च सर्वविद्याशेषात् "सहस्रशीर्षं देवम्" इत्यनुवाकात्। तस्य सर्वविद्याशेषत्वं च लिङ्गभूयस्त्वाधिकरण इति सर्वं सुस्थम्।

जीवश्च नित्यो वस्तुभूतो ज्ञानस्वरूपो ज्ञाता अणुपरिमाणो ब्रह्मशरीरभूतः; तत्र नित्य इति देहेन्द्रियमनःप्राणबुद्धीनामात्मत्वनिरासः[1]। वस्तुभूत इति शून्यस्यात्मत्वनिरासः। ज्ञानस्वरूप इति तस्य पाषाणकल्पत्वनिरासः। ज्ञातेति ज्ञप्तिमात्रत्वनिरासः। अणुपरिमाण इति तस्य विभुत्वनिरासः। ब्रह्मशरीरभूत इति तस्य स्वातन्त्र्यनिरासः।

---

1. अत्र—

"देहेन्द्रियमनःप्राणधीभ्योऽन्योऽनन्यसाधनः।
नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नः स्वतः सुखी॥"

"सजातीयस्वसाध्यार्थनिरपेक्षात्मसिद्धयः।
सर्वे पदार्थास्तेनात्मा निरपेक्षस्वसिद्धिकः॥"

इत्यादिकमात्मसिद्धिवचनमनुसंधेयम्।

ननु लोकायतिकाभिमतो देह एवात्मा; 'मनुष्योऽहं, स्थूलोऽहं, गच्छाम्यहम्' इत्यात्मत्वेनाभिमताहमर्थस्य देहसामानाधिकरण्यप्रतीतेः। अहमर्थस्यैवात्मत्वमभिमतं प्रायेण वादिनाम्। सर्वैरपि वादिभिरात्माङ्गीकृतः। किंतु धर्मिस्वरूपमात्रे विप्रतिपत्तिः। तथाहि—शरीरमेवात्मेति लोकायतिकाः। तदेकदेशिन एव केचिन्मन इति। प्राण इत्यपरे। इन्द्रियाणीति परे। सर्वसमुदाय आत्मेति केचित्। बुद्धिसंततिरात्मेति बौद्धाः। तदेकदेशिनो माध्यमिकास्तु शून्यमात्मेति। पूर्वोक्तसर्वातिरिक्तो नित्यो विभुर्जड इति वैशेषिकादयः। शरीरपरिणाम इत्यार्हताः। ब्रह्मांश इति भास्करीयाः। अन्तःकरणप्रतिबिम्ब इति ब्रह्माज्ञानवादिनः। अन्तःकरणावच्छिन्न इति जीवाज्ञानवादिनः। अकर्ता चिच्छक्तिर्भोक्तेति सांख्याः। ब्रह्मपरिणाम इति यादवप्रकाशीयाः। प्रामाणिकास्तु राद्धान्तोक्तप्रक्रियया। अतो भवत्यात्मनि विप्रतिपत्तिः।

न च देहस्यैवात्मत्वे चैतन्यानुपपत्तिः; भौतिकत्वात् तस्य, भूतेषु तदनुपलब्धेरिति—मद्यादिद्रव्यस्य भौतिकत्वेऽपि मदशक्तिवत् सहकारिवशाच्चैतन्योत्पत्तिविनाशोपपत्तेस्तस्य। न च "मम देहः" इति पृथक्त्वप्रतीतेः घटादेर्द्रष्टुरन्यत्ववदित्यनुमानात् तदतिरिक्तता; अनुमानस्य पृथक् प्रमाणत्वानङ्गीकारात्। 'मम' इति तत्प्रतीतिव्यवहारयोः 'शिलापुत्रकस्य शरीरम्' इतिवदप्युपपत्तेः। 'स्थूलोऽहम्' इति स्फुटप्रत्यक्षविषयत्वात् प्रतीतेरनन्यथासिद्धत्वात् तदैक्यम्। अनुमानस्य पृथक्प्रामाण्येऽपि धूमाग्न्योः प्रत्यक्षतो व्याप्तिग्रहणवदात्मतल्लिङ्गयोर्न व्याप्तिग्रह इति न ततस्तत्सिद्धिः। 'मम देहः' इति धीस्तु न पृथक्त्वविषयेत्युक्तम्। व्याप्तिग्रहणसमये आत्मनो वह्निवत् प्रत्यक्षतो ग्रहणे च नानुमानापेक्षा। अनुमानस्य प्रामाण्येऽपि सामान्यतो दृष्टाख्यानुमानं तु नाङ्गीकृतमिति न ततस्तत्सिद्धिः। न च 'यः पूर्वाब्दे द्रष्टा आसम्, स एवाहमिदानीमपि द्रष्टा' इति द्रष्ट्रैक्यप्रतिसन्धानात् देहस्य चोपचयापचयभाक्त्वेन भिन्नत्वात् तदनुपपत्तेः तस्य तदतिरिक्तत्वमिति—भूतविशेषसंघातस्वभावादेव तदुपपत्तेः। अतो न नित्यात्मसिद्धिरिति।

मैवम्। 'मनुष्योऽहम्'इत्यादिसामानाधिकरण्यधियो देहस्यात्मानं प्रत्यपृथक्सिद्धविशेषणत्वेन 'नीलमुत्पलम्' इत्यादौ नैल्यादेराश्रयतो भेदेऽपि तदुपपत्तिवत् तयोर्भेदेऽप्युपपत्तेरन्यथासिद्धत्वात्। नैल्यादेस्तदाश्रयव्यक्तेश्च प्रत्यक्षतः सिद्धिवत् देहतदतिरिक्तात्मनोर्न ततः सिद्धिरिति तु न; स्थूलाहंधीभ्यां तत्सिद्धेः। यथा

स्थूलधीः स्थूलत्वविषया, तथा अहंधीरप्यान्तराहमर्थविषया; अन्यथा अहमिति परदेहस्याप्यहंधीव्यवहारविषयत्वप्रसक्तेः। 'मम देहः' इति पृथक्त्वप्रतीतेश्च। न च शिलापुत्रकस्य शरीरमितिवत् तत्प्रतीतिः; शिलापुत्रकात् शरीरपृथक्त्वाप्रतीतेः तत्र व्यवहारमात्र एव भेदात्। अस्य चानौपचारिकत्वात् 'मम देहः' इति भिन्नविषयाधीः। अहमर्थस्य स्वापे देहादि-सर्वविषयप्रतीत्यभावेऽपि 'सुखमहमस्वाप्सम्' इति सुखप्रतीतिसंबन्धितया प्रबोधे प्रतिसन्धानाच्च तद्भेदः। न ह्यननुभूतं प्रतिसन्धीयते। न च देहस्यैव तत्प्रतिसन्धानविषयत्वम; तत्प्रतीतेरतथात्वात्।

देहस्य चैतन्यं चानुपपन्नमिति चेतनस्य तद्यतिरिक्तता घटादिवत्। भौतिकत्वात् तदनुपपत्तिः। न च भूतसंघातविशेषस्य चैतन्यम्; मृतदेहस्यापि तदविशेषात् तत्प्रसक्तेः। न च सहकारिविशेषात् तत्र तदुत्पत्तिः; विकल्पासहत्वात्। सहकारी किं प्रत्यक्षतोऽप्रत्यक्षतो वा सिद्धः? नाद्यः; अनुपलब्धेः। नापि द्वितीयः; प्रत्यक्षातिरिक्तप्रमाणानभ्युपगतेः। तदभ्यु-पगतावपि मृतचैतन्योत्पादकसहकारितद्व्यवहारलिङ्गयोर्न प्रत्यक्षात् व्याप्त्युप-लब्धिरिति नानुमानप्रवृत्तिः। प्रत्यक्षतः सहकारिसिद्धौ नानुमानमिति स्वोत्सृष्टबाणेन स्वहननवत् स्वोक्त्यैव स्वयमेव चार्वाको हतः।

[1]अथ सामान्यतो दृष्टानुमानात् सहकारिसिद्धिः, तर्हि घटतद्द्रष्ट्रोर्भेदवदहमर्थस्य देहद्रष्टुस्तत एव भेदः सिद्धः। न च सामान्यतो दृष्टादपि सिद्धिः; भूतचैतन्यसहकारिसामान्यव्याप्तिलिङ्गविशेषासिद्धेः। न च चैतन्याख्यकार्यविशेषदर्शनात् सहकार्याख्यकारणविशेषसिद्धिरिति — भूतचैतन्य-सिद्धावेवास्योत्तरत्वात्। भूतचैतन्यात् सहकारिविशेषसिद्धिः, सहकारिविशेषात् तच्चैतन्यसिद्धिरित्यन्योन्याश्रयणं च। उपलभ्यमानस्य चैतन्यस्य देहातिरिक्तात्म-संबन्धादप्युपपत्तेः नानन्यथासिद्धिश्च। मद्यादेर्मदशक्तिस्तु प्रत्यक्षसिद्धसह-कारिवशात् द्रव्यविशेषस्वभावतो वोपपद्यते। मृतदेहादेः संघातविशेषत्वेऽपि केवलभूतेषु चैतन्यमनुपलब्धमिति वैषम्यम्।

'य एवाहं बालः, स एवाहं वृद्धः' इति प्रत्यभिज्ञाप्रत्यक्षादपि तदति-रिक्तत्वम्। न च देहस्य तद्विषयत्वम्; उपचयापचयात् भूतसङ्घातभेदात्

---

1. सामान्यता दृष्टानुमानात् विशेषासिद्धिरात्मसिद्धौ प्रतिपादिता। सापीहानुसंधेया।

तस्य तद्विषयत्वानुपपत्तेः । न चोपचयादितो देहवैरूप्येऽपि 'सोऽयं पुरुषः' इति प्रत्यभिज्ञावत् तत्प्रत्यभिज्ञोपपत्तिः; 'सोऽयम्' इति धियो देहविषयायाः सादृश्यनिमित्तत्वात् । व्याध्यादिना देहस्यात्यन्तवैसादृश्येऽप्यहमर्थविषयैकरूप्यात् नात्र सादृश्यनिबन्धना सा । न हि देहस्य सादृश्यनाशे प्रत्यभिज्ञाविषयत्वम्; 'सोऽयमिति न ज्ञायते, आकारवैरूप्यात्' इति लोकप्रतीतेः, व्यवहाराच्च । बाल्ययुवत्वादिविशेषणानामपायेऽपि सर्वत्राहमर्थान्वयस्मृतेः 'अहं बालो युवा' इति तद्विशेष्यैक्योपपत्तिः । देहस्य तु तद्धर्मत्वेऽप्युपचयादिभेदात् नानुवृत्तिरिति न तदनुवृत्तिः । देहोऽप्यात्मविशेषणमित्यन्यत्र साधितत्वाद्बाल्यादिधर्मवदस्थायित्वेऽपि 'देवोऽहम्' इत्यादिविशिष्टतयानुसन्धानं चोपपन्नम् ।

न च 'मनुष्योऽहम्'इत्यादिधियो यथार्थत्वादनात्मन्यात्मबुद्ध्यभावादहंधियोऽहमर्थस्यैव विषयत्वाभिधानाच्च न संसारप्रवृत्तिरिति— अस्योत्तरं ख्यातियाथार्थ्यनिरूपणप्रकरणे उक्तम् । अतः अहमर्थस्यैवाहंधीविषयत्वमिति विवेकिजनज्ञेयत्वात्, तस्यापहतपाप्मत्वाद्यसाधारणस्वरूपस्य शास्त्रैकसमधिगम्यत्वात् तदज्ञाने संसारप्रवृत्त्युपपत्तिश्च ।

किंच जातमात्रस्य प्रथमं स्तन्यपाने प्रवृत्तिदर्शनाच्च तस्य देहातिरिक्तत्वम् । अनुभवाद्धि स्थाय्यात्मनि संस्कारोत्पत्तौ कालान्तरे तद्विषयसजातीयदर्शनात् स्मृत्युत्पत्तौ तद्विषयरागादेव तत्र प्रवृत्त्युपपत्तिः; ज्ञातफलरसविशेषस्य तथा प्रवृत्तिदर्शनात् । तदयं प्रयोगः—जातमात्रो बालः स्तन्यरसज्ञ एव तत्पाने प्रवृत्तः, विशिष्टप्रवृत्तिमत्त्वात्, ज्ञातफलरसविशेषः तदादानप्रवृत्तिमान् स्थविर इव, इति । न च देहस्वभावात् तज्ज्ञानप्रवृत्त्यादि; अननुभूतफलरसादौ तददर्शनात् । एवमनुमानादपि देहातिरिक्तात्मसिद्धिः ।

अन्यानुभूतस्यान्येन प्रतिसंधानानुपपत्तेरेव देहत्वानुपपत्तिश्च । अस्तु को दोष इति चेत्—'य एव गन्धघ्राता स एव रूपद्रष्टा' इति प्रतिसन्धानाद्गन्धरूपाभिज्ञैक्यप्रतीतिविरोधात् । न ह्यन्यानुभूतेऽन्यप्रतिसन्धिः ।

न चात्मत्वं मनसोऽपि; तस्यापि चक्षुरादिसहकारित्वेन चक्षुरादिकरणान्तर्भावात् । तस्य सहकारित्वं च चक्षुरादेः रूपाद्यर्थसंबन्धेऽप्यन्यमनस्कस्य तद्विज्ञानानुत्पत्तेः, अनन्यमनस्कस्य तदुपपत्तेश्चेति ।

न च प्राणस्याप्यात्मत्वम्; तस्य देहेन्द्रियधारणकारणत्वेन चक्षुरादिसाधर्म्यात् । 'मनोऽहम्, प्राणोऽहम्' इति मनःप्राणयोर्नाहमर्थसामानाधि-

करण्यं च । प्राणस्य देहाद्याधारत्वं चोन्मेषादिव्यापारात् सिद्धम् । आगमाच्च तदाधारत्वं सिद्धम् । स च भाष्यादौ । अपौरुषेयस्य वेदस्य चार्वाकोक्तार्थासंस्पर्शित्वदूषणं तु स्वतःप्रामाण्ये निरस्तम् ।

न च देहादिप्राणान्तसमुदायस्यात्मत्वम्; समुदायस्य समुदाय्यनन्यत्वात्; नानात्वे पूर्वोक्तप्रतिसन्धानानुपपत्तेस्तदवस्थत्वात् । समुदायस्यान्यत्वेऽपि समुदायिदेहादेरपचयादिना प्रतिदिनं भिन्नत्वात् समुदायस्यापि तथात्वे प्रतिसन्धानानुपपत्तिस्तदवस्था । एवं चार्वाकानां मतभेदात् देहेन्द्रियमनः-प्राणतत्समुदायानामन्यतमस्याभिमतात्मत्वनिरास उन्नेयः ।

न च बौद्धाभिमता बुद्धिसंततिरेवात्मा; तासां भिन्नत्वे प्रतिसन्धाना-नुपपत्तेरेव । बुद्धीनां क्षणिकत्वमिष्टम् । न चास्या अपि सादृश्यादेः स्थायितेष्टा । अस्थायित्वे च न प्रतिसन्धिः । 'बुद्धिर्मे जाता ; जानाम्यहम्' इति ज्ञानापरपर्याय-बुद्धेरहमर्थातिरिक्तत्वप्रतीतेश्च नात्मत्वम् । न च तत्संततिश्च संतानिभ्यो भिन्नेष्टेति न ततोऽपि प्रतिसंध्युपपत्तिः ।

न चाहमर्थस्य ग्राहकस्य ग्राह्यस्य च घटादेर्भ्रान्तिसिद्धत्वानुज्ञा; ग्राह्यग्राह-कयोरबाधात् । तयोर्भ्रान्तिसिद्धत्वे ज्ञानस्यापि भ्रन्तिसिद्धता । न च निरधिष्ठान-भ्रमासंभवात् ज्ञानस्याङ्गीकार्यत्वम्; दोषाश्रयादेरपारमार्थ्येऽपि भ्रमोपपत्तिवन्नि-रधिष्ठानतयापि भ्रमोपपत्तेः ।

न च संस्कारात् प्रतिसन्धिः; तस्यापि स्थायित्वानभ्युपगतेः । न च तत्संततिजत्वमात्रात् प्रतिसन्धिः; विसदृशज्ञानानुदयप्रसक्तेः । तज्ज्ञानोत्पत्तेश्च कालान्तरे न प्रतिसन्धिः । तत्संतत्युच्छेदस्यैव मोक्षत्वा-ङ्गीकारात् तस्य चापुरुषार्थत्वान्न कस्यापि तत्प्रवृत्तिरित्यादि द्रष्टव्यम् ।

न चात्मनः शून्यत्वम्; प्रतीतिविरोधात् । प्रतीत्यनभ्युपगतौ प्रमाणा-भावान्न शून्यत्वसिद्धिः । प्रमाणाङ्गीकारे च कस्यचित् कंचनार्थं प्रति प्रवृत्तेः सुतरां न तत्सिद्धिरित्यादि द्रष्टव्यम् ।

[1]ननु नात्मा ज्ञानस्वरूपः, न नित्यं ज्ञाता च; सुषुप्त्यादिष्वात्म-तज्ज्ञानयोरप्रकाशात् । अप्रकाशत्वे चातत्स्वभावत्वनिश्चयः । सर्वदा ज्ञानाश्रयत्वमेव हि ज्ञातृत्वस्वरूपत्वम् । तदा चार्थेन्द्रियसंनिकर्षाज्ज्ञानोदयश्चा-

1. नन्विति । "ज्ञोऽत एव" इत्यधिकरणोक्तरीत्या पूर्वपक्षपरिहारादिकमत्र ।

नुपपन्नः। न च 'सुखमहमस्वाप्सम्' इति प्रबोधे स्वापकालीनयोः सुखानुभव-स्वानुभवयोः प्रत्यवमर्शात् स्वापेऽपि ज्ञानम्; 'न किंचिदहमवेदिषम्' इति स्वापकालीनज्ञानाभावप्रत्यवमर्शविरोधात्। 'सुखमहमस्वाप्सम्' इति तु स्वापहेतु-कपथ्याद्यविसुखविषयम्; यथेदानीं सुखं भवति तथाऽस्वाप्समित्यर्थः। अत एव हि "नाह खल्वयमेवं संप्रत्यात्मानं जानाम्ययमहमस्मीति" "न प्रेत्य संज्ञाऽस्ति" इति सुषुप्तमुक्तयोर्ज्ञानाभावप्रतिपादकश्रुती। तस्य ज्ञानज्ञातृत्वस्वरूपत्वे च सर्वगतत्वात् सर्वपदार्थसंबन्धाच्चेन्द्रियानपेक्षं सर्वज्ञानं स्यात्। सर्वगतत्वं च देशान्तरेऽपि सुखकार्यदर्शनात् तस्य चात्मसमवेतपुण्यादिफलत्वात्। समवायश्च तत्राप्यात्मसद्भाव इति सिद्धम्। न तत्राण्वात्मगमनकल्पना; गौरवात्। देहमात्रगमने तु तल्लाघवम्। दूरदेशे भोग्यपदार्थदर्शनाच्च तत्रादृष्टवदात्मसंयोगः। अदृष्टनिमित्ताद्धि तदुत्पत्तिः। न ह्यन्यत्रस्थादृष्टनिमित्तः सः। ज्ञप्तिमात्रवादेऽप्यविद्यादिना तत्तिरोधाने स्वरूपनाशः। अतिरोधाने सर्वदा सर्वत्र प्रकाशः। अतः सर्वगतो जड एवागन्तुकचैतन्य आत्मा। सर्वगतत्वे च "स वा एष महानज आत्मा" "नित्यः सर्वगतः स्थाणुः" इत्यादिश्रुतिस्मृत्यविरोधश्च। अन्यथा तद्विरोधः। "एषोऽणुरात्मा" इत्यादयस्तु मनसोऽणुत्वादात्मनस्तत्संबन्धनिमित्तत्वेनौपचारिक इति।

मैवम्। "विज्ञानम्" "प्रज्ञानघन एव" "जानात्येवायं पुरुषः" इत्यादि-श्रुतिविरोधात्। न चागन्तुकचैतन्येऽप्यस्याविरोधः; तच्छ्रुतावेवधारणश्रवणात्। न च गुणान्तरव्यावर्तकत्वादुपपत्तिः; सुखादेरप्यात्मगुणत्वाभ्युपगमविरोधात्। अतो ज्ञानज्ञातृत्वस्वरूपविधिः। तदभाव एव व्यावर्त्यः।

[1]एवंच "न विज्ञातुर्विज्ञातेर्विपरिलोपः" इत्यादिश्रुत्यविरोधः। "नाह खल्वय" इत्यादिश्रुतिस्तु मनुष्याद्याकारविशिष्टतयाऽहमर्थानुसन्धानतादितरबाह्यानु-सन्धानयोर्निषेधपरा। "अयमहमस्मीति, नो एवेमानि भूतानि" इति हि श्रवणम्। "न प्रेत्य संज्ञास्ति" इति मुक्तविषया श्रुतिरपि संसारावस्थानुभूतपदार्थस्मरणा-भावपरा। अत एव हि "नोपजनं स्मरन्निदं शरीरं" इति श्रुतिः। अन्यथा "सर्वं ह पश्यः पश्यति" इत्यादिमुक्तविषयश्रुतिविरोधः।

---

1. ननु जानात्येवेत्येवकारस्य विशेष्यसंगतत्वाभावेनान्ययोगव्यवच्छेदार्थ-कत्वायोगेऽपि क्रियासंगतत्वादत्यन्तायोगव्यवच्छेदार्थकत्वमेवास्तु। अतो न नित्य-ज्ञानसिद्धिरित्याशङ्कायाम्, विशेषणसंगतत्वप्रयुक्तायोगव्यवच्छेदार्थकत्वमेव प्रमाणान्तर-स्याप्यनुकूलमित्याह—एवञ्चेति।

वेद्यासंबन्धात् वित्तिस्फुरणाभावेऽप्यहमित्यहमर्थप्रकाशनाच्चात्मा ज्ञानस्वरूपः । ज्ञानत्वं नामान्यानपेक्षतया प्रकाशमानत्वम् । प्रदीपादयस्तु ज्ञानापेक्षप्रकाशा इति न स्वयंप्रकाशाः । तेषां प्रकाशव्यवहारो ज्ञानसहकारितामात्रात् । एतेनार्थवित्तिष्वेवाहमर्थस्य भानमिति पक्षोऽपि निरस्तः; अन्यदापि तद्धानस्यात्मसाक्षिकत्वात् ।

तथा "सुखमहमस्वाप्सम्" इति बाह्यान्तःकरणव्यापारोपरतावपि सुखधर्मितयाऽहमर्थस्यानुभूततया परामर्शाच्च तस्य ज्ञानज्ञातृस्वरूपत्वम् । न च, 'इदानीं यथा सुखं भवति, तथाऽस्वाप्सम्' इति परामर्शः; तस्यातथात्वात् ।

न च स्वापे मनसोऽपि संमीलनात् कथं सुखधर्म्यवगमार्थप्रतीतिः? सुखस्य ज्ञानभेदत्वात् अहमर्थस्य च संवित्स्वरूपत्वात् तत्प्रकाशे कारणान्तरानपेक्षत्वात् । संसारदशायां नित्यस्याप्यात्मधर्मभूतज्ञानस्य कर्मणा संकुचितत्वात् रूपादिविषयासंबन्धे तत्संबन्धार्थं चक्षुरादिकरणापेक्षा निःसरणे । तन्निःसरणापेक्षः तस्योदयव्यवहारः; तन्निवृत्त्यपेक्षो नाशव्यवहारश्च । तत्संकोचश्च "अज्ञानेनावृतं ज्ञानम्" इत्यादिना । अज्ञानं ज्ञानविरोधि कर्म;

"अविद्या कर्मसंज्ञान्या तृतीया शक्तिरिष्यते ।
यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा ॥"

इति वचनान्तरानुसारात् । आवरणमात्रोपदेशात् संसारदशायामपि नात्माश्रितज्ञानस्योत्पत्तिविनाशौ । न च "अज्ञानेनावृतं ज्ञानम्" इत्यत्र ज्ञानशब्द आत्मपरः "यया क्षेत्रज्ञशक्तिः सा" इत्यादिनैकार्थ्यात्; तत्र हि क्षेत्रज्ञाख्यशक्तेरेव कर्मवेष्टनं स्मर्यत इति;

"ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत् परम् ॥"

इत्युपरितनश्लोके ज्ञानस्याज्ञानावरणविषयस्य जीवेभ्यो व्यतिरिक्तत्वप्रतीतेः । तच्छ्लोकेऽपि ज्ञानस्यावरणमात्रव्यपदेशात् ज्ञानस्य नित्यता । तस्य परशब्दविशेष्यत्वस्मरणात् ज्ञानस्यापरिमितत्वं च सिद्धम् । तत्र परशब्दस्योत्कर्षपरत्वेऽपि सर्वदेशव्याप्तिरूपोत्कर्षपरत्वमेव । न चात्र परशब्द आत्मपरः;

स्वात्मनो ज्ञातृतयैव प्रकाशमानत्वात् स्वज्ञानविषयत्वेनाप्रकाश्यत्वात्[1] । 'प्रकाशयति' इत्यस्य प्रतिसंबन्धि तु सर्वं वस्तुजातमर्थात् संबद्धम् । एवंच स्वप्रभया बहुवस्तुप्रकाशकादित्यदृष्टान्तस्वारस्यम् । आदित्यस्य प्रकाशोऽपि न प्रभया; किंतु स्वत एव ; तेजस्त्वात् । प्रनष्टसर्वाज्ञानमुक्तविषया "सर्वं ह पश्यः पश्यति" इति सर्वज्ञत्वश्रुतिरपि । अत एव सर्वार्थसंबद्धज्ञानत्वमेव हि सर्वज्ञत्वम् । एवं सर्वार्थसंबन्धात् ज्ञानस्य सर्वगतत्वं च ।

न च "यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा" इति क्षेत्रज्ञाख्य-शक्तेरेव सर्वगतत्वात् ज्ञानतद्वेष्टनयोरश्रवणादन्यत्रापि तथात्वमिति ; जीवस्याणुत्व-मिति वक्ष्यमाणत्वात् । "अज्ञानेनावृतं ज्ञानम्" इत्यादिश्लोकार्थविरोधाच्च न तत्स्व-रूपावरणम् । अतस्तदनुसारात् क्षेत्रज्ञस्य शक्तिरिति षष्ठीसमास एवाश्रयणीयः । "माययापहृतज्ञानाः" इत्यादावपि ज्ञानस्यैवापहार उच्यते ; न तु स्वरूपस्य । तथात्वे विनाशो वा स्वरूपस्य विकारो वा संकोचाद्यः । तथाचाविनाशित्व-श्रुतिविरोधः । धर्मभूतज्ञानस्य तु संकोचाद्यविकारः प्रमाणसिद्धोऽङ्गीकृतः । तस्यापि स्वरूपविनाशो नाङ्गीकृतः; "न हि विज्ञातुर्विज्ञातेः" इत्यादिश्रुतेः । अतः सर्वार्थसंबन्धार्हं ज्ञानम् । अत एव हि संसारिजीवानामपि दूरस्थध्रुवादि-त्यादिसंयोगो ज्ञानस्य ।

[2]न च चक्षुरादिभिः संयोगाद्विषयाणामात्मनि ज्ञानोत्पत्तिः; पूर्वोदाहृत-ज्ञाननित्यत्वश्रुतिविरोधात्; 'घटो ज्ञातः' इति प्रतीतिविरोधाच्च । ज्ञानावच्छिन्न-मेव हि घटादि प्रतीयते । न च तत्प्रतीतिर्व्यवहारानुकूल्यमात्रात् ; तदानुकूल्य-स्यापि ज्ञानसंबन्धाधीनत्वात् । तस्य विषयासंबन्धे 'घटज्ञानम्, ज्ञातो घटः' इति तयोरन्योन्यव्यवच्छेदकता न स्यात् ।

न च देशकालविप्रकृष्टार्थविषयज्ञानस्यापि दर्शनाद्विषयाभावे संबन्धोऽनु-पपन्न इति; अतीतार्थसंबन्धघटकश्रुत्यादिप्रमाणसद्भावात् तद्द्वारा ज्ञानस्य तत्संबन्धोपपत्तेः । विषयाभावे ज्ञानोत्पत्त्यनुपपत्तेः दोषपरिहारश्च । न सा चक्षुःसंबन्धाधीनेति ।

---

1. अप्रकाश्यत्वादिति । इदमुपलक्षणम् । अज्ञानोच्छेदे सर्वज्ञानस्यैव प्राप्तत्वात् आत्ममात्रे संकोचायोगाच्चेति ।

2. ज्ञानस्य विषयसंयोगोऽनपेक्षित इति शङ्कां परिहरति—न चेति ।

न च निमित्तभूतघटादिना ज्ञानस्य जन्यत्वेन तयोरन्योन्यव्यवच्छेदकत्वम् ; सर्वकार्याणामदृष्टेश्वरादेरपि निमित्तत्वाङ्गीकारात् तस्य ज्ञानस्य चान्योन्यव्यवच्छेदकतापत्तेः ।

न चेश्वरादेः सर्वकार्यसाधारणकारणत्वात् असाधारणकारणघटादेरेव ज्ञानव्यवच्छेदकत्वादिरिति ; चक्षुरादेः रूपादिज्ञानासाधारणकारणत्वात् घटज्ञानमितिवत् चक्षुर्ज्ञानयोरन्योन्यव्यवच्छेदकत्वापातात् ।

लोकेऽपि न ज्ञानघटयोर्जन्यजनकतेष्टा । किंतु विषयविषयिभाव एव । विषयविषयित्वं च घटादेर्ज्ञानस्य च प्रकाश्यप्रकाशकत्वमेव । प्रकाश्यत्वे च तत्संबन्धोऽवर्जनीयः ।

प्रयोगश्च—'विमतं ज्ञानं घटादिसंबद्धमेव, ज्ञातो घट इत्यादौ विशेषणविशेष्यतया प्रतीयमानत्वात् ; शुक्लः पट इतिवत्'; 'ज्ञात इति व्यवहारो ज्ञानज्ञेयसंबन्धनिबन्धनः, संबन्धिव्यवहारत्वात्, संयुक्त इति व्यवहारवत्' इति । संबन्धश्च विषयज्ञानयोर्न जन्यजनकतेत्युक्तम् ; किंतु संयोगादिरेव । न च ज्ञानस्य गुणत्वम् ; आश्रयदेशादन्यत्र वर्तमानत्वात् । तच्च पूर्वोक्तविशेषणैः सोपपत्तिकैः सिद्धम् ।

आश्रयश्च "एषोऽणुरात्मा चेतसा वेदितव्यः" इति श्रुतेरणुरात्मा । न च मनःसंबन्धात् [1]तद्व्यपदेशः; लक्षणापत्तेः । देह एव अहमित्यर्थस्य प्रकाशादन्यत्राप्रकाशाच्च परिच्छिन्नत्वं सिद्धम् । परिच्छिन्नत्वेऽपि न देहपरिमितत्वम् ; स्थूलादिदेहप्रवेशे विकासादिविकारापत्तेः । अतोऽणुरेव । अणुत्वेऽपि [2]पादादिवेदनाप्रकाशो ज्ञानद्वारोपपन्नः ।

न च ज्ञानस्यानन्यापेक्षप्रकाशत्वे देहदेश एव प्रकाशोऽनुपपन्न इति—अनन्यापेक्षप्रकाशत्वस्य स्वसत्तयैव स्वाश्रयात्मन एव प्रकाशमानत्वरूपत्वादात्मनो देहैकदेशे हृदय एव स्थितत्वात् तदुपपत्तेः ।

---

1. तद्व्यपदेशः अणुत्वव्यपदेशः ।

2. पादादीत्यादि । 'पादे मे वेदना, शिरसि मे सुखम्' इत्येवमात्मानाधारशरीरप्रदेशसंबन्धिग्रहणमित्यर्थः ।

न चात्मनो ज्ञानस्वरूपत्वेन प्रकाशकत्वादर्थज्ञानाय न ज्ञानान्तरापेक्षेति; अहमर्थस्य ज्ञानस्वरूपत्वेऽपि प्रत्यक्स्वभावत्वात्। अणुत्वाद्धृदयदेशेऽवस्थितत्वात् घटाद्यर्थसंयोगाद्विषयप्रकाश स्वाश्रयायैवेति, आत्मसाक्षिकः 'सुखमहमस्वाप्सम्' इत्यादौ ज्ञातुरेवावभास इति च। ज्ञातृत्वविरहे न केवलात्मप्रकाशोऽस्त्येव ज्ञातृत्वस्य स्वरूपानुबन्धित्वेऽपि। तदप्यात्मसाक्षिकम्। 'जानामि' इति स्फुरणेऽपि ज्ञानं तदाश्रयाहमर्थात् पृथक्त्वेनैव प्रकाशते ज्ञानाश्रयतया, 'करोति' इत्यादौ क्रियातत्कर्त्रोरिव।

अतो विषयस्य ज्ञानाधीनप्रकाशत्वात् तस्य च तत्संयोगाधीनत्वात् संयोगस्य संसारदशायां कर्मणा संकुचितत्वेन देहाद्बहिर्गमनापेक्षत्वात् गमने च चक्षुरादयो द्वारम्।

न च ज्ञानस्य नित्यत्वेन सर्वदैकरूप्ये चक्षुराद्येकद्वारनिःसृतस्य सर्वार्थप्रकाशकत्वमिति; तस्यानित्यत्वपक्षेऽपि चोद्यपरिहारयोः समत्वात्। कथं न सर्वार्थविषयत्वमिति चोद्यं तावत् समम्। कार्यान्वयव्यतिरेकानुविधायित्वात् कारणकल्पनायाश्चक्षुराद्येकैककारणस्य सर्वार्थप्रकाशनरूपकार्यादर्शनात् कार्यभेदादेव नियतार्थप्रकाशकत्वमिति वक्तुं शक्यम्। नित्यसर्वगतसामान्यादेरपि व्यञ्जकसहकारिभेदात् क्वाचित्काभिव्यक्त्याद्व्यजन्यकार्यभेदवच्चोपपत्तिः।

एवं ज्ञानस्याश्रयादन्यत्र वर्तमानत्वेन मण्यादिप्रभावत् द्रव्यत्वमपि सिद्धम्। न च तैजसमण्यादेः प्रभात्वान्नाश्रयादन्यत्वमिति; तथात्वे विशीर्णत्वप्रसक्तेः 'स एवायं मणिः' इति प्रत्यभिज्ञाविरोधात्। न च ज्वालायामिव सा भ्रान्तिः; तद्वद्भेदसिद्धौ प्रमाणाभावात्। अतस्तेजोद्रव्यं प्रभातदाश्रयस्वरूपेण द्विरूपमेव। विशेषाकारेण व्यवस्थेति भवद्भिः परिहारो वक्तव्यः। एवं ज्ञानतदाश्रययोरपि अस्माभिरप्यात्माश्रितज्ञानस्य नित्यत्वसर्वगतत्वाज्ञानात् आवृतत्वावस्थायां प्रमाणतः सिद्धौ एकद्वारनिःसृतस्य सर्वार्थप्रकाशनरूपकार्यादर्शनात् सहकारिभेदादेव नियतार्थप्रकाशकत्वमिति द्वैरूप्यं संविदैकरूप्येऽपि। आश्रयाश्रयिभावोऽपि स्वभावादेव तैजसमणिप्रभयोरिव।

एवं द्रव्यत्वे गुणत्वव्यवहारस्तु गुणानामिव नित्यतदाश्रयत्वादिना। एवं ज्ञातृत्वसाधनप्रसङ्गात् ज्ञानस्वरूपमपि निरूपितम्।

न च 'न किंचिदहमवेदिषम्' इति ज्ञानाभावपरामर्शः; तस्यापि विषयनिष्ठत्वाभावपरत्वात्; अन्यथा अभावप्रत्यवमर्शानुपपत्तेः। अभावोऽपि ह्यनुभूत एव प्रत्यवमर्शयोग्यः।

न चात्मनः सर्वगतत्वमपि; देहदेश एव सर्वसुखाद्युपलब्ध्यनापत्तेः। न च देह एव मनःस्थितेस्तत्प्रत्यक्षसुखादेर्नान्यत्रोपलब्धिरिति; मनसोऽणुत्वादन्यत्र गमनोपपत्तेः। सुखादिहेत्वदृष्टं त्वात्ममात्रसमवेतम्; न तु देहावच्छिन्नांश इति। तत्तद्देहावच्छिन्नांशे मनसो देहस्थिति-नियमेऽपि मुक्तात्ममनसां तत्र तत्र सुस्थत्वाद्देहान्तरेष्वपि मनःसौलभ्या-ददृष्टवदात्ममनःसंयोगाविशेषाच्च सर्वत्र सर्वेषामेकरूपसुखाद्यापत्तिः। न च तेषां संयोगेऽपि स्वादृष्टमूलपरिस्पन्दावान्तराधीनत्वात् देहान्तराणां च स्वादृष्ट-मूलत्वाभावात् तन्मनसां च तदायत्तत्वात् न सर्वत्र तदुपलब्धिः, न च सुखाद्यैकरूप्यं चेति—अदृष्टस्य स्वत्वास्वत्वनियामकप्रमाणाभावात्। न च करणोपार्जितस्य स्वत्वम्; करणस्वत्वेऽपि नियामकाभावात्। न च बीजाङ्कुरवदन्योन्यस्वत्वापादकत्वेन कार्यकारणभावादविरोधः—अदृष्टादेः प्रमाणान्तरसाध्यत्वात्। स्वतःसिद्धकारणभाव एव हि बीजाङ्कुरन्यायावतारः।

न च सर्वगतत्वपक्षेऽस्मत्पक्ष इव न तस्य कस्यचिदेव कारणादेः सबन्ध इति सर्वस्य संबन्धाविशेषे तेन स्वत्वानियतिः। अस्मत्पक्षे त्वणुत्वेनादृष्टवतो न सर्वत्र संबन्ध इत्यदृष्टेश्वरदत्तकरणादेः स्वत्वम्।

अथ सर्वगतत्वपक्षेऽपि सर्वेषां सुखादिसाम्यदर्शनात् कारणाकारण-व्यवस्था कल्प्येति—न; कार्यात् कारणकल्पनायां सर्वत्र सुखादिकार्यकल्पनानुपलब्धेः क्वचिदेव तदुपलब्धेश्च तस्यासर्वगतत्वस्यैव कल्प्यत्वात्।

न च देशान्तरे सुखादिकार्यदर्शनात् तत्रापि तत्सत्ता; तत्र गमनादपि तदुपपत्तेः। तत्र गमने च तत्सिद्धिरिति गमनसिद्धिः। न चात्मनोऽपि गमनकल्पनागौरवम्; 'अत्र स्थितोऽहं तत्र गत्वा भोक्ष्यामि' इत्यहमर्थगमनस्यात्म-साक्षिकत्वात्। न च सा देहगमने भेदाग्रहाद्भ्रान्तिः; अबाधात्।

सर्वगतत्वेऽहमर्थस्य सर्वत्र स्फुरणापत्तिः। "तेन प्रद्योतेनैष आत्मा निष्क्रामति" "चन्द्रमसमेव ते सर्वे गच्छन्ति" इत्यादिना च गमनादेव भोगश्च श्रूयते।

न च गतिश्रुतिः लिङ्गदेहगतिपरा; आत्मशब्दविरोधात्। न च स देहपरः; तस्याप्रकृतत्वेन "एष आत्मा" इति परामर्शायोग्यत्वात्। मुख्यार्थसंभवे च न लक्षणा। न च "महानज आत्मा" इत्यादिना तस्य सर्वगतत्वप्रतीतेः गमनानुपपत्तौ न लक्षणा दोष इति; तस्या श्रुतेः परमात्मपरत्वात्। तच्च भाष्यादिसिद्धम्। न च देशान्तरेऽदृष्टनिमित्तभोग्यवृद्ध्यादिदर्शनात् तत्रादृष्टवदात्मसत्तेति; निमित्तस्योपादानकारणतत्संबन्धनियत्यभावात् पशुकामेष्ट्यादिना भाव्यदृष्टसंबन्धनिमित्तस्य पूर्वमेव सिद्धपश्वादेर्भोग्यत्वदर्शनात्। न च पश्वादिसंबन्धार्थैव तदिष्टिः; संबन्धमात्रस्यापुरुषार्थत्वात्। शरीरादिना हन्यमानपुरुषसंबन्धेऽपि तस्य निमित्तत्वाच्च। अनिमित्तत्वे च दोषाद्यभावः। तर्हीश्वरद्वारा आरब्धभोग्यसंबन्धः। न चात्मेश्वरयोरमूर्तयोः कथं संबन्धोपपत्तिरिति; अमूर्ततद्गुणसामान्ययोरिव तदुपपत्तेः। द्रव्ययोरवयवावयविनोरिव संबन्ध उपपन्नः। न चावयवावयविनोर्मूर्तत्वात् तदुपपत्तिः; अद्रव्ययोरमूर्तत्वे सर्वगतत्वान्न संबन्धोपपत्तिरिति—आत्मतत्सामान्ययोः सर्वगतयोरसंबन्धप्रसङ्गात्; अमूर्तस्य सर्वगतत्वाभावाच्च। न वा सर्वगतब्रह्मपरिणामत्वं मूर्तत्वम्, तद्रहितत्वममूर्तत्वमिति लक्षणात् तद्भाव इति; तयोस्तस्य लक्षणत्वे प्रमाणाभावात्। आत्मनोऽणुत्वेन तल्लक्षणमव्याप्तं च। तस्याणुत्वेनामूर्तत्वं श्राव्यते श्रुतिषु। तयोर्लक्षणं तु मूर्तिमत्त्वं मूर्तत्वम्; तद्रहितत्वममूर्तत्वमिति व्यापि। एवंचामूर्ततया प्रसिद्धाकाशादौ गुणादौ च तल्लक्षणसत्ता। एवममूर्तत्वेऽपि स्वसंबन्धोपपत्तिरात्मन इति तददृष्टनिमित्तदूरस्थभोग्यपदार्थानिर्वृत्तिः? परस्य जीवधिया संयोगश्च दारुवह्निवदन्तर्बहिर्निरन्तरतया व्यापनरूपः। अत एव "व्याप्य नारायणः स्थितः" इति श्रुतिः। अणुद्रव्यान्तर्व्याप्तिश्च तस्य अतिसौक्ष्म्यादुपपन्ना। अत एव हि तस्य "अणोरणीयान्" इति व्याप्तिसौकर्यात् श्रुतिः। अन्तर्व्याप्तौ हि व्यापकस्य सौक्ष्म्यमेवापेक्षितम्। व्याप्यत्वं च धार्यत्वनियाम्यत्वशेषत्वपर्यवसितम्, परस्य सर्वात्मत्वश्रवणात्। तदितरस्य तच्छरीरत्वश्रवणाच्च तत्सिद्धिः। धार्यत्वादेर्धारकत्वादेरेव हि शरीरत्वमात्मत्वं च। न च निरन्तरतया व्याप्तौ न वस्त्वन्तरत्वम्; प्रमाणाद्वस्त्वन्तरसिद्धेः।

ननु जीवस्य सर्वगतज्ञाने ग्राह्यत्वमिष्टम्। सर्वगतस्य परमात्मनः तत् कथम्? संयोगानुपपत्तेरिति। मैवम्। तज्ज्ञानस्य संकोचविकासार्हत्वेन प्रतिसंबन्धिपरमात्मदेशभेदापेक्षया पृथक्स्थित्यर्हतास्ति। यथा पक्षान्तरे

घटादेराकाशस्य च । तथाच संयोगात् तद्ग्रहणोपपत्तिः । नित्यमुक्तज्ञानानामपि तदर्हत्वाविशेषात् तदविशेषः । अपृथक्स्थितावाश्रयाश्रयिभावो द्रव्ययोर्वा द्रव्यगुणयोर्वा । पृथक्स्थित्यर्हयोस्तु द्रव्ययोः संयोग एव संबन्धः । गुणादेस्तु न द्रव्यात् पृथक्स्थित्यर्हतेत्याश्रयाश्रयिभाव एव ।

[1]सर्वगतत्वं च न सर्वमूर्तद्रव्यसंबन्धित्वम्; किंतु स्वेतरसमस्तद्रव्यसंबन्धित्वम् । तच्च व्याप्यतया व्यापकतया वा । व्याप्यतया प्रधानादेर्जीवज्ञानसंबन्धः । तथा जीवतज्ज्ञानानां प्रधानादेश्च परमात्मज्ञानाभ्याम् । व्याप्यत्वं च देशतः कालतो वा न्यूनत्वम् । व्यापकत्वं च ततोऽधिकत्वम् । अणोर्जीवस्य न्यूनत्वं देशतः संकोचाद्यर्हत्वतः; ज्ञानप्रधानादेर्देशकालाभ्यां न्यूनत्वम् । आधिक्यं तु परमात्मतज्ज्ञानयोरेव ताभ्याम् । ज्ञानविशिष्टपरमात्मनः सर्वव्याप्तौ तज्ज्ञानस्यापि निरुपाधिकतया सर्वगतत्वाद्व्यापकता च सिद्धा । परमात्मतज्ज्ञानयोस्तु सर्वगतयोरपि सर्वदा अपृथक्स्थितत्वादाश्रयाश्रयिभाव एव संबन्धः । स्फूर्तौ तु स्वप्रकाशत्वात् स्वत एवेति न प्रमाणान्तरापेक्षा तस्य । एतदात्मज्ञानयोरविशिष्टम् । पदार्थान्तरप्रकाशस्तु स्वधर्मभूतज्ञानात् । आश्रयप्रकाशस्तु स्वनिष्ठ एव । स्वभावतः संवित्त्वेपि ज्ञानस्य प्रकाशः स्वतः, न तु स्वस्मै । किंतु स्वसत्तया स्वाश्रयायैव स्वभावतः । आत्मनो न स्वसत्तायाः प्रमाणग्राह्यत्वापेक्षा; अहंप्रत्ययादेव सिद्धत्वात् । अणुत्वादिधर्मज्ञानेषु तु तदपेक्षा । अन्यात्मसु धर्मिष्वपि; तेषां पराहंप्रत्ययागृह्यमाणत्वात् । धर्मभूतज्ञानं विज्ञानत्वेऽपि स्वसत्तया स्वाश्रयाय प्रकाशमानं दृश्यते ।

ननु कथं स्वस्मै स्वयमिति आत्मतज्ज्ञानयोः संवित्त्वाविशेषेऽप्येतद्वैषम्यम्? [2]आत्मनो ज्ञानाश्रयत्वेन प्रधानत्वात्; ज्ञानस्य तदाश्रितत्वेनात्मार्थत्वात् । तयोर्विशेषः प्रत्यक्षसिद्धश्चेत्युक्तम् । जीवज्ञानानां परस्परसंबन्धे तेषां समव्याप्तिकत्वाद्व्याप्यव्यापकभाव आपेक्षिको द्रष्टव्यः, यथा श्यामत्वशाखाद्याहारपरिणत्योः । जीवतज्ज्ञानयोस्त्वाश्रयाश्रयिभावः संबन्धः; तयोरपृथक्स्थितत्वात् । एवं प्रभातदाश्रयादिष्वपि द्रष्टव्यम् । एवं प्रासङ्गिकमपि प्रकृतोपयोगीयनिरूपणम् ।

---

1. अमूर्तप्रधानादिसंबन्धनिर्वाहार्थं तार्किकोक्तरीतित्यागेनान्यथा निर्वक्ति—सर्वेति ।

2. समाधत्ते—आत्मन इति ।

नन्वात्मनोऽणुत्वे तस्य तद्गुणानां चाप्रत्यक्षत्वं पार्थिवपरमाणुगुणानामिवेति—न; पार्थिवाणुतद्गुणानामीश्वरादिप्रत्यक्षत्वात् । न च आत्मनोऽस्मदाद्यप्रत्यक्षता; पार्थिवाण्वादिष्वयोग्यत्वस्यावधृतत्वादिति—बाह्यार्थस्य चक्षुरादिविषयस्यैवास्मदादिप्रत्यक्षत्वात् पार्थिवाणुतद्गुणानां च तदनर्हत्वेनाप्रत्यक्षत्वात् । आत्मनस्त्वणुत्वेन चक्षुराद्यविषयत्वेऽपि संविद्रूपत्वेन स्वयंप्रकाशत्वात् प्रत्यक्षत्वोपपत्तिः । अत एव ह्यात्मनोऽहमित्यनन्यापेक्षः प्रकाशः । धर्मभूतज्ञानस्यापि ज्ञानत्वेनात्मानं प्रति स्वप्रकाशता । "स्वयंज्योतिः पुरुषः" इत्यादिश्रुतिश्चापि । अत एवात्र पार्थिवाद्यणुसाम्यापादनमनुपपन्नम् । ज्ञानमपि द्रव्यमेवेत्युक्तम् । सुखदुःखान्यपि तद्भेदा एवेत्युक्तम् । इच्छाद्वेषा अपि मनोऽवस्थाविशेषा एव; नात्मगुणाः । धर्माधर्मौ नात्मगुणा इति वक्ष्यते । अतोऽणुस्वरूप एवात्मा ।

ननु "देहेन्द्रियमनःप्राणधीभ्योऽन्योऽनन्यसाधनः । नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नः स्वतः सुखी ॥" इति यामुनाचार्यैस्तस्य सर्वगतत्वमभिमतम् । श्रीगीताभाष्ये भाष्यकारैरपि "नित्यः सर्वगतः स्थाणुः" इत्यादौ तस्य सर्वगतत्वमेवेत्युक्तम् । क्षेत्रज्ञाध्याये च "अणुत्वं चास्य कर्मकृतम्" इति वदद्भिरणुत्वमस्वाभाविकमित्युक्तम् । अतो जीवाणुत्वमस्वभावत इति—तन्न, "ज्ञोऽत एव" इत्यत्राणुरेवात्मेत्युक्तत्वात् । व्यापीति यामुनाचार्योक्तिस्त्वचेतनान्तःप्रवेशयोग्यत्वपरा । अत एव हि प्रथमसूत्रे श्लोकस्थं व्यापीति पदमतिसूक्ष्मतया सर्वाचेतनान्तःप्रवेशनस्वभाव इति व्याख्यातम्; न तु युगपत् सर्वद्रव्यसंबन्धित्वमिति व्याख्यातम् । न चाचेतनान्तःप्रवेशार्हत्वमात्रात् सर्वगतत्वसिद्धिः; बहिः संबन्धित्वाभावात् । सर्वाचेतनान्तःप्रवेशेऽपि न गतिभङ्ग इति तात्पर्यार्थः । स चाचेतनान्तःप्रवेशोऽपि क्रमेण विद्यत एव । एवमेव "नित्यः सर्वगतः" इत्यादौ सर्वगतशब्दार्थः । "अणुत्वं चास्य" इत्याद्युक्तिरपि धर्मभूतज्ञानस्यान्यत्र कर्मणा संकोचाभिधानात् तद्द्वारा कर्मणा परिच्छिन्नत्वप्रतिपादनपरा । न च स्वरूपवैभवोक्तिर्भाष्यादौ; नापि कर्मणा स्वरूपसंकोचोक्तिश्च । "अनादि मत्परं ब्रह्म" इति ब्रह्मशब्दव्याख्यानावसर एव हि "अणुत्वं चास्य" इत्याद्युक्तिः । बृहत्त्वं चास्य ज्ञानादेरेवेति भाष्ये बहुश उक्तम् । अन्यथा ब्रह्मशब्दार्थे परस्माद्वैषम्यं नास्य । ब्रह्मशब्दमुख्यार्थत्वं च परमात्मन एवेति चोक्तम् । "स चानन्त्याय" इति न स्वरूपानन्त्यमुच्यते; किंतु तज्ज्ञानद्वारैवेत्युक्तम् । तच्छ्रुतिरेव हि "अणुत्वं चास्य कर्मकृतम्"

इत्युक्त्वा अनन्तरमुदाहृता । अतोऽणुत्वं चेति धर्मभूतज्ञानसंबन्धित्वश्रुतेरल्प-परिमाणत्वप्रतिपादनपरम् । अन्यथा स्वरूपसङ्कोचार्हविकासार्हत्वेन जीवस्य धर्म्यन्यथाभावलक्षणकार्यत्वं स्यात् । तथाच नित्यत्वश्रुतिविरोधः स्वोक्तिविरोधश्च ।

एवं ज्ञातृत्वसाधनादपहतपाप्मत्वादयोऽपि सिद्धाः । तथा कर्तृत्वमपि, जीवसंबन्धित्वश्रुतेः । "कर्ता विज्ञानात्मा" इति श्रुतिः । कर्तृत्वं च प्राण-देहाद्यधिष्ठानसामर्थ्यमेव । तच्च [1]मुक्तावस्थायामप्यस्तीति तस्य स्वरूपानु-बन्धित्वम् । तच्च भाष्ये श्रीगीताभाष्ये च स्पष्टम् । तस्य ज्ञप्तिमात्रस्वरूप-त्वपरवाक्यं चान्यार्थतया नीतम् ।

न च भास्कराभिमतं ब्रह्मांशत्वम । उपाधिसंबन्धिब्रह्मप्रदेश एव हि जीवोऽङ्गीकृतः । ब्रह्मणोऽपरिच्छेद्यत्वेनोपाधिगमने मुक्तत्वापातः । प्रथमोपाधितो यदि ब्रह्मणश्छिन्नत्वाङ्गीकारेण जीवत्वाङ्गीकारः, तर्हि विकारास्पदता ब्रह्मणः । जीवस्यादिमत्ता च । ततश्च ब्रह्मनिर्विकारत्वानादित्वश्रुतिविरोधात् स्वरूपोच्छेद इति मोक्षस्यापुरुषार्थतेत्यादि द्रष्टव्यम् । एतेन जीवाज्ञानवाद-[2]स्वाभाविकभेदाभेदवादावपि निरस्तौ ।

न च जीवाज्ञानवादिपक्षे उपपत्तिः; भास्करपक्षोक्तदोषादेव । अन्तःकरणगमनादौ प्रतिबिम्बानवस्थितेर्बन्धमोक्षयोरनवस्थितता हि समा । प्रतिबिम्बत्वे च प्रतिबिम्बस्य बिम्बाद्यनुकारित्वेन बिम्बाव्यतिरेकाद्ब्रह्मण एव परिच्छिन्नत्वादिदोषापत्तिः । ततश्च प्रतिबिम्बस्य जीवत्वोक्तिर्व्यर्था । बिम्बस्य च तथात्वं स्यात् । ततश्च स्वराद्धान्तहानिः । बिम्बस्याप्यवास्तवत्वे स्वरूपोच्छि-त्त्यादिदोषः । प्रतिबिम्बितत्वं च ब्रह्मणोऽनुपपन्नम्; अरूपिद्रव्यत्वाद्ब्रह्मणः । रूपवतः प्रतिबिम्बितता दृश्यते लोके । अन्यत् भाष्यादौ द्रष्टव्यम् ।

अतोऽस्मदुक्तप्रकार एव जीव इति सिद्धम् ।

स चासंख्येयः; प्रत्यक्षादितस्तथात्वप्रतीतेः । ते च त्रिविधाः बद्धा मुक्ता नित्याश्चेति ।

1. मुक्तेति । "स एकधा भवति त्रिधा भवति" इत्यादिश्रुतिबलादिति भावः ।
2. स्वाभाविकेति । वादोऽयं यादवप्रकाशस्य ।

कर्मनिमित्तदेहसंबन्धसंकुचितज्ञानाः जाग्रदाद्यवस्थावन्तो बद्धाः । ननु [1]पुण्यापुण्ययोः शास्त्रविहितनिषिद्धकर्मसाध्यत्वात् न कर्मणामेव पुण्यापुण्यता—न; यागादिकर्तरि हिंसादिकर्तरि च 'पुण्यं चरति, पापं चरति' इति प्रसिद्धेः कर्मणामेव पुण्यादित्वात् । पुण्यपापे एव धर्माधर्मौ ।

ननु कर्मणामेव पुण्यापुण्यत्वे क्षणध्वंसित्वेन तयोर्न कालान्तरफलसाधनत्वमिति—तन्न; भगवत्प्रसादाप्रसादद्वारा तेषां तत्साधनत्वोपपत्तौ जीवात्मगततया धर्माधर्मजन्यपुण्यपापकल्पनस्यायुक्तत्वात् । ननु "पुण्यपापे विधूय" इत्यादौ विधूननोक्तेस्तदुपपत्तये तदतिरिक्तो धर्माद्यर्थोऽङ्गीकार्य इति—सत्यम्; तथापि लोकप्रसिद्ध्यनुसारात् कर्मणामेव पुण्यादित्वम् । "पुण्यपापे विधूय" इत्यादौ पुण्यादिशब्दस्तु तज्जन्यार्थपरः । तदर्थयोश्च भगवत्प्रीत्यप्रीत्योः परमात्मगतत्वेऽपि तत्फलसंबन्धित्वेन जीवानां तद्विधूननोक्तिरप्युपपन्ना । "तृप्त एवैनमिन्द्रः प्रजया" इति "तस्मिन् प्रसन्ने किमिहास्त्यलभ्यम्" इत्यादौ च सर्वत्र फलदाता परमात्मैवेत्युक्तम् । अन्यत्र यागाद्यनन्तरमेव प्रीत्यादिजननेऽपि तत्फलानां विरुद्धानां युगपदनुभवानुपपत्तौ क्रमेणानुभवसंपत्तये क्वचित् प्राबल्यमुपेयमेव । "यदेव विद्यया करोति तदेव वीर्यवत्तरं भवति" इति श्रूयते च ।

ननु सांख्यपक्षनिरासाधिकरणे "ततश्च पुण्यरूपकर्मकारिणं स्वशासनानुवर्तिनं ज्ञात्वा धर्मार्थकाममोक्षैर्वर्धयते; शासनातिवर्तिनं च तद्विपर्ययैर्योजयति" इत्यादिभाष्ये धर्माधर्मयोः भगवत्प्रीतिफलत्वमुक्तमिति—तन्न; उत्तरोत्तरपुण्यपापयोः पूर्वपूर्वपुण्यपापनिमित्तत्वात् कृतपूर्वपूर्वपुण्यादीन् पुंस उत्तरोत्तरपुण्यादिभिर्योजयतीत्येवंपरत्वात् । "तदधिगम उत्तरपूर्वाघयोः" इत्यत्र हि "अघानि कृतानि पुरुषस्य वैदिककर्मायोग्यतां सजातीयकर्मान्तरारम्भरुचिं प्रत्यवायं च कुर्वन्ति" इत्यादि भाष्यम् । "ततः परिवृत्तौ कर्मफलशेषेण जातिं रूपं वर्णं बलं मेधां प्रज्ञां द्रव्याणि धर्मानुष्ठानम्" इत्यादिप्रमाणानि च । अतो धर्मं प्रति प्रीतो धर्मान्तरं कारयतीत्येवंपरं तद्भाष्यम् ।

1. पुण्येति । विहितकर्मजन्यो धर्मः । निषिद्धकर्मजन्योऽधर्मः । ते पुण्यपापे आत्मसमवेते इति तार्किकमीमांसकादयः . बुद्धिगते इति सांख्यादयः । देवताप्रीतिं स्वीकुर्वन्तोऽपीममंशं न त्यजन्ति । सिद्धान्ते तु आत्मादिगतमदृष्टं नैवेष्यते । पुण्यापुण्यपदार्थस्तु मीमांसकमत इव कर्मैव । तस्य तदैव विनाशित्वेऽपि भगवत्प्रीत्यादिकं द्वारभूतमिति ध्येयम् ।

ननु "प्रकृतिश्च" इत्यत्र "सकर्मसंस्कारम्!' इति भाष्यात् प्रलयकालेऽपि कर्मणा सह जीवस्थितिप्रतीतेः क्रियायास्तु नष्टत्वेन तदुपपत्तये तज्जन्यो धर्मादिरङ्गीकार्य इति—तन्न; तत्र कर्मशब्दस्य कर्मजन्यभगवत्प्रीत्याद्य-शक्तिपरत्वात्। अत एव हि "उत्तरपूर्वाघयोः" इत्यत्र "अघस्य विनाशकरणमुत्प-न्नायास्तच्छक्तेर्विनाशकरणम। शक्तिरपि परमपुरुषाप्रीतीरेव" इत्यादि भाष्यम्। प्रीत्यादेश्च यावत्फलप्राप्ति स्थिरत्वात् "सकर्मसंस्कारं तिष्ठति" इत्याद्युपपन्नम्। संस्कारस्थायित्वे तु वैदिकानां न विप्रतिपत्तिः। तथा प्राकृतदेहसंबन्धस्य कर्मनिमित्तत्वेऽपि।

मरणोत्तरकालीना स्वर्गनरकगमनावस्था, स्वर्गादिभोगावस्था, तत आवृत्त्यवस्था, गर्भावस्था, जननावस्था चेत्येताः प्रायेण जाग्रदवस्थान्तर्गताः; तासां तदवस्थालक्षणसद्भावात्। स्वर्गनरकगमने मार्गे कर्मभोगोऽस्त्येव; तत्र सुखदुःखयोः स्मरणात्। स्वर्गनरकभोगे तु न तद्भोगविप्रतिपत्तिः। तत आवृत्तौ योनिप्राप्तेः प्राक् न तद्भोगः; सुखादेरश्रवणादस्मरणाच्च। प्रयाणानन्तरकालं विज्ञानभ्रंशश्च स्मर्यते।

ननु स्वर्गादावृत्तावाकाशादिप्राप्तौ जन्मादिवचनाभावात् यद्यपि न कर्मभोग, तथापि व्रीह्यादिप्राप्तौ 'जायते' इति श्रवणात् स्त्रीयोनिप्राप्तेः प्रागपि कर्मभोग इति—तन्न; "यावत्संपातमुषित्वा" इत्यादिना प्रारब्धपुण्यकर्मणो भुक्ततया "रमणीयचरणाः कपूयचरणाः" इत्यादिना योनिप्राप्त्युत्तरकालमेव कर्मभोगप्रतीतेस्तत्र जन्मश्रुतेरौपचारिकत्वात्। न हि मध्ये भोग्यकर्मसंभवः।

अथ स्थावरशरीरस्य कर्मनिमित्तत्वान्मध्येऽपि तद्भोगसंभव इति—सत्यम्; तथापि पञ्चमाहुत्यपेक्षया शरीरोत्पत्तेस्तत्र प्रकृतत्वेन व्रीह्यादि-जनने तदाहुत्यपेक्षाभावात् तज्जन्मपरत्वानुपपत्तिः। कामं नरकादिनिवृत्तौ तद्भोगशिष्टपापसंभवात् पुण्यानुभवे तदनन्तरपापानुभव इति च जायन्त इति श्रुतिस्तत्परैव।

ननु हिंसानिषेधालम्भविध्योः सामान्यविशेषरूपत्वाभावेनालम्भस्य हिंसा-साधकत्वम्; आलम्भस्य क्रत्वर्थत्वादनेकविषयत्वात्। एकविषयत्वे हि विरोधो बाध्यबाधकता च।

न चालम्भस्य विधितः प्रवृत्तेर्न रागप्रवृत्तहिंसानिषेधविषयत्वमिति; आलम्भेऽपि फलरागप्रवृत्त्यविशेषात्। न च यागाद्यकरणविषयत्वात् तथेति;

यागाद्यकरणस्यापि विध्यर्थत्वाविशेषाद्विधितः प्रवृत्त्यापातात् । न च कामे फलकरणीभूतस्य यागादेर्विधिविषयत्वकरणत्वयोः प्रवृत्तेरौत्कट्यात् प्राथम्याच्च यागादौ रागात् प्रवृत्तिः; अफलार्थाङ्गानां त्वपूर्वमात्रार्थतेति विधित एव प्रवृत्तिरिति; करणस्यापि विध्यर्थत्वात् ।

अथ फलकरणत्वधीप्राथम्याद्रागात्तत्र प्रवृत्तिः, तर्हि परमसाध्यफल-करणेतिकर्तव्यताधीप्राथम्यादङ्गेष्वपि रागतः प्रवृत्तिरिति न तद्वैषम्यम् । यागादेः साध्यत्वं त्विष्टसाधनतयैवेत्युक्तं वाक्यार्थप्रदीपे; साधनत्वकरणत्वयोर्न भेद इति च ।

यद्यपि फलार्थता करणस्य विध्यर्थतैवाङ्गानाम्, तथापि न विधितः प्रवृत्तिः । अङ्गानां फलार्थत्वाभावेऽपि फलोपकारत्वाङ्गीकारात् तद्रागात् प्रवृत्तिसंभवः । त्रिकालाप्राप्तौ हि विधौ गौरवम् । उपकारकाधानादेरन्यतः प्रवृत्तिरङ्गीकृता ।

किंच यागस्य द्रव्यदेवतारूपत्वात् तस्मिन् रागतः प्रवृत्तौ तदन्तर्गते व्यवधानात् तत एव प्रवृत्तिरित्यालम्भस्यापि न पृथक् प्रयोजनापेक्षा ।

अथ फलं प्रति करणापेक्षायां यागानां व्यवधानान्न रागतः प्रवृत्तिरिति; तर्हि फलं प्रत्यपूर्वापेक्षया करणस्यापि व्यवधानान्न रागतः प्रवृत्तिः ।

करणे वा तदितिकर्तव्यतायां वा फलरागादेव प्रवृत्तिः; अन्यथा दुःखरूपप्रवृत्त्यनुपपत्तेः । लोके च साधनसाधनेष्वपि फलरागादेव प्रवृत्तिर्दृश्यते । नित्यकर्मणामपि अपरिमितफलत्वश्रवणात् तत एव च प्रवृत्तिः । फलश्रवणं च निर्वर्त्यसर्वकर्मोद्देशेनेति सर्वनित्यकर्मसंबन्धि ।

न च सर्वेषां काम्यत्वे न नित्यकाम्यवैषम्यम्; अकरणे प्रत्यवायतदभावाभ्यां तद्वैषम्यसिद्धेः । "वीरहा वा एषः" इत्यादिना नित्याकरणे प्रत्यवायश्च श्रूयते । शृङ्गग्राहिकया तदश्रवणे तु—

"विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥"

इत्यादौ सामान्यतः श्रूयते प्रत्यवायसंबन्धः । काम्याकरणे तदसिद्धिरेव; न प्रत्यवायः ।

अतः सर्वत्र रागादेव प्रवृत्तेरग्नीषोमीयालम्भस्य निषिद्धाभिचारात्मकश्येनात् न वैषम्यमिति व्रीह्यादिजननहेतुपापसंभव इति ।

तन्न ; अग्नीषोमीयालम्भस्य श्येनादिवत् परपीडैकप्रयोजनत्वाभावात् । तदेकप्रयोजनव्यापारे हि हिंसाशब्दप्रयोगः । तत्प्रतीतिश्च लोके । न तु सुखप्रवृत्तिप्रयोजनव्यापारेऽल्पदुःखहेतावपि । न हि शल्योद्धर्तुस्तादात्विकदुःखहेतुत्वप्रसिद्धिः ; प्रत्युत शल्योद्धरणात् पश्चाद्भाविसुखहेतौ रक्षकत्वप्रसिद्धिरेव । एवमत्रापि बहुक्लेशाश्रयपशुदेहविश्लेषपूर्वकबहुसुखाश्रयदेहार्थत्वात् संज्ञपनादिक्रियाया न हिंसात्वम् । देहादिप्राप्तिश्च "हिरण्यशरीर ऊर्ध्वं स्वर्गं लोकमेति" इत्यादिना । आर्थवादिकत्वेऽपि फलमिष्टम् "एनं ब्रह्मवर्चसेन पुनाति" इत्यादौ । तत्र कर्तृविशेषणपुत्रजननिमित्तस्य सद्भावेऽपि प्रवृत्तिशैघ्र्याय पुत्रगतपूतत्वादिस्वीकारवदत्रापि पशोः संज्ञपनप्रवृत्तिविघातकहिंसात्वभ्रान्तिनिवर्तनेनोत्तमदेहादिप्राप्तिफलांशाकारश्च युक्तः ।

न च पीडैकप्रयोजनाभिचारनिषेधवत् श्रृङ्गग्राहिकयाग्नीषोमीयोपालम्भनिषेधोऽपि ; येन प्रत्यवायफलकल्पना । अहिंसात्वादेव "न हिंस्यात्" इत्यस्य न तत्र प्रवृत्तिरित्युक्तम् । अत एव हि "न वा उ एतन्म्रियसे" इति मन्त्रे हिंसाफलमरणसद्भावेपि हिंसामरणाभावोक्तिपूर्वकं देवत्वादिप्राप्तिवचनम् । देहविश्लेषणेऽपि न हिंसा ; किंतु सुष्ठुगम्यमार्गैर्देवयानेव प्राप्नोषीत्यादि हि तस्यार्थः ।

यागस्यान्यार्थत्वेऽपि मन्त्रार्थवादप्रामाण्यात् पशोः स्वर्गादिफलसाधनत्वमपि ; यथा "किमत्राभद्रं तनो सह" इत्यादौ प्रतीयमानफलमध्वर्योरपि । यथा च नैमित्तिकपुरुषार्थवैश्वानरेष्ट्यां पूतत्वादेः पुत्रगतस्यापि फलस्य । अतः समविध्युद्देशवाक्ये पशोः फलाश्रवणेऽपि मन्त्रार्थवादसहितस्यैव वेदस्य प्रामाण्यम् । अनुपपत्त्यभावे अपेक्षया मन्त्राद्यर्थस्वीकारो युक्तः ।

अतः श्येनाग्नीषोमीययागयोर्वैषम्यं सिद्धम् । प्राभाकराभिमतश्येनाग्नीषोमीयवैषम्यं च चोद्यव्याजेन निरस्तम् । सर्वत्र प्रवृत्ती रागत एवेति चोक्तम् । शास्त्रकृत्यं त्विष्टसाधनावबोधित्वमेव । लोके तु प्रमाणान्तरात् तदवबोधः । तत्रापि प्रवृत्तिः रागादेव । एतत्सर्वं तृतीयाध्यायाद्यपादाधिकरणभाष्य उक्तम् ।

अतो मनुष्यादिजनने जीवान्तराधिष्ठितव्रीह्यादिसंश्लेषमात्रमेव । योनिप्रवेशोत्तरकालं तु कर्मानुभवो विद्यत एव । तत्र क्लेशादिस्मरणात्

तत्र पूर्वानुगतसुखादिविषयज्ञानमप्यस्त्येव । तथा जनने नरकेऽपि; तथा स्मरणात् ।

एताश्च जाग्रदवस्था एवेति सन्धिपादाद्य उक्तम् ।

बाह्येन्द्रियाणां प्रवृत्त्युपरतिः स्वप्नावस्था । मनसस्तु पूर्वाभ्यासात् प्रवृत्तिरस्त्येव । कथम्? स्मरणात् । देहेन्द्रियाणां तु पूर्वदेहेन्द्रियसमानजातीयानां भगवता सृष्टिरेव । तदवस्थामात्रस्थायितया तत्सृष्टानां तदवस्थामात्रस्थानुभाव्यकर्मनिमित्तानां तैरेवानुभवः । न तु मिथ्यात्वम्; तदर्थसृष्टिशास्त्रात् । न हि मिथ्यानां सृष्ट्युपपत्तिः । न चात्र "सृजते" इति शब्दस्य दर्शनपरता; अव्युत्पत्तेः; सृष्टिदर्शनयोः परमात्मजीवकर्तृकत्वेन भिन्नत्वाच्च । "तस्मिन् लोकाः श्रिताः" इत्यादिना परमात्मैव तत्स्रष्टेति श्रुतिः । न हि जीवस्य सर्वलोकाधारत्वम् । सृष्टिदर्शनयोरेकार्थत्वे जीवकर्तृकत्वे च स्वशिरश्छेदाद्यनर्थदर्शनं न स्यात् । अथ जीवस्यावशप्रवृत्तस्य दर्शनरूपा सृष्टिः; प्रमाणाभावात् । "अथ स्वप्ने" इत्यादौ "पश्यति" इति शुभाशुभनिमित्तद्रष्टृत्वेन जीवः श्रुतः । "पुष्करिण्यः सृजते" इत्यादौ हि परमात्मा श्रुत इति तद्भेदः स्फुटः । सृष्टपदार्थानां च तदवस्थास्वाभाव्यादस्थायित्वं कल्प्यत इति पश्चाददर्शनमदोषः । तदवस्थायामनुभवस्तु स्वप्रत्यक्षसिद्धः ।

न च तस्यानुभूतित्वान्न जाग्रदवस्थावैषम्यम् ; विषयास्थायित्वादिभिर्वैषम्यात् । न च पूर्वदेहेन्द्रियैस्तदर्थानुभवः; नियतशयनादिदेशे स्थितत्वेन गमनाद्यदर्शनात् । गमनादयो हि तदवस्थायां दृश्यन्ते । न च मनोमात्रसाध्यता; केवलस्य तस्य तदनुभवानां रूपादिज्ञानानां गमनादिकर्मणां चासाधनत्वात् । न च केवलस्य तत्साधनत्वम्; तत्प्रतीतिविरोधादेव; संसारदशायामिन्द्रियद्वारैव रूपाद्यर्थावच्छेदकत्वस्वभावात् ।

न च देहान्तरादेर्न सृष्टौ प्रमाणमिति; "कृष्णदन्तं पश्यति" इत्यादिश्रुत्यनुपपत्त्यैव कल्प्यमानत्वात् । कृष्णदन्तदर्शनादिर्हि चक्षुरिन्द्रियसाध्यः । न च पूर्वदेहस्थानुभवपदार्थानुपपत्तिः; तद्देहानामपि पूर्वदेहदेशसमीप एव सृज्यमानत्वात् । न च देहात् समनस्कात्मनो भोगार्थं बहिर्निष्क्रमणे प्राणादेरपि निष्क्रमणान्मरणं शङ्क्यम्; तदवस्थायां प्राणाद्यनिष्क्रमणेन परमात्मना देहस्य स्थाप्यमानत्वात् ।

न च संकुचितगृहादिदेशे विस्तृतदेशसृष्टयनुपपत्तिः; तद्योग्य-देशान्तरे सृज्यमानत्वस्य कल्प्यत्वात् । न चानेकार्थकल्पनागौरवम् ; अनन्यथा सिद्धश्रुतार्थोपपत्तौ तत्कल्पनायामप्यविरोधात् । न च सृष्टानां सर्व-पुरुषदृश्यत्वम ; तद्दृष्टयैवादृश्यस्वभावत्वकल्पनात् ।

मनसोऽप्युपरतिः सुषुप्तिः । "तमस्त्वज्ञानजम्" इत्यत्र निद्रायां मनस उपरतिः स्वप्ने च तदनुपरतिश्चोक्ता । सुषुप्तौ च नाड्यवच्छिन्नपुरीत-त्स्थितपरमात्मनि पुरुषस्य विश्रमः । तच्च भाष्ये स्पष्टम् । अर्धमरणं मूर्छा । सा च पदार्थदर्शनाभावात् न जाग्रत्स्वप्नावस्थान्तर्गता । मुखादिवैवर्ण्यात् न सुषुप्तिः । प्राणादिसद्भावान्न मरणम् । अतोऽवस्थान्तरमेव ।

सूक्ष्मदेहैः सह स्थूलदेहान्निष्क्रमणं मरणम् । प्रलयकाले परमात्मनि स्थितिरपि महासुषुप्तिरेव । किंतु सूक्ष्माचिन्मात्रसंबन्धः परमात्मन्येव । न तु नाडी पुरितत् तत्र स्थितेति । तच्च स्वप्नाधिकरणभाष्य उक्तम् । एवं संसारिणां तापत्रयाभिभूतत्वान्न तद्वन्तो मुक्ताः ।

पूर्वोक्तसंसारनिरसनसांख्यसाधनायत्तस्वरूपाविर्भावादिका मुक्ताः ।

तदनपेक्षनित्याविर्भावस्वभावादिका नित्याः । उभयविधाश्च तेऽनन्ता मताः; "य एनं विदुरमृतास्ते भवन्ति" "सदा पश्यन्ति" इत्यादेश्च बहुत्वप्रतीतेः । अतो मोक्षो न ब्रह्मतापत्तिः ; मुक्तौ भेदापायानुपपत्तेः । अन्यवस्तु-नोऽन्यभावश्चानुपपन्नः । भेदश्च श्रुतः "तयोरन्यः" इत्यादौ । "ब्रह्म वेद ब्रह्मैव भवति" इत्यादेस्तु सादृश्यादप्युपपत्तिः । "परमं साम्यमुपैति" इत्यादौ तदापत्तिः स्पष्टा । अपहतपाप्मत्वादिना जीवस्वरूपं च भगवत्स्वरूपसमानं श्रुतम् ।

साधनायत्तभवमोक्षाणामर्चिरादिमार्गादेव ब्रह्मप्राप्तिः ।

न च चतुर्मुखस्य प्राप्यत्वम्; "ब्रह्म गमयति" इति श्रुतिविरोधात् । प्राप्तारश्च द्विविधाः—परमात्मविशेषणस्वोपासकाः, परमात्मोपासकाश्चेति । तच्च भाष्येऽतिस्पष्टम् ।

केवलात्मोपासकानां तु नार्चिरादिना ब्रह्मप्राप्तिः; तत्क्रतुन्यायेन स्वस्वरूपस्यैव प्राप्यत्वेन ब्रह्मप्राप्त्यभावात् । अर्चिरादिना ब्रह्मैव हि प्राप्यतया श्रुतम् । केवलचिदुपासकानां तु "केवलं वा चिद्वस्तु" इत्यादि-भाष्येऽर्चिराद्यभाव उक्तः । श्रीगीताभाष्ये केवलात्मोपासनाद्युक्तिस्तु परमात्म-

विशेषणस्योपासनपरा; आर्चिरादिप्राप्त्यभिधानात् । तस्यापि ब्रह्मोपासकत्वसाधनमष्टमाध्याये ।

ननु देवी पद्मासना कस्यां कोटावन्तर्भूता? अत्र संशयः "यथा सर्वगतो विष्णुस्तथैवेयम्" इत्यादिना परमात्मन इव सर्वगतत्वादिसाधनात् परमात्मकोटावेवान्तर्भूता । "अस्येशाना जगतो विष्णुपत्नी" इत्यादौ नारायणस्येव जगन्नियन्तृत्वमपि श्रूयते । "त्वं माता" इत्यादौ जगत्कारणत्वमपि । तदनन्तर्भावे तस्या नित्यमुक्तान्तर्भावे जगद्व्यापाराभावे च पूर्वोदाहृतश्रुत्यादिविरोध इति । नापि तत् युज्यते; तथा सति परमात्मभेदप्रसक्तेः । "मध्ये परमात्मा व्यवस्थितः" इत्यादै परमात्मा चैक एव श्रुतः । "यतो वा इमानि" इत्यादौ कारणत्वमप्येकस्यैव श्रुतम् । तर्हि तस्या मुक्तान्तर्भावोऽस्तु इति चेत्—न; पूर्वोदाहृतप्रमाणविरोधात् । वेदार्थसंग्रहे दिव्यमहिष्या नित्यमुक्तव्यतिरिक्तत्वाभिधानाच्च । न च परमात्मजीवव्यतिरिक्तचेतनात्मवस्त्वङ्गीकारः । अतस्तस्याः कस्यां कोट्यामन्तर्भाव इति न विजानीम इति ।

मैवम्; तस्या वेदान्तेषु कारणत्वाश्रवणान्नित्यमुक्तान्तर्भावात् । सर्ववेदान्तोषु कारणवस्त्वैक्यप्रतीतेर्न कारणद्वित्वम् । वेदार्थसंग्रहादौ नारायणस्यैव जगत्कारणत्वमिति प्रसाध्य तस्य महिष्यादिसद्भावमात्रसाधनाच्च । अन्यथा श्रीतत्पत्योः साहित्यस्यैव कारणत्वे तन्मिथुनं जगत्कारणमित्युक्तिः स्यात् । न चैवं क्वचिद्भाष्यकृदुक्तिः । न च मिथुनाज्जगत्सृष्टिश्रुतिः । प्रत्युतैकस्मात् पुरुषादिशब्दनिर्दिष्टात् तत्संकल्पमात्रमूलैव सृष्टिः श्रुता पुरुषसूक्तादौ । "अद्भ्यः संभूतः" इत्यत्र परस्मादेव पुरुषाज्जगत्सृष्ट्याद्यभिधाय तस्य पुरुषस्य "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ" इत्यादिना लक्ष्मीपतित्वमुक्तम् । पत्नी च नैका; पूर्वोदाहृतात् पत्नीद्वित्वप्रतीतेः । "महीं देवीं विष्णुपत्नीम्" इत्यादौ मह्या अपि तत्पत्नीत्वमुच्यते । भाष्यकारेणापि श्रीभूमिनीलानायकत्वमप्युक्तम् "एवंभूतभुमिनीलानायक" इति वदता । अतोऽपि न तन्मिथुनकारणत्वम् । मिथुनशब्दश्चैकस्यैकस्याश्च साहित्ये प्रसिद्धः श्रुतो लोके; न त्वनेकाभिरेकस्य साहित्ये । न च तासु कयाचित् सहितस्य कारणत्वं विशेषतः श्रूयते । प्रत्युत "विष्णोः सकाशात्" इत्यादौ विष्णुमात्रस्य कारणत्वं स्मर्यते ।

ननु "त्वं माता सर्वलोकानां देवदेवो हरिः पिता" इत्यादौ मिथुनकारणत्वं स्मर्यत इति—तन्न; तत्प्रकरणस्य श्रीस्तुतिपरत्वेन तत्परत्वाभावात् । अनन्यथा-

सिद्धं हि प्रमाणम् । "विष्णोः सकाशात्" इत्यादि तु जगत्कारणत्वपरमेव । यत्र क्वापि स्तोत्राणां प्रमाणान्तरविरोधेऽपि मुख्यार्थस्वीकारे शेषांशभूतहलायुधस्यापि जगत्कारणत्वं स्यात् । प्रलम्बवधार्थं भगवता जगत्कारणत्वेन तत्स्तुतिः कृता—"तदर्च्यते वेत्सि न किं यदन्ते त्वय्येव विश्वं लयमभ्युपैति" इत्यादिना । शेषश्च नित्यसूर्यन्तर्गतत्वेन प्रसिद्धः । "ईशानमस्य जगतः स्वर्दृशम् । ईशानमिन्द्रम्" इत्यादाविन्द्रादेरपि स्तुतेर्जगदीशत्वं श्रुतमिति तस्यापि जगत्पतित्वापातः । अतः प्रमाणान्तरविरोधे स्तुतीनां न मुख्यार्थपरता । स्तोत्रगतत्वादेव "यथा सर्वगतो विष्णुः" इत्यादेस्तस्या न सर्वगतत्वपरता । [1]तथेत्यतिदेशरूपत्वाच्च न स्वतः सर्वगतत्वम् । स्वतः सर्वगतत्वे हि नातिदेशोपपत्तिः । अप्राप्तेऽह्यतिदेशः । अतिदेशे च न्यूनता नैयायिकजनप्रसिद्धा[2] । 'यथा चन्द्रस्तथा मुखम्' इत्यादिप्रयोगे च तथा दृश्यते । न हि सर्वात्मना चन्द्रसाम्यं मुखस्य । अतः सर्वगतज्ञप्तिद्वारा तस्याः सर्वगतत्वम् । ननु ज्ञानं स्वतः सर्वगतमिति तस्यापि नातिदेशापेक्षेति—तन्न; बद्धजीववत् तस्य संकोचशङ्केति तन्निरासायातिदेशोपपत्तेः । न च प्रजानां कारणत्वाभावे कथं मातृत्वव्यपदेशोपपत्तिरिति; परमात्मनः पत्नीत्वेन तदुपपत्तेः । न च पत्नीनां साक्षाज्जननीत्वनियमः; लोके तथात्वेनादर्शनात् । अजननीनामपि पितृपत्नीनां मातृत्वम् "पितृपत्न्यः सर्वा मातरः" इत्यादौ स्मर्यते । साक्षान्मातृत्वं च "पिताहमस्य जगतो माता" इत्यादौ भगवत एव स्मर्यते । तद्व्यपदेशश्च परस्य सर्वशरीरत्वात् तत्र मुख्यः । तस्यास्तु न सर्वशरीरत्वश्रवणमिति न तत्र मुख्यः । किंच तस्या मातृवत् सर्वप्राणिनां दोषसहिष्णुतया वत्सलत्वेनात्महिते प्रवर्तकत्वात् परमात्मना प्राणिरक्षणे पुरुषकारत्वेन नियुक्तत्वाच्च मातृत्वव्यपदेशः । ईशानत्वं तु परमात्मप्रसादात् तस्या युक्तमेव । यथा विष्वक्सेनस्य सर्वाधिपत्यम् । अतः परमात्मव्यतिरिक्तस्य न जगत्कारणत्वम् । तस्या द्वारशेषित्वेन सर्वाश्रितत्वोपपत्तिः; तस्याः परमात्मशेषत्वात् । तस्या अपि तथात्वान्न परमात्मनः सर्वशेषित्वहानिश्च । वेदार्थसंग्रहादौ महिष्या नित्यसूरिजनेभ्यः पृथगभिधानं गोबलीवर्दन्यायात् द्रष्टव्यम् । न हि बलीवर्दस्य न गोपदवाच्यता । तथापि 'गामानय

1. अतिदेशेति । श्रीमति रहस्यत्रयसारे उपदिश्यमानाधारात् अतिदिश्यमानाधारस्य विशेषो मध्यस्थसंमत इत्युपन्यस्य तात्पर्यवर्णनमत्रानुसंधेयम् ।

2. नैयायिका अत्र मीमांसका विवक्षिताः ।

बलीवर्दं च' इत्यादिप्रयोगोऽपि । एवं तस्याः सूरिजनान्तर्भावेऽपि पृथङ्निर्देशो वेदार्थसंग्रहे । लक्ष्मीपतित्वकथनं भूमिनीलापतित्वस्याप्युपलक्षणम्; तयोरपि तत्पत्नीत्वस्य सिद्धत्वात् स्वेनाप्यन्यत्रोक्तत्वाच्चेति सर्वं निरवद्यम् ।

नित्यपरापराश्रितं स्वाश्रयायार्थप्रकाशनसाधनं ज्ञानमिति ज्ञानलक्षणम् । तत्तु अन्यार्थतया पूर्वमेव प्रकाशितम् ।

अचिद्वस्तु च द्विविधम्—सत्त्वादित्रिगुणाश्रयं तद्विलक्षणं चेति । तत्र द्वितीयं प्राकृतहेयगुणरहितं परमात्मनित्यमुक्तजनसंकल्पानुगुणं देहेन्द्रियादिरूपेण परिणामस्वभावं नित्यं श्रुतिवाचामप्यपरिच्छेद्यवैभवं परमात्मनो मुक्तजनानां च भोगस्थानम् । तत्सद्भावश्च पूर्वमेव साधितः; तस्य नित्यत्वं च साधितम् ।

ननु देहेन्द्रियादिरूपेण परिणामित्वे कथं तस्य नित्यत्वमिति—तन्न; अवान्तरपरिणामेऽपि परमपदसंस्थानस्यापरिणामित्वेनोत्पत्तिप्रलयाभावात् । यथा [1]अण्डसंस्थानस्योत्पत्तिप्रलयभावः, तथा न तल्लोकसंस्थानस्योत्पत्तिप्रलयौ; अक्षरत्वश्रवणात् । तत्रावान्तरपरिणामश्च "एकधा भवति" इत्यादिश्रुतेः । सांकल्पिक[2]पित्रादिरूपपरिणाम एव हि तत्समुत्थानम् । अत एव हि तस्य महदादिभेदभिन्नत्वमपि सिद्धम्, देहाकारपरिणामश्रवणात् । देहसद्भावे च बुद्ध्यादिसद्भावः सिद्ध एव । देहादीनामपि परमात्मानुभवानुकूलत्वे सति न ततो दुःखित्वमित्याद्यन्यत्रोक्तम् । ननु तल्लोकस्य परमव्योमत्वश्रवणान्न पृथिव्याद्याकारत्वापीति—तन्न; 'अपराजिता पूः,' 'ऐरम्मदीयं सरः,' 'तदमृतम्,' 'अञ्जनहस्ताः' इत्यादौ पार्थिवादिसत्ताप्रतीतेः पृथिव्याद्याकारस्यापि सिद्धेः । श्रुत्यादिसिद्धार्थ एव भाष्यकारेण श्रीवैकुण्ठगद्ये तदाकारः प्रदर्शितः । स तु तत्र द्रष्टव्यः ।

आद्यं तु सत्त्वरजस्तमोगुणकम्; न तु सत्त्वरजस्तमसां साम्यावस्थैव; "सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः" इति तेषां गुणत्वप्रतीतेः; तदाश्रयस्य प्रकृतित्वप्रतीतेश्च । सत्त्वादीनि च प्रधानादिकार्योन्नेयानि, शास्त्रगम्यानि च ।

---

1. अण्डेति । यथा प्रलये अण्डं नश्यति, तथा परमपदाख्यो लोको न नश्यतीत्यर्थः ।

2. पित्रादीति । "संकल्पादेवास्य पितरः समुत्तिष्ठन्त" इति श्रुतिरभिहिता । यथा एकधाभावादिकं मुक्तिस्थाने, तथा अवतारदशायामिहापीति भावः ।

तच्च श्रीगीताभाष्ये स्पष्टम् । प्रधानं च स्वविकारमहदादिभेदात् एकोनविंशतिविधम् । तत्राद्यमनुद्भूतसत्त्वादिगुणम् । द्वितीयमुद्भूतसत्त्वादिगुणम् । तच्च अजामन्त्राधिकरण उक्तम् । बुद्धिलक्षणो महान् । महाभूतेन्द्रियकारणं वैकारिकादिभेदभिन्नो महद्विकारोऽहंकारः । सत्त्वगुणो वैकारिक इन्द्रियादिकारणमहंकारः । तामसो भूतादिर्महाभूतकारणमहंकारः । रजोगुणस्तैजस उभयानुग्राहकोऽहंकारः ।

वैकारिककार्याणीन्द्रियाणीतीन्द्रियलक्षणम् । देहव्यतिरिक्तत्वे सति प्राणधार्याणीति वा । तानि चैकादश—श्रोत्रत्वक्चक्षूरसनाघ्राणवाक्पाणिपादपायूपस्थमनोभेदात् । तत्र श्रोत्रादीनि पञ्च शब्दादिज्ञानसाधनानीति ज्ञानेन्द्रियाणि । इतराणि पञ्च वचनादिकर्मसाधनानीति कर्मेन्द्रियसंज्ञानि । श्रोत्रादीनि क्रमेण शब्दस्पर्शरूपरसगन्धज्ञानासाधारणकारणानि । वचनादानगतिविसर्गानन्दासाधारणकारणानि वागादीनि । मनस्तूक्तम् । एतेषामुत्पत्त्यादिषु श्रुतिरेव प्रमाणम्; अतीन्द्रियत्वात् । भौतिकत्वसाधनानुमानानि कालात्ययापदिष्टानि । तथा मनसो नित्यत्वसाधनमपि । वागादीनामिन्द्रियत्वानभ्युपगतिरपि प्राणसंवादादिश्रुतिविरुद्धा; "इन्द्रियाणि दशैकं च" इत्यादिस्मृतिविरुद्धा च । तान्यणुपरिमितानि; उत्क्रमणश्रवणाद्विभुत्वे निरस्ते मध्यमपरिमाणनियामकाभावात्; पार्श्वस्थैरनुपलभ्यमानत्वाच्च । अन्यत्तु भाष्यादौ ।

तामसाहंकारविकारः शब्दविशेषगुण आकाशः । आकाशविकारः स्पर्शविशेषगुणो वायुः । वायुविकारो रूपविशेषगुणं तेजः । तेजोविकारो रसविशेषगुणा आपः । अब्विकारो गन्धविशेषगुणा पृथिवी । इत्येवमेकोनविंशतिविधं प्रधानद्रव्यम् ।

ननु शब्दादयोऽपि प्रधानद्रव्यविकाराः, स्मृत्यादौ चतुर्विंशतिविधत्वप्रतीतेरिति—तन्न; तत्रैव तेषां गुणत्वस्मरणात्; गुणान्तरानाश्रयत्वे सति द्रव्यैकाश्रितत्वाच्च । न च कर्मस्वतिव्याप्तिः; तद्व्यतिरिक्तत्वस्यापि लक्षणान्तर्गतत्वेनेष्टत्वात् । एवंभूतसत्त्वादिगुणकप्रधानप्रभृति सर्वं द्रव्यमिति तत्तद्वस्तुविकारत्वप्रतिपादकागमाविरोधः । दिक्कालयोस्तु न द्रव्यत्वमित्युक्तम् ।

एवमतीन्द्रियार्थविषयश्रुत्यैव तत्त्वानामुत्पत्तिसिद्धौ सांख्यादिसिद्धत्वबुद्धिमूलानुमानादिना नानाद्रव्यतत्संख्याकल्पनमनुपपन्नमिति न वैशेषिकायुक्तद्रव्यतत्संख्यास्वीकारः ।

कर्मान्यत्वे सति द्रव्याश्रिता गुणा इति गुणलक्षणम् । न च द्रव्याश्रितेषु सामान्यादिषु अतिव्याप्तिः; सामान्यानां सादृश्याद्यगुणव्यतिरेकेण दुर्निरूपत्वात् । विशेषस्य स्वरूपेण दुर्निरूपत्वं च वक्ष्यते । ते चानन्ताः; सादृश्यादिगुणानन्त्यात् । परमात्मादिगुणानन्त्याच्च । शब्दस्पर्शरूपरसगन्धाः श्रोत्राद्येकैकेन्द्रियग्राह्याः । संख्यापरिमाणपृथक्त्वसंयोगपरत्वापरत्वाद्यगुणाः तत्तत्प्रतीतिव्यवहारसिद्धाः ।

न चैतेषां द्रव्याव्यतिरिक्तता; स्पर्शादिना द्रव्यप्रतीतावपि रूपाद्यप्रतीतेरन्धकारादौ । न च गुणातिरिक्तद्रव्यापलापः; रूपादिमत्पदार्थप्रतीतिव्यवहारविरोधात् । न च काल्पनिकमिथ्यार्थविषयस्तत्प्रतीत्यादिः; अबाधात् ।

ज्ञानेन संयुक्ताश्रयाश्रयिभावसंबन्धात् चक्षुरादिद्वारा संयुक्तद्रव्यागतरूपादयो गुणा गृह्यन्ते । संख्यादयस्तु रूपस्पर्शगुणैकाश्रयाः रूपादिग्रहणेन ज्ञानेन संयुक्ताश्रयाश्रयिभावसंबन्धात् । आश्रयाश्रयिभावस्वभावत्वं च पूर्वमेवोक्तम् ।

द्रवत्वगुरुत्वे आद्यस्पन्दनपतनकार्यैककल्प्ये । स्नेहस्तु चिक्कणस्पर्शेन संग्रहकार्यानुमेयश्च ।

यादृक्पदार्थोत्पाद्यः, तादृक्पदार्थहेतुः स्वयं तद्विलक्षणः संस्कारः । स च त्रिविधः—भावना, वेगः, स्थितस्थापकश्चेति । भावना ह्यनुभवजन्यज्ञानरूपा स्मृतिरूपज्ञानहेतुः । तदनभ्युपगमे स्मृतिज्ञानस्य नोपपत्तिः । वेगस्थितस्थापकौ च कर्मजन्यौ कर्महेतू तद्विलक्षणौ च । तत्संस्कारानभ्युपगमे शरादौ द्वितीयगमनाद्यनुपपत्तिः ।

धर्माधर्मौ तु शास्त्रैकसमधिगम्यविशेषावेवेत्युक्तम् ।

बुद्धिशब्दार्थो ज्ञानं महत्तत्त्वं वा । उभयथापि द्रव्यमेव । तदप्युक्तम् ।

सुखदुःखे अप्यानुकूल्याद्युपहितं ज्ञानमेव; तद्व्यतिरेकेणान्यार्थानुपलब्धेः । इच्छाद्वेषादयोऽप्यवस्थाविशेषज्ञानसंबन्धोपाधिजाः ज्ञानावस्थाविशेषा एव । एवं "विचिकित्सा श्रद्धा धृतिर्विधृतिः ह्रीरित्येतत् सर्वं मन एव" इति श्रुतेरप्यविरोधः । ज्ञानस्य तदवस्थानां च मनःसंबन्धाधीनत्वात् 'सर्वं मन एव' इत्यविरोध इति ।

न च केवलं तेषां मनोवस्थात्वम्; मनोवस्थात्वे आत्मनोऽप्रत्यक्षत्वप्रसङ्गात्। कामादयो हि स्वाश्रयाय ज्ञानवत् प्रकाशन्त एव। "इच्छा द्वेषः सुखं दुःखम्" इत्यत्र भाष्यकारैरप्यात्मधर्मत्वमिच्छाद्वेषादीनामप्युक्तम्।

शक्तिरपि गुण एव; गुणलक्षणभावात्। न च गुणकर्मणोरप्याश्रितत्वात् तस्या न गुणत्वमिति; तदसिद्धेः। ननु गुणकर्मवतो द्रव्यस्यैव यद्यपि कार्यकरत्वम्; तथापि प्राप्ताप्राप्तविवेकेनान्वयव्यतिरेकाभ्यां कर्मणामेव कार्यकरत्वस्य क्वचित् ख्याप्यमानत्वम्। उपलभ्यते हि शब्दादेः शक्तिविशेषः; कर्मणामपि सुखादिजनकत्वशक्तिश्चेति चेत्—तन्न; तेषां स्वाश्रयद्रव्यशक्तिसहकारित्वमात्रादन्वयव्यतिरेकोपपत्तेः। अतस्तेषां तदाश्रयत्वकल्पनानवकाशः। रूपादिधर्माश्रयत्वेन क्लृप्तपृथिव्यादिभिर्द्रव्यैरेव शक्त्याश्रयत्वनिर्वाहोपपत्तावन्यधर्मैकस्वरूपगुणादेः शक्तिधर्मित्वकल्पना चानुपपन्ना।

एतेन संख्याया अपि गुणकर्माश्रितत्वं प्रत्युक्तम्। 'एकादश प्रयाजान् यजति', 'चतुर्थमागमनम्, पञ्चममागमनम्' इत्यादिवैदिकलौकिकव्यवहारा औपचारिकाः। वर्णानामेव शब्दत्वात्, तेषां चाश्रयवदविनाशित्वेनाकाशादिद्रव्याश्रितत्वात् उच्चारणादेश्चाभिव्यञ्जकत्वात् अनेकाक्षराणां चैकार्थपरत्वोपाधितः 'एकः शब्दः' इत्यादिव्यवहारोपपत्तेश्चेति दिक्। न च सामग्रीव्यतिरेकेण शक्त्यनङ्गीकारः; स्फोटादिकार्यस्य मणिमन्त्रौषधादिसत्तायामजनकत्वदर्शनात् तदभावे जनकत्वदर्शनाच्च दाहकत्वशक्तिनिश्चयात्। न च मण्याद्यभावोऽपि सामग्री; अभावस्य केवलावस्थततत्पदार्थस्वरूपानतिरेकात्। जनकपदार्थस्वरूपस्य स्वस्यैव सामग्रीत्वानुपपत्तेरिति दिक्। "पराऽस्य शक्तिर्विविधैव श्रूयते" "शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः" इत्यादिप्रमाणाच्च।

सादृश्यमपि गुणः। न च गुणकर्मणोरप्याश्रितत्वात् तस्य पदार्थान्तरत्वम्; तदाश्रितत्वासिद्धेः। 'तद्रूपमिवास्य रूपम्, तत्कर्मेवेदं कर्म' इति गुणकर्मणोः सादृश्यप्रतीतिव्यवहारास्तु स्वाश्रयजनकद्रव्यसादृश्यनिमित्ताः; तयोर्द्रव्यात् पृथक्त्वेनानुपलभ्यमानत्वात् सादृश्याश्रयत्वानियमात्। अन्यथोपपत्तौ च न कल्पना। तदेव सामान्यम्। न च सामान्यस्यानुवृत्तिप्रतीतिव्यवहारसिद्धत्वात् सादृश्यस्य च तदभावात् पदार्थान्तरत्वमुचितमिति; सामान्यस्यैकत्वे पृथक्प्रवृत्तत्वे च प्रमाणाभावात्। न च 'गौर्गौः' इति सामान्यादिमत्सु पिण्डेषु अनुवृत्तिप्रतीतिव्यवहारात् तत्सिद्धिः; 'अयं ब्राह्मणः, अयं ब्राह्मणः' इत्यादिष्वप्यनुवृत्तिप्रतीतेरनुवृत्तैकसामान्यापातप्रसङ्गात्। अथ तत्र सन्तति-

विशेषजत्वाद्युपाधित एव तदैक्यधीर्व्यवहारश्चेति, गवादावपि सास्नादिककुदादिसंस्थानोपाधित एव 'गौर्गौः' इत्यादिव्यवहारः प्रतीतिश्च; संस्थानातिरेकिजात्यनुपलम्भात्। वस्तुसाधारणधर्मरूपसादृश्यापरपर्यायं संस्थानमेवानुवृत्तिधीहेतुः जातिरित्यर्थः। संस्थानाभिव्यङ्ग्यजातिवादिनाप्यभिव्यञ्जकत्वेन संस्थानविशेषाङ्गीकारात् तत एवानुवृत्तिव्यवहारादिसिद्धौ न वस्त्वन्तरकल्पनागौरवम्। अभिव्यञ्जकानि संस्थानानि सदृशान्येवाङ्गीकृतानि; अन्यथा सर्वत्र जात्यभिव्यक्तिप्रसक्तेः। एवं च तत्तद्वस्तुनिष्ठासाधारणसादृश्याख्यधर्मैरेवानुवृत्तिबुद्ध्याद्युपपत्तौ नाप्रामाणिकनित्यत्वसर्वगतत्वादिस्वीकारः। न च सादृश्यस्य 'तद्वत्' इति प्रतीतिसिद्धत्वात् सामान्यस्य 'तत्' इति प्रतीतिसिद्धत्वाच्च तद्भेदः; सादृश्याख्योपाधितो 'यथा गौः, एवं गवयः' इति प्रतीतेः अत्यन्तसौसादृश्यात् 'गौर्गौः' इति प्रतीतेरुपपत्तेः, अन्यत्र 'तद्वत्' इति प्रतीत्युपपत्तेश्चेति दिक्।

द्रव्यनिष्ठत्वैकस्वभावानां कर्मणां तु संस्थानाख्यासाधारणधर्माश्रयत्वाभावात् न जात्यभ्युपगमः। न हि 'इदमित्थम्' इति सधर्मतया प्रतीयते। 'अन्यत्' इत्येव गोत्ववच्छौक्ल्यादीनां प्रतीतिः।

अथ 'शुक्लः' इत्यनुवृत्तधियः का गतिः तत्सामान्यानङ्गीकार इति चेत्; श्रोत्रग्राह्यत्वोपाधितो वर्णेषु 'शब्दः शब्दः' इति प्रतीतिवत् स्पर्शरूपरसगन्धानां त्वगाद्येकैकेन्द्रियग्राह्यत्वोपाधिता गतिरिति ब्रूमः। लौहित्यशौक्ल्यकार्ष्ण्यानां तु तेजोरूपत्वादिरुपाधिः, "यदग्ने रोहितं रूपं तेजसस्तद्रूपम्; यच्छुक्लं तदपाम्; यत् कृष्णं तदन्नस्य" इति श्रुतेः। एवं गुणान्तरेष्वप्युपाधिरुन्नेयः। कर्मणस्तु अनुवृत्तधियः सदृशकारकजन्यत्वमुपाधिः। प्रसङ्गात् सामान्यस्य सादृश्यान्तर्भाव उक्तः; सादृश्यं गुण इति च। सादृश्यं तु प्रतिवस्तु भिन्नमिति न गुणसंख्यानियतिः; सत्यकामादिपरमात्मगुणानन्त्याच्च।

ननु गुणोपसंहारपादे "मन्त्रादिवद्वा" इति सूत्रभाष्ये द्रव्यगुणकर्मभ्यो व्यतिरिक्ततया जातिक्रमसंख्यासादृश्यान्युपात्तानीति न जातेः सादृश्यान्तर्भावः सादृश्यस्य गुणान्तर्भावश्चेति जातिसंख्याक्रमसादृश्यानां पदार्थान्तरत्वमभ्युपगतम्, यथा यागादिकर्मणां स्वर्गादिसाधनत्वाभिमतिरिति—तन्न; तत्र तत्र भाष्ये मन्त्रस्याप्युदाहृतत्वात् अर्थान्तरत्वप्रसक्तेः। क्रमश्चापुञ्जीभूतपदार्थावस्थामात्रमिति न पदार्थान्तरम्। जातिसादृश्यादेः पृथगुक्तिस्तु पूर्वमीमांसकमतानुसारात्।

तमोऽपि पृथिवीद्रव्यमेव । प्रभाप्रभावद्रूपेण तेजोद्रव्यवत् पृथिव्यपि तमोरूपपृथिवीमती । नालोकाभावस्तमः । पार्थिवानुसारिणी च छाया दृश्यते । आलोकवद्देशे तमोऽनुपलब्धिस्तु तस्यालोकाभिभवात् । तमसस्तु पदार्थावारकत्वं स्वभावतः । आलोकनिरपेक्षमेव तत्प्रत्यक्षम् । अत एव तदर्थं प्रभावत्त्वे सौरप्रभावत् पदार्थोपलब्धिहेतुत्वमिति न चोद्यावकाश इति दिक् ।

कारकव्यापारः कर्मेति कर्मलक्षणम् । तच्चोत्क्षेपणादिभेदभिन्नम् । अत एव पदार्थत्रयमेव । प्रमाणादीनामपि ज्ञानादिपदार्थान्तर्भावः । समवायश्च दुर्निरूपः; पदार्थान्तरसंबन्धार्थं समवायान्तरकल्पनायामनवस्थादुःस्थत्वात् । तस्य स्वभावात् पदार्थेषु गुणादिघटकत्वकल्पनायां तद्गुणादीनामेव तादृशस्वभावता कल्प्येति न धर्म्यन्तरकल्पनागौरवम् । आश्रयाश्रयिभावसंबन्धोऽपि गुणादेः सापेक्षतया स्थितिरेवेत्युक्तम् । तस्याः संबन्धत्वव्यवहारस्त्वौपचारिकः । अथ सदृशगुणादिमन्मुक्तात्मादिषु भेदज्ञानार्थं विशेषोऽङ्गीकार्य इति चेत्, तन्न; जातिगुणादेरेव भेदत्वात्; भेदस्य पृथक्त्ववादिनापि तदङ्गीकारात् तावन्मात्रेण व्यवहारसिद्धौ धर्मान्तरकल्पनानवकाशात् । मुक्तादीनां समानगुणत्वेऽपि देशाद्युपाधिलक्षणैस्तत्पृथक्त्वस्य सुज्ञानत्वादिति सर्वं सुस्थम् ।

इति
श्रीमदात्रेयनाथसूरिसूनुना मेघनादारिसूरिणा विरचिते
नयद्युमणौ
प्रमेयनिरूपणम्
॥ शास्त्रं च परिसमाप्तम् ॥
श्रीरस्तु



---

अधो निर्दिष्टः श्लोकः A मातृकाकोशे लेखकेन लिखितो दृश्यते—

"आदेयमेतदनसूयुभिरेव गुण्यै-
ग्रन्थस्य पङ्क्तिरसकृत् कुटिलापि दुष्टा ।
अस्यां बहुत्र मतिविभ्रमतोऽपराद्धं
सन्नारिकेलफलमध्यगतं यथाम्बु ॥"

सच्चक्रवर्तिवंश्यौ व्याकुरुतां वत्सगोत्रसंभूतौ
श्रीकृष्णवीरराघवसंज्ञौ स्निग्धौ नयद्युमणिम् ॥

शुभमस्तु



# अत्रोदाहृतानां ग्रन्थान्तरस्थवचनानामनुक्रमणी

## उदाहृतग्रन्थानुक्रमणी

## उदाहृतग्रन्थकारानुक्रमणी